वादये देवदत्तोऽहं भोः । आयुष्मानेधि भोः ३ । आमुष्मानेधि भोः । आयुष्मानेधि देवदत्त भो ३ । आयुष्मानेधि देवदत्त भो. । गोत्रे, अभिवादये गार्ग्यो-ऽहं भोः. कुशल्यसि गार्ग्य ३ । कुशल्यसि गार्ग्य । आयुष्मानेधि गार्ग्य ३ । आयुष्मानेधि गार्ग्य । राज-न्यविशोरपि गोत्रत्वमेव । अभिवादयेऽहमिन्द्रवर्मा भो । आयुष्मानेधीन्द्रवर्म ३ न् । इन्द्रवर्मन् । अभि-वादये इन्द्रपालितोहं भोः, आयुष्मानेधीन्द्रपालित ३ । इन्द्रपालित । नाम, अभिवादये देवदत्तोऽहं भोः, आयुष्मानेधि देवदत्त ३ । देवदत्त । स्त्रीशू-द्रवर्जन किम् ? अभिवादये गार्ग्यहं भोः, आयु-ष्मती भव गार्गि । अभिवादये तुषजकोऽहं भो', आयु-ष्मानेधि कुशल्यसि तुपजक । प्रत्यभिवादे इति किम् ? अभिवादये स्थाल्यहं भोः । आयुष्मानेधि स्थालि ३ । अभिवादयिताह खरकुटीवन्न ममेकारान्ता सज्ञा का तर्हि दण्डिवन्नकारान्ता । पुनर्गुरुराह आयुष्मानेधि स्थालि ३ न्, स पुनराह ईकारान्तैव मम सज्ञा, स प्रत्युच्यते, असूयकस्त्वमसि जाल्म । न त्वं प्रत्यभि-वादमर्हसि । भिद्यस्व वृषल स्थालि । भोगोत्रनाम्न इति किम् ? देवदत्त कुशल्यसि । देवदत्तायुष्मानेधि । पुनर्वाग्रहणमुत्तरवाधिकारनिवृत्त्यर्थम्॥१०१॥

## प्रश्नार्चाविचारे च संधेयसंध्यक्षरस्यादिदु-त्परः ॥ ७ । ४ । १०२ ॥

सधेयः सधियोग्यः य' क्वचित्स्वरे परे विकार-मापद्यते । प्रश्नेऽर्चायां विचारे प्रत्यभिवादे च वर्तमा-नस्य वाक्यस्य सबन्धिन स्वरेष्वन्त्यस्वरस्य सधेय-सध्यक्षरस्य प्लुतो भवन् आकार इदुत्पर' प्लुतो भवति । स च प्रत्यासत्त्या एकारैकारयोरिकारपर ओकारौकारयोरुकारपरो भवति । प्रश्ने, अगमः ३ पूर्वान् ३ ग्रामा ३ नग्निभूता ३ इ । पटा ३ उ । अदा ३ रतस्मा ३ इ । अपचा ३ इ । पटा ३ उ । अहौषी ३ रग्ना ३ उ । 'प्रश्ने च प्रतिपदम्' (७–४–९८) इति प्लुत' । अर्चा पूजा तस्यां 'दूरा-दामन्त्र्यस्य' (७–४–९९) इति प्लुतः । शोभनः खल्वसि अग्निभूता ३ इ । पटा ३ उ । विचारे, वस्तव्यं कि निर्ग्रन्थस्य सागारिका ३ इ उतानागा-रिके । प्रत्यभिवादे, आयुष्मानेधि अग्निभूता ३ इ । पटा ३ उ । आयुष्मन्तौ भूयास्तां देवदत्तजिनदत्ता ३ उ । प्रश्नार्चाविचारे चेति किम् ? आगच्छ भो अग्निभूते ३ । सधेयग्रहणं किम् ? कच्चि ३ त् कुशल ३ म् भवत्योः ३ कन्ये ३ । अगमः ३ पूर्वा-३ न् ग्रामा ३ नहो ३ भद्रकाऽसि गौ' ३ । आयु-ष्मानेधि भो ३ । संध्यक्षरस्येति किम् ? भद्रिकासि कुमारि ३ । वाक्यस्य स्वरेष्वन्त्यस्वर इति विज्ञाना-दिह न भवति । अगमः ३ पूर्वौ ३ ग्रामौ ३ देव-दत्त ३ ॥१०२॥

## तयोर्य्वौ स्वरे संहितायाम् ॥ ७ । ४ । १०३ ॥

तयोः प्लुताकारात्परयोरिदुतो स्थाने स्वरे परे सहितायां विषये यथासख्यं यकारवकारावादेशौ भवतः । अविरामः सहिता । अगम ३ अग्निभूता ३ यत्रागच्छ । अगम ३ अग्निभूता ३ यिहागच्छ । अगमः ३ पटा ३ वत्रागच्छ । अगम. ३ पटा ३ वुदकमानय । स्वे ग्दीर्घत्वस्यास्वे स्वरे ह्रस्वत्वस्य बाध-नार्थं वचनम् । स्वर इति किम् ? अग्ना ३ इ । पटा ३ उ । संहितायामिति किम् ? अग्ना ३ इ इन्द्रम् । पटा ३ उ उदकम् । अग्ना ३ इ अत्र । पटा उ अत्र । केचिदैदौतोश्चतुर्मात्र प्लुतमिच्छन्ति । ऐ ४ तिकायन । औ ४ पगव ॥१०३॥

## पञ्चम्या निर्दिष्टे परस्य ॥ ७ । ४ । १०४॥

पञ्चम्या निर्दिष्टे यत्कार्यमुच्यते तत्परस्य स्थाने

भवति । अतो 'भिस ऐस्' (१-४-२) वृक्षैः । प्लक्षैः । इह न भवति । मालाभिरत्र । निर्दिष्टग्रहणस्यानन्तर्यार्थत्वादिह न भवति । दृषद्भिः । व्यवहितेऽपि हि परशब्दो दृश्यते । यथा महोदयात्पर साकेतमिति । अत इत्यादौ दिग्योगलक्षणा पञ्चमी । तत्र पूर्वस्य च परस्य च कार्यं स्यादिति नियमार्थ वचनम् ॥१०४॥

**सप्तम्या पूर्वस्य ॥ ७ । ४ । १०५ ॥**

सप्तम्या निर्दिष्टे यत्कार्यमुच्यते तत्पूर्वस्यानन्तरस्य स्थाने भवति । 'इवर्णादेरस्वे स्वरे यवरलम्' (१-२-२१) । दध्यत्र । मध्वत्र । निर्दिष्टाधिकारादिह न भवति । समिदत्र । त्रिष्टुबत्र । व्यवहितेऽपि पूर्वशब्दो दृश्यते । मथुरायाः पूर्वं पाटलिपुत्रमिति । स्वर इत्यादौ औपश्लेषिकमधिकरणं पूर्वं परं च सभवति तत्र परमेव ग्राह्यमिति नियमार्थं वचनम् ॥१०५।

**षष्ठ्यान्त्यस्य ॥ ७ । ४ । १०६ ॥**

षष्ठ्या निर्दिष्टे यत्कार्यमुच्यते तदन्त्यस्य षष्ठीनिर्दिष्टस्यैव योऽन्त्यो वर्णस्तस्य स्थाने भवति न तु समस्तस्य । 'वाष्टन आ. स्यादौ' (१-४-५२) अष्टाभि. । अष्टासु ॥१०६॥

**अनेकवर्णः सर्वस्यः ॥ ७ । ४ । १०७ ॥**

अनेकवर्ण आदेशः षष्ठ्या निर्दिष्टस्य सर्वस्यैव स्थाने भवति । 'त्रिचतुरस्तिसृचतसृ स्यादौ' (२-१-१) तिसृभिः । चतसृभि. । सर्वस्येति निर्दिश्यमानापेक्षम् । तेन व्याघ्रपादित्यत्र 'पात्पादस्याहस्त्यादे·' (७-३-१४८) इति निर्दिष्टस्य पादशब्दस्य भवति न तु समुदायस्य । 'ऋतां क्ङितीर्' (४-४-११७) किरति । पूर्वस्यापवादोऽयम् । एवमुत्तरोऽपि ॥१०७॥

**प्रत्ययस्य ॥ ७ । ४ । १०८ ॥**

प्रत्ययस्थाने विधीयमान आदेश सर्वस्य भवति । सर्वे । अष्टौ । कति ॥१०८॥

**स्थानीवावर्णविधौ ॥ ७ । ४ । १०९ ॥**

स्थानं प्रसङ्गः । सोऽस्यातीति स्थानी आदेशी । आदेशस्थानिनोः पृथक्त्वात्स्थानिकार्यमादेशो न प्राप्नोतीत्यतिदिश्यते । आदेशः स्थानिवद्भवति स्थान्याश्रयाणि कार्याणि प्रतिपद्यते 'अवर्णविधौ' न चेत्तानि स्थानिवर्णाश्रयाणि भवन्ति । तत्र धातुप्रकृतिविभक्तिकृदव्ययपदादेशा उदाहरणम् । धात्वादेशो धातुवद्भवति । 'अस्तिब्रुवोर्भूवचावशिति' (४-४-१) भूवचोस्तृजादयो भवन्ति । भविता । भवितुम् । भवितव्यम् । वक्ता । वक्तुम् । वक्तव्यम् । प्रकृत्यादेशः प्रकृतिवत् । कस्मै । के । केषाम् । किमः कादेशे कृते सर्वादित्वात्स्मायादयो भवन्ति । विभक्त्यादेशो विभक्तिवत् । वृक्षाय । प्लक्षाय । राजा । अत्र स्यादित्वाद्दीर्घत्वं पदत्वं च भवति । पचेयम् । पचेयुः । अत्र त्याद्यन्तत्वात्पदत्वम् । कृदादेश· कृद्वत् । प्रकृत्य । प्रहृत्य । अत्र क्त्वो यबादेशे 'ह्रस्वस्य तः पित्कृति' (४-४-११४) इति तोऽन्तो भवति । अव्ययादेशोऽव्ययवत् । प्रस्तुत्य । उपस्तुत्य । अत्र 'अव्ययस्य' (३-२-७) इति सेर्लुप् भवति । पदादेशः पदवत् । धर्मो वो रक्षतु । धर्मो नो रक्षतु । पदत्वात्सो रुत्वम् । इवग्रहणं स्वाश्रयार्थम् । अन्यथा स्थानीत्यादेशस्य संज्ञा विज्ञायेत । तेन आहत आवधिष्टेत्यादौ 'आङो यमहन स्वेऽङ्गे च' (३-३-८६) इत्यनेनोभयत्राप्यात्मनेपदं भवति । अन्यथा वधेरेव स्यात् । अवर्णविधाविति किम् ? वर्णाश्रयो विधिर्वर्णविधिरिति समासस्याश्रयणाद्वर्णात्परस्य विधिर्वर्णे परतो विधिर्वर्णस्य स्थाने विधिर्वर्णेन विधिरप्रधानवर्णाश्रयो वा विधिर्वर्णविधिरिति सर्वत्रावर्णविधाविति प्रतिषेधो भवति । तत्र वर्णात्परस्य विधिः । द्यौ· ।

पन्थाः । स॰ । अत्र औत्वात्वत्यदाद्यत्वेषु कृतेषु स्थानिवद्भावाद्व्यञ्जनात्परस्य सेर्लोपः प्राप्नोति स न भवतीति । वर्णे परतो विधिः । क इष्टः । स उप्तः । अत्र य्वृति कृते 'घोषवति' (१–३–२१) इति रोरुत्वम् 'एतदश्च—'(१–३–४६) इत्यादिना सेर्लोपश्च न भवति । वर्णस्य स्थाने विधि॰ । श्रीर्देवतास्य श्रायं हविः । अत्रेकारस्य वृद्धौ कृताया स्थानिवद्भावादवर्णेवर्णस्य(७–४–६८)इति लोप प्राप्तो न भवति । वर्णेन विधि । उर. केण । उर॰ पेण । उरु )( केण । उर ⌣ पेण । अत्र सकारादेशाना विसर्जनीयजिह्वामूलीयोपध्मानीयानां स्थानिवद्भावप्रतिषेधादलचटतवर्गशसान्तरे इति णत्वप्रतिषेधो न भवति । व्यूढोरस्केन महोरस्केनेत्यत्र तु सकारे कृते स्वाश्रयः प्रतिषेध. प्रवर्तते । अप्रधानवर्णाश्रयो विधिः । प्रदीव्य । प्रसीव्य । अत्र स्तादीत्यन्यपदार्थस्याशितः प्राधान्यात् स्तोरप्रधान्यमिति स्थानिवद्भावप्रतिषेधो भवति । स्थानिवर्णाश्रयकार्यप्रतिषेधाच्चादेशवर्णाश्रयाणि स्थान्यनुबन्धाश्रयाणि च कार्याणि भवन्त्येव । आदेशवर्णाश्रयाणि । सर्वेषाम् । अत्र सामादेशे कृते सकाराश्रयमेत्वं भवति । स्थान्यनुबन्धाश्रयाणि । प्रभिद्य । निरुध्य । प्रणीय । प्रलूय । अत्र क्त्वो यबादेशे कृते स्थानिवद्भावेन क्ङितीति गुणप्रतिषेधो भवति । अनुबन्धा ह्यसन्त एव गुणाभावादिकं कार्यं कुर्वन्ति । अथ कथमग्रहीदित्यत्रेटो दीर्घत्वे स्थानिवद्भावादिट ईतीति सिचो लोपो भवति, वर्णविधिर्ह्येष. । उच्यते । नायं वर्णविधिः । विशिष्टं ह्येष समुदायमवर्णमाश्रयते इटं नाम । अथ शोभना दृषदोऽस्य सुदृषदित्यत्र जस्लुपः स्थानिवद्भावेनासन्तत्वात् 'अभ्वादेरत्वस. सौ' (१–४–९०) इति दीर्घ॰ कस्मान्न भवति । 'लुप्यय्वृल्लेनत्' (७–४–११२) इति प्रतिषेधात् । भ्वादिप्रतिषेधेन श्रूयमाणासन्तपरिग्रहाच्च न भवति । सुदृषद्वानित्यत्र तु इतिकरणसामर्थ्यादसन्तलक्षणो विन्न भवति ॥१०९॥

**स्वरस्य परे प्राग्विधौ ॥ ७ । ४ । ११० ॥**

स्वरस्यादेश॰ परे परनिमित्तको व्यवहितेऽव्यवहिते वा पूर्वस्य विधौ कर्तव्ये स्थानीव भवति । कथयति । अवधीत् । अत्राल्लुक॰ स्थानिवद्भावादुपान्त्यलक्षणा वृद्धिर्न भवति । स्पृहयति । मृगयते । अत्र लघूपान्त्यलक्षणो गुणो न भवति । पादाभ्यां तरति पादिक॰ । अत्र पद्भावो न भवति । शातनी । पातनी । अत्रानोऽस्य लुग् न भवति । धरणस्यापत्य धारणिः । रवणस्यापत्यं रावणि॰ । अत्र 'नोऽपदस्य'–(७–४–६१) इत्यन्त्यस्वरादिलोपो न भवति । स्रंस्यते । ध्वंस्यते । अत्र णिलुकः स्थानिवद्भावादुपान्त्यनकारलोपो न भवति । याज्यते । वाप्यते । अत्र य्वृन्न भवति । निरादनं पूर्वं निराद्य । समाद्य । अत्र जग्धादेशो न भवति । धात्यात् । अत्र वधादेशो न भवति । निगार्यते । निगाल्यते । अत्र 'नवा स्वरे' (२–३–१०३) इति पक्षे लत्वम् । चातुरौ । आनडुहौ । अत्र औत्वादेशस्य स्थानिवद्भावात् 'वाः शषे' (१–४–८२) इति वा न भवति । पादे । अत्र एत्वादेशस्य स्थानिवद्भावात्पद्भावो न भवति । उभयजन्यत्वेऽपि अन्यतरव्यपदेशात् ओत्वैत्वयो परनिमित्तत्वम् । अवीवदद्वीणा परिवादकेनेत्यत्र तु णिजात्याश्रयणादुपान्त्यस्य ह्रस्वो भवति । द्वाभ्यामित्यत्र तु निमित्तापेपेक्षया प्राग्विधावात्वेऽत्वस्य न स्थानित्वम् । 'वैकत्र द्वयो.' (२–२–८५) इति निर्देशात् । स्वरस्येति किम् ? अकाष्टाम् । अद्राष्टाम् । अत्र सिज्लोपो न स्वरादेश इति 'षढो. कः सि' (२–१–६२) इति कत्वे स्थानी न भवति । आगत्य । अभिमत्य । अत्र

पञ्चमलोपो ह्रस्वलक्षणे तकारे स्थानी न भवति। 'पर इति किम्? द्वौ पादौ ददाति द्विपदिका ददाति। अत्राल्लुचः परनिमित्तत्वाभावात् स्थानित्वाभावे पदादेशो भवति। प्राग्विधाविति किम्? बाभ्रव्यस्य छात्रा. बाभ्रवीयाः। अत्र 'तद्धितयस्वरेऽनाति' (२–४–९१) इति यलोपे परविधौ कर्तव्येऽवादेशः स्थानी न भवति। निधान निधि। तस्यापत्य नैधेयः। निधिक.। अत्र 'इडेत्पुसि चातो लुक्' (९–३–९४) इत्याकारलोपो द्विस्वरलक्षण एयणिकप्रत्ययविधौ परस्मिन् स्थानी न भवति। अन्यथा त्रिस्वरत्वात्प्रत्ययो न स्यात्। इलुकाया अदूरभवं नगरमैलुकम्। परिखाया पारिखम्। तत्र भव ऐलुकीयः पारिखीयः। अत्राण्याकारलोपः परविधौ कखोपान्त्यलक्षणे ईये स्थानी न भवति। पूर्वस्माद्विधिः प्राग्विधिरित्यप्याश्रीयते। तेन अधुक्षन्तेति 'स्वरेऽत' (४–३–७५) इति सकोऽकारलोपस्य परमप्यदादेशं प्रति स्थानिवद्भाव इति स न भवति। पूर्वत्रावर्णविधाविति प्रतिषेधाद्वर्णविध्यर्थ वचनम् ॥११०॥

### न संधिङीयक्विद्विदीर्घासद्विधावस्क्लुकि ॥७।४।१११॥

पूर्वेणातिप्रसक्त स्थानिवद्भाव प्रतिषिध्यते। सधिविधौ ङीविधौ यविधौ क्विविधौ द्वयोर्द्वित्वस्य विधौ दीर्घविधौ 'सयोगस्यादौ स्कोर्लुक्' (२–१–८८) इति स्क्लुक्वर्जितेऽसद्विधौ च स्वरस्यादेशः स्थानीव न भवति। 'लि लौ' (१–३–६५) इति यावत्सधिविधि। तत्र वियन्ति। अपयन्ति। अत्रेणो यत्व स्वरादेश परनिमित्तकः पूर्वविधौ दीर्घत्वे एत्वे च कर्तव्ये स्थानीव न भवति। तानि सन्ति, तौ स्तः। अत्रास्तेरल्लोपो यत्वे आवादेशे च कर्तव्ये स्थानी न भवति। वैयाकरण, सौवश्व। अत्र यत्ववत्वयो. स्थानिवद्भावाभावादैदौतोरायावादेशौ न भवतः। शिण्ढि, पिण्ढि। अत्र श्नस्याकारलोपो 'म्नां धुड्वर्गेऽन्त्योऽपदान्ते' (१–३–३९) इति वर्गान्ते कर्तव्ये स्थानी न भवति। शिषन्ति पिषन्ति इत्यत्र त्वनुस्वारे। जक्षतुः, जक्षुः। अत्र प्रथमत्वे घसेरुपान्त्यलोपः। निमित्तापेक्षयापि प्राग्विधिरिष्यते। तेन नयन लवनमित्यत्र गुणस्य स्थानिवद्भावप्रतिषेधादयवादेशौ सिद्धौ। स्थानिवद्भावे त्वियुवादेशौ स्याताम्। ङीविधौ, बिम्ब्याः फलं बिम्बम्। हेमादित्वादञ्। 'फले' (६–२ ५८) इति लुप्। ङ्यादेरित्यादिना ङीलुप्। तस्य परनिमित्तत्वेऽपि स्थानिवद्भावनिषेधात् 'अस्य ङ्यां लुक्' (२–४–८५) इत्यकारस्य लुग् न भवति। एवमामलक्याः फलमामलकम्। 'दोरप्राणिन' (६–२–४९) इति मयट्। पञ्चभिः खारीभिः क्रतः पञ्चखारः। 'क्रते' (६–३–१९०) इत्यण्। 'द्विगोः'– (६–१–२४) इत्यादिना लुप्। पञ्चेन्द्राण्योऽग्नाय्यो वा देवतास्य पञ्चेन्द्र। पञ्चाग्निः। अत्र 'देवता' (६–२–१०१) इत्यण्। तस्य लुपि ङीप्रत्ययस्यापि लुक्। तस्य स्थानिवद्भावप्रतिषेधात् तत्सनियुक्त आनागम ऐकारादेशश्च न भवति। यविधौ, कण्डूतिः। कण्डूयतेः क्तावतो लोप परनिमित्तको 'य्वोः प्वय्व्यञ्जने लुक्' (४–४–१२२) इति लोपे कर्तव्ये न स्थानिवद्भवति। सूर्येणैकदिक सौरी बलाका। अत्रैकोऽण्यकारलोपो द्वितीयो ङ्या तयोः स्थानिवत्त्वाद्यकारस्यानन्तरो ङीर्न भवतीति यलोपो न स्यात् स्थानिवद्भावनिषेधाच्च भवति। क्विविधौ, देवयतेः क्विप्, दयूः। लवमाचष्टे लवयते क्विप् लौः। अत्र णिलुगल्लुचौ क्विव्विधावूटि कर्तव्ये न स्थानिवद्भवतः। द्वित्वविधौ, दद्ध्यत्र। मद्ध्वत्र। अत्र यत्ववत्वयोः स्थानिवद्भावाभावादेकव्यञ्जनलक्षणं धकारस्य द्वित्वं

भवति। द्वित्वस्य संधिकार्यत्वेनैव स्थानिवद्भावप्रतिषेधे सिद्धे द्विग्रहणमसिद्धं बहिरङ्गमन्तरङ्गे इति न्यायबाधनार्थम्। तेनान्तरङ्गे द्वित्वे क्रियमाणे यकारवकारौ परपदाश्रितत्वेन बहिरङ्गावपि नासिद्धौ भवत । दीर्घविधौ, शामंशामम् । अशामि । शंशामंशंशामम् । अशंशामि । अत्र णिगन्ताघङन्ताच्च णिगि णम्ञिचो. परयोर्णिग्लुग्यङो लुक् च स्थानिवन्न भवति । असदधिकारे विहितो विधिरसद्विधि तत्र, यायज्यतेर्यायष्टिः । नाम्नि तिक् । पापच्यते. पापक्ति. । याजयतेर्याष्टिः । पाचयतेः पाक्ति । अत्राल्लोपणिलोपयोः स्थानिवद्भावप्रतिषेधात् षत्वकत्वे भवत । देहयतेर्देग्धिः । लेहयतेर्लेढि । अत्र णिलोपस्य स्थानिवद्भावप्रतिषेधात् धुड्निमित्ते घत्वढत्वे भवतः । प्रतिदीव्ना । प्रतिदीव्ने । अत्र 'अनोऽस्य' (२–१–१०७) इति अलोपो'भ्वादेर्नामिनः'–(२–१–६३) इत्यादिना दीर्घत्वे स्थानी न भवति । स्क्लुक्विधेः प्रतिषेधः किम् ? सुकुस्मयते. क्विप् । सुकूः । काष्ठं तक्षयति क्विप् काष्ठतक् । अत्र सयोगाद्यो स्कोर्लुकि णिलुकः स्थानिवद्भावप्रतिषेधाभावात् स्कोर्लुग्न भवति । सयोगान्तलोपस्त्वसद्विधौ स्थानिवद्भावप्रतिषेधात् भवत्येव । काष्ठतडिति अण्यन्तस्य । प्रायिकोऽयं निषेधः । तेन मधुश्चयतीति क्विप् । मधुक् । अत्र शलोपः सिद्धः । वेतस्वानित्यल्लुकः स्थानिवद्भावाभावेऽपि 'न स्तं मत्वर्थे' (१–१–२३) इति पदत्वाभावात्सो रुर्न भवति । ब्रह्मबन्ध्वौ ब्रह्मबन्ध्व इति ऊडादेशस्य वकारस्य स्थानिद्भावाभावेऽप्यन्तरङ्गे धस्य तृतीयत्वे लुकि च बहिरङ्गत्वेनासिद्धत्वम् । एवं कियौ गियौरिति नामिनो दीर्वत्वे । काक्यर्थ वास्यर्थमित्यत्र तु पदस्येति यलोपे यत्वस्यासिद्धत्वम् । अथ सखीयतीति क्विपि अल्लुको यविधौ स्थानिवत्त्वाभावाद्यलुकि ङसि 'योऽनेकस्वरस्य' (२–१–५६ इति यस्य 'य्वोः' (४–४–११२) इत्यादिना क्विबाश्रयो लुक् कथन्न भवति । बहिःप्रत्ययाश्रयत्वेन बहिरङ्गस्य यस्य अन्तःक्विबाश्रये लुक्यसिद्धत्वात् ॥१११॥

## लुप्यय्वृल्लेनत् ॥ ७ । ४ । ११२ ॥

परस्य प्रत्ययस्य लुपि सत्यां लुब्भूतपरनिमित्तकं पूर्वकार्यं न भवति 'अय्वृल्लेनत्' य्वृल्लत्वमेनच्च वर्जयित्वा । तद् । अत्र स्थानिवद्भावप्रतिषेधात् त्यदाद्यत्वसत्वे न भवतः । गर्गस्यापत्यानि गर्गा. । गर्गादित्वाद्यञ् । 'यञञोऽश्यापर्णान्तगोपवनादेः' (६—१–१२६) इति लुप् । कुवल्या विकार फलं कुवलम् । हेमादित्वादञ् । 'फले' (६–२–५८) इति तस्य लुप् । अत्र वृद्धिर्न भवति । प्लुप्यपि लुब्रूपतास्त्येव । तेन पञ्चगोणिरित्यत्रेकणः प्लुपि वृद्धिर्न भवति । लुपीति वचनाल्लुकि भवत्येव । गोमान् । यवमान् । अत्र सिलुकि तन्निमित्तं दीर्घत्वं भवति । लुपीति सप्तमीनिर्देशात् पूर्वस्य यत्कार्यं प्राप्तं तन्निषिध्यते । समुदायस्य तु भवत्येव । पयः । साम । पञ्च । सप्त । अत्र पदसञ्ज्ञा तथा च तन्निबन्धनानि रुत्वनलोपादीनि भवन्ति । कथं पापक्ति पापचीतित्यत्र द्वित्वम् । नेदं यङि निमित्ते किंतु यङन्तस्य । अय्वृल्लेनदिति किम् ? य्वृत्, व्यध्, वेविद्धि । श्वि, शोशवीति । ग्रह, जरीगृहीति । ॡ. गॄ, निजागलीति । एनत्, एनतपश्य । एनच्छ्रितकः । स्थानीवावर्णविधाविति लुपः स्थानिवद्भावेन प्राप्तानां पूर्वेषां कार्याणां प्रतिषेधार्थं वचनम् ॥११२॥

## विशेषणमन्तः ॥ ७ । ४ । ११३ ॥

विशिष्यतेऽनेनेति विशेषणम् । विशेषणं विशेष्यस्य समुदायस्यान्तोऽवयवो भवति । इह शास्त्रे धात्वादिः समुदायोऽभेदेनावयवविशेषणक उपादीयते । तत्र

सोऽवयवस्तत्समुदायस्यान्तत्वेन नियम्यते । अतः स्यमोऽम् । कुण्डं तिष्ठति । कुण्ड पश्य । इह न भवति । तद् । 'युवर्णवृद्दवशरणगमृद्ग्रहः' । जयः । स्तवः । इह न भवति । सेक. । योगः । इणोऽलि अय इत्यादौ व्यवदेशिवद्भावाद्भवति ॥११३॥

**सप्तम्या आदिः ॥ ७ । ४ । ११४ ॥**

सप्तम्यन्तस्य विशेष्यस्य यद्विशेषण तत्तस्यादिरवयवो भवतीति वेदितव्यम् । इन् ङीस्वरे लुक् । पथः । पथाम् । इह न भवति । पथिषु । ब्युक्तोपान्त्यस्य शिति स्वरे' (४ ३–१४) नेनिजानि । अनेनिजम् । इह न भवति । नेनेक्ति । 'उत और्विति व्यञ्जनेऽद्वे' (४–३–५९) यौति । रौति । इह न भवति अस्तवीत् । पथा, अयौदित्यादौ व्यपदेशिवद्भावाद्भवति । अन्तत्वापवादो योग' ॥११४॥

**प्रत्ययः प्रकृत्यादेः ॥ ७ । ४ । ११५ ॥**

यस्माद्यः प्रत्ययो विधीयते सा तस्य प्रकृति । प्रत्ययः प्रकृत्यादेः समुदायस्य विशेषणं वेदितव्यम् नोनाधिकस्य । मातुर्भोगो मातृभोगस्तस्मै हितो मातृभोगीण । 'भोगोत्तरपदात्मभ्यामीन' (७–१–४०. । खरपस्यापत्य खारपायणः । नडादित्वादायनण् । अत्र 'तदन्तं पदम्' (१–१–२०) इति पदसञ्ज्ञा समुदायस्य भवति न तूनस्य भोगीण इत्यादिरूपस्य तेनैकपदत्वात् णत्वं सिद्धम् । राज्ञ' पुरुष' राजपुरुष' । 'षष्ठ्ययत्नाच्छेषे' (३–१–७६) इति समास । अधिकस्य न भवति । ऋद्धस्य राज्ञ पुरुषः । गार्ग्यस्यापत्य गार्ग्यायणः । 'यञिञ' (६–१–५५) इत्यायनण् । अधिकात्समुदायान्न भवति । परमगार्ग्यस्यापत्यम् । पुत्रमिच्छति पुत्रकाम्यति । अधिकान्न भवति । महान्त पुत्रमिच्छति । न्यूनाधिकव्यवच्छेदार्थं वचनम् । तदन्तत्वं च 'विशेषणमन्त. (७–४–११३) इत्येव सिद्धम् ॥११५॥

**गौणो ङ्यादिः ॥ ७ । ४ । ११६ ॥**

ङीमारभ्य ष्यं यावत् ङ्यादि' प्रत्ययः स गौण उपसर्जन सन् प्रकृत्यादिः समुदायस्य विशेषणं भवति नोनाधिकस्य । कारीषगन्ध्यामतिक्रान्तः स बन्धुरस्य अतिकारीषगन्ध्यबन्धुः । अतिकौमुदगन्ध्यबन्धुः । अत्र ष्येणाधिकस्याग्रहणात् 'बन्धौ बहुव्रीहौ' (२–४–८३) इति ईच् न भवति । गौण इति किम् ? अगौणोऽधिकस्यापि समुदायस्य विशेषणं भवति । परमकारीषगन्धीबन्धुः परमकौमुदगन्धीबन्धु. । पूर्वेणैव सिद्धेऽगौणस्याधिकपरिग्रहार्थं वचनम् ॥११६॥

**कृत्सगतिकारकस्यापि ॥ ७ । ४ । ११७ ॥**

कृत्प्रत्ययः प्रकृत्यादे' समुदायस्य गतिकारकपूर्वस्य अपिशब्दात्केवलस्यापि विशेषणं भवति । यथेह समासो भवति भस्मनिहुतम् प्रवाहे मूत्रितम् तथा उदकेविशीर्णम् अवतप्तेनकुलस्थितमिति सगतिकेन सकारकेण च क्तान्तेन 'क्तेन' (३–१–९२) इति समासः सिद्धो भवति । तथा व्यावक्रोशी व्यावहासी साकीटिनं सारंविणमिति 'नित्यं ञिनोऽण्' (७–३–५८) इति अण् सिद्ध । 'प्रत्यय प्रकृत्यादे' (७–४–११५) इत्यतोऽप्राप्ते वचनम ॥११७॥

**परः ॥ ७ । ४ । ११८ ॥**

य' प्रत्यय स प्रकृते पर एव भवति । अजा । खट्वा । वृक्ष. । वृक्षौ । वृक्षा. । जुगुप्सते । मीमांसते । कार्यम् । गम्यम् । औपगव. ॥११८॥

**स्पर्धे ॥ ७ । ४ । ११९ ॥**

द्वयोर्विध्योरन्यत्र सावकाशयोस्तुल्यबलयो' एकत्र अनेकत्र च उपनिपात' स्पर्धः तत्र यः सूत्रपाठे पर' स विधिर्भवति । 'शसोऽता सश्च न. पुंसि' (१—४–४९) इत्यस्यावकाशो वृक्षान् मुनीन् । 'नपुंस-

कस्य शिः' (१-४-५५) इत्यस्य तु महान्ति यशांसि । इहोभय प्राप्नोति वनानि मधूनि । तत्र परत्वाच्छिरेव भवति । अयं तावदेकस्य द्विकार्ययोगे स्पर्ध उक्त । अनेकस्याप्यसभवे सति भवति । 'ईः षोमवरुणेऽग्ने' [३-२-४२] इत्यस्यावकाशोऽग्नीवरुणौ । 'देवतानामात्वादौ' (७-४-२८) इति वृद्धेरवकाश आग्नावैष्णवं हविः । इहोभयं प्राप्नोति । आग्निवारुणीमनड्वाहीमालभेत । परत्वात्तु वृद्धिर्भवति । अत्र ह्यग्नेरीत्व वरुणशब्दस्य च वृद्धिरिति नैकौ द्विकार्ययुक्त. । असंभवस्त्वस्ति वृद्धौ सत्याम् 'इर्वृद्धिमत्यविष्णौ' [३-२-४३] इति अग्नेरीत्वापवाद इर्भवति । परस्परप्रतिबन्धेनाप्रवृत्तौ पर्याये वा प्राप्ते वचनम् ॥११९॥

## आसन्नः ॥ ७ । ४ । १२० ॥

इह आसन्नानासन्नप्रसङ्गे यथास्व स्थानार्थप्रमाणादिभिरासन्न एव विधिर्भवति । तत्र स्थानेन, दण्डाग्रम् । क्षुपाग्रम् । कण्ठ्ययोरकारयोः कण्ठ्य एवाकारो दीर्घो भवति । अर्थेन, वातण्ड्ययुवतिः । दारदवृन्दारिका । अत्र वतण्डीशब्दस्य दरच्छब्दस्य च 'पुंवत्कर्मधारये' [३-२-५७] इति पुंवद्भावे कर्तव्ये अर्थत आसन्नो वातण्डचभावो दारदभावश्च भवति । प्रमाणेन, अमुष्मै । अमूभ्याम् 'आदुवर्णोऽनु' (२-१-४७) इति मात्रिकस्य मात्रिको द्विमात्रस्य च द्विमात्र. ॥१२०॥

## संबन्धिनां संबन्धे ॥ ७ । ४ । १२१॥

संबन्धिशब्दानां यत्कार्यमुक्त तत्सबन्ध एव सति भवति नान्यथा । 'श्वशुराद्य' । श्वशुरस्यापत्यं श्वशुर्य । सञ्ज्ञाशब्दात्तु इञेव । श्वाशुरि । 'मातृपितृस्वसुः' (२-३-१८) मातृष्वसा । धान्यमातुः स्वसुस्तु न भवति । मातृस्वसा ॥१२१॥

## समर्थः पदविधिः ॥ ७ । ४ । १२२ ॥

समर्थपदाश्रितत्वात्समर्थः । पदसम्बन्धी विधिः पदविधिः । तेन यः पदाद्विधिः यश्च पदे यश्च पदस्य पदयोः पदानां वा स सर्वः पदविधिरेव । सर्वः पदविधिः समर्थो वेदितव्यः । समर्थानां पदानां विधिर्वेदितव्य इत्यर्थः । तच्च सामर्थ्यं व्यपेक्षा एकार्थीभावश्च । अत्र व्यपेक्षायां सबद्धार्थ सप्रेक्षितार्थो वा पदविधिः साधुर्भवति । एकार्थीभावे तु विग्रहवाक्यार्थाभिधाने यः शक्तः सगतार्थः संसृष्टार्थो वा पदविधिः स साधुर्भवति । अत्र च पदानि उपसर्जनीभूतस्वार्थानि निवृत्तस्वार्थानि वा प्रधानार्थोपादानात् द्व्यर्थानि अर्थान्तराभिधायीनि वा भवन्ति । पदविधिश्च समासनामधातुकृत्तद्धितोपपदविभक्तियुष्मदस्मदादेशप्लुतरूपो भवति । तत्र समासः द्वितीया 'श्रितादिभिः' । धर्मं श्रित धर्मश्रितः । 'तृतीया तत्कृतैः' । शङ्कुलया कृतः खण्ड शङ्कुलाखण्डः । 'चतुर्थी प्रकृत्या' यूपाय दारु यूपदारु । 'पञ्चमी भयाद्यैः' वृकाद्भयं वृकभयम् । 'षष्ठ्ययत्नाच्छेषे' । राज्ञ पुरुषः राजपुरुषः 'सप्तमी शौण्डाद्यैः' । अक्षेषु शौण्ड अक्षशौण्डः । 'विशेषणं विशेष्येणैकार्थं कर्मधारयश्च' । नीलं च तदुत्पलं च नीलोत्पलम् । एषु पूर्वोत्तरपदयोर्वाक्यावस्थायां परस्पराकाङ्क्षालक्षणा व्यपेक्षा । वृत्त्यवस्थाया तु पृथगर्थानां सतामेकार्थीभाव इति । तथा हि—धर्ममित्येतत्साधनत्वात्साध्यभूतां क्रियामपेक्षते । श्रित इत्येतदपि श्रयणक्रियोपसर्जनकर्तृवाचि स्वक्रियाविषयं साधनमपेक्षते । तयोश्च परस्परससर्गात् मूर्छितावयव इव

वृत्तावेकार्थीभावो भवति। धर्मं श्रितो धर्मश्रितश्चैत्र इति। एव शंकुलया कृतः खण्ड' शङ्कुलाखण्ड इति। कर्तृकर्मणोर्गम्यमानकरोतिक्रियाकृता वाक्ये व्यपेक्षा। वृत्तावेकार्थीभावः। एवं चतुर्थीसमासादावपि यूपायेत्यादि सामान्यमवच्छेदाय भेदानाकाङ्क्षति कि यूपाय गच्छत्यागच्छति पुष्पं दारु वेति। दार्वपि यूपाय गृहाय दाहाय वेति भेदानाकाङ्क्षति। एव सर्वत्र उपसर्जनानां प्रधानानां च परस्परमाकाङ्क्षावतां क्वचित्प्रकृतिविकारभावलक्षणः क्वचिदवध्यवधिमद्भावात्मकः क्वचित्स्वस्वामिभाव' क्वचिद्विषयविषयिभावरूपः सबन्धो वाक्ये व्यपेक्षा। वृत्तौ त्वेकार्थीभावः। एवं नीलमित्येतद्विशेषण गुणत्वात् द्रव्यमाकाङ्क्षति। उत्पलमित्येतदपि सर्वोत्पलावग्रहरूपेण प्रवृत्त सद्विशेष्यत्वाद्विशेषणं गुणमाकाङ्क्षति। वृत्तौ पुनरेकार्थीभावेन पांसूदकवदविभागापन्नौ तावुभावप्यर्थावेकस्मिन्नधिकरणे मूर्छिताविव भवतः। नीलं च तदुत्पलं च नीलोत्पलमिति। तदेतत्सामर्थ्यमविशेषोक्तमपि लोकव्यपेक्षया वृत्त्यवृत्त्योः स्वभावेन विभक्तमवतिष्ठते। यत्र त्वसामर्थ्यं तत्र समासो न भवति। पश्य धर्मम् श्रितो मैत्रो गुरुकुलम्। किं ते शङ्कुलया खण्डो मैत्र उपलेन। गच्छ यूपाय दारु शोभन शैले। निवर्तस्व व्याघ्रात् भयं चैत्रस्य मैत्रात्। भार्या राज्ञः पुरुषो देवदत्तस्य। सक्तस्त्वमक्षेषु शौण्ड' पिवति पानागारे इति। नामधातु', पुत्रमिच्छति पुत्रीयति। श्येन इवाचरित श्येनायते। समर्थ इति किम्? पश्यति पुत्रमिच्छति सुखम्। कृत्, कुम्भ करोति कुम्भकार। समर्थ इति किम्? पश्य कुम्भ करोति कटम्। तद्धित., उपगोरपत्यमौपगवः। समर्थ इति किम्? गृहमुपगोरपत्य तव। उपपदविभक्ति। नमो देवेभ्य। अभिजानासि देवदत्त काश्मीरेषु वत्स्यामः। उपाध्यायश्चेदागच्छेदाशंसे युक्तेऽधीयीय। समर्थ इति किम्? इदं नमो देवाः शृणुत। देवदत्त मातर स्मरसि अवसाम दीर्घं मगधेषु। युष्मदस्मदादेश', धर्मस्ते स्वं धर्मो मे स्वम्। धर्मो वः स्वं धर्मो नः स्वम्। समर्थ इति किम्? ओदनं पच तव भविष्यति। मम भविष्यति। प्लुत, अङ्ग कूज ३ इदानीं ज्ञास्यसि जाल्म। समर्थ इति किम्? अङ्ग कूजत्ययमिदानीं ज्ञास्यति जाल्मः। पदग्रहणाद्वर्णविधिरसामर्थ्येऽपि भवति। तिष्ठतु दध्यशान त्वं शाकेन। तिष्ठतु कुमारीच्छत्त्रं हर देवदत्तेति। यत्वं द्वित्वं च भवति। एवं समासनामधातुकृत्तद्धितेषु वाक्ये व्यपेक्षा वृत्तावेकार्थीभावः। शेषेषु पुनर्व्यपेक्षैव सामर्थ्य भवति। ननु च राज्ञः पुरुषमानयेत्युक्ते योऽर्थ आनीयते राजपुरुषमानयेत्यप्युक्ते स एव तत्कोऽत्र व्यपेक्षैकार्थीभावयोर्विशेषः। उच्यते। सख्याविशेषो व्यक्ताभिधानमुपसर्जनविशेषणं चयोगश्चेति। तत्र राज्ञ' पुरुष राज्ञोः पुरुष' राज्ञां पुरुष. इति वाक्ये संख्याविशेषो भवति। समासे न भवति। राजपुरुष। वाक्ये ह्युपसर्जनानि विभक्तार्थाभिधायित्वात्सख्याविशेषयुक्त स्वार्थं प्रतिपादयन्ति। समासेऽन्तर्भूतस्वार्थं प्रधानार्थमभिदधतीत्यभेदैकत्वसख्यां गमयन्ति। सख्याविशेषाणामविभागेनावस्थानमभेदैकत्वसंख्या॥ 'यथौषधरसा सर्वे, मधुन्याहितशक्तयः। अविभागेन वर्तन्ते, ता सख्यां तादृशीं विदु' ॥ १॥ विभक्तिवाच्यैव तु सख्या वृत्तौ निवर्तते नामादिगम्या तु न निवर्तते। यथा द्विपुत्र पञ्चपुत्र इत्यादौ नामार्थ एव सख्याविशेष'। तावकीनो मामकीन इत्यादेशाभिव्यङ्ग्यमेकत्वम्। शौर्पिक. मासजात इति परिमाणस्वाभाव्यादेकत्वसख्यावगम.। कारकमध्यं व्यञ्जनमध्यमित्यादौ मध्या-

न्यथानुपपत्त्या द्वित्वावगमः। यत्रापि वृत्तौ विभक्तेर्लुब् नास्ति दास्याः पुत्र देवानांप्रियः आमुष्यायण अप्सव्यः गोषुचरः वर्षासुज इति तत्रापि संख्याविशेषो नास्ति सामान्येन विशेषणमात्रप्रतीतेः। अतएव वृत्तौ संख्याभेदाभावात्स्वभावतो निवृत्ता विभक्तिर्लुपा अन्वाख्यायते। अलुप्समासे तु शब्दान्तरं विभक्त्यन्तप्रतिरूपावयवमनेनोपायेन प्रतिपाद्यते। तथा वाक्ये व्यक्ताभिधानं भवति ब्राह्मणस्य कम्बलस्तिष्ठति। समासे पुनरव्यक्तं ब्राह्मणकम्बलस्तिष्ठतीति। सदिह्यतेऽत्र षष्ठीसमासो वा सबोधनं वेति। किंचित्पुनरव्यक्तं वाक्ये। यथार्धं पशोर्देवदत्तस्येति। पशुगुणस्य वा देवदत्तस्य यदर्धं यो वा सज्ञीभूतो पशुस्तस्य यदर्धमिति। तच्च सामसे व्यक्तम् अर्धपशु देवदत्तस्येति। तथा वाक्ये उपसर्जनविशेषणं भवति। ऋद्धस्य राज्ञः पुरुषः। समासे न भवति। राजपुरुषः। यथाहुः—'सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं न प्रयुज्यत इति'। विशेषणयोगे हि सापेक्षत्वेनागमकत्वात्सामर्थ्यं न भवति। यत्र च क्वचिद्विशेषणयोगेऽपि गमकत्वं तत्र भवत्येव समासः यथा देवदत्तस्य गुरुकुलम्, यज्ञदत्तस्य दासभार्या। यदाह—'संबन्धिशब्दः सापेक्षो, नित्यं सर्वः प्रवर्तते। स्वार्थवत्सा व्यपेक्षास्य, वृत्तावपि न हीयते ॥ १ ॥ तथा वाक्ये चयोगो भवति स्वचयोगः स्वामिचयोगश्च। राज्ञो गौश्चाश्वश्च पुरुषश्च। चैत्रस्य मैत्रस्य मित्त्रस्य च गौः। समासे न भवति। राज्ञो गोश्वपुरुषाः। चैत्रमैत्रमित्त्राणां गौरिति। यदि समर्थः पदविधिः कथमसामर्थ्ये सूर्यमपि न पश्यन्त्यसूर्यंपश्या राजदाराः. पुनर्न गीयन्तेऽपुनर्गेयाः श्लोकाः, श्राद्धं न भुङ्क्तेऽश्राद्धभोजी, अलवणभोजी, सर्वश्चर्मणा कृतः सार्वचर्मीणो रथः, कृतः पूर्वं कटोऽनेनेति कृतपूर्वी कटम् इत्याद्या वृत्तयो भवन्ति। किं हि वचनान्न भवति ॥ १२२ ॥ ये तु शास्त्रे सूचिता लोकसिद्धाश्च न्याया न तदर्थं यत्नः क्रियते ॥ स्वं रूपं शब्दस्याशब्दसज्ञा ॥ १ ॥ सुसर्वार्द्धदिक्शब्देभ्यो जनपदस्य ॥ २ ॥ ऋतोर्वृद्धिमद्विधाववयवेभ्यः ॥ ३ ॥ स्वरस्य ह्रस्वदीर्घप्लुताः ॥ ४ ॥ आद्यन्तवदेकस्मिन् ॥५॥ प्रकृतिवदनुकरणम् ॥६॥ एकदेशविकृतमनन्यवत् ॥७॥ भूतपूर्वकस्तद्वदुपचारः ॥८॥ भाविनि भूतवदुपचारः ॥९॥ यथासख्यमनुदेशः समानानाम् ॥१०॥ विवक्षातः कारकाणि ॥११॥ अपेक्षातोऽधिकारः ॥१२॥ अर्थवशाद्विभक्तिपरिणामः ॥१३॥ अर्थवद्ग्रहणे नानर्थकस्य (ग्रहणम्) ॥१४॥ लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव (ग्रहणम् ॥१५॥ नामग्रहणे लिङ्गविशिष्टस्यापि ॥१६॥ प्रकृतिग्रहणे यङ्लुबन्तस्यापि ॥१७॥ श्तिवा शवाऽनुबन्धेन, निर्दिष्टं यद्गणेन च ॥ एकस्वरनिमित्तं च, पञ्चैतानि न यङ्लुपि ॥१८॥ सनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य ॥१९॥ असिद्धं बहिरङ्गमन्तरङ्गे ॥२०॥ न स्वरानन्तर्ये ॥२१॥ गौणमुख्ययोर्मुख्ये कार्यसप्रत्ययः ॥२२॥ कृत्रिमाकृत्रिमयोः कृत्रिमे ॥२३॥ क्वचिदुभयगतिः ॥२४॥ सिद्धे सत्यारम्भो नियमार्थः ॥२५॥ धातो स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम् ॥२६॥ नञ्युक्तं तत्सदृशे ॥२७॥ उक्तार्थानामप्रयोगः ॥२८॥ निमित्ताभावे नैमित्तिकस्याप्यभावः ॥२९॥ सनियोगशिष्टानामेकापायेऽन्यतरस्याप्यपाय ॥३०॥ नान्वाचीयमाननिवृत्तौ प्रधानस्य ॥३१॥ निरनुबन्धग्रहणे न सानुबन्धकस्य ॥३२॥ एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य ॥३३॥ नानुबन्धकृतान्यसारूप्यानेकस्वरत्वानेकवर्णत्वानि ॥ ३४॥ समासान्तागमसंज्ञाज्ञापकगणनञ्निर्दिष्टान्य-

नित्यानि ॥३५॥ पूर्वेऽपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् ॥३६॥ मध्येऽपवादाः पूर्वान् ॥३७॥ यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते ॥३८॥ यस्य तु विधेर्निमित्तमेव नासौ बाध्यते ॥३९॥ येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधकः ॥४०॥ बलवन्नित्यमनित्यात् ॥४१॥ अन्तरङ्गं बहिरङ्गात् ॥४२॥ निरवकाशं सावकाशात् ॥४३॥ वार्णात् प्राकृतम् ॥४४॥ य्वृत् य्वृदाश्रयं च ॥४५॥ उपपदविभक्तेः कारकविभक्तिः ॥४६॥ लुबन्तरङ्गेभ्यः ॥४७॥ सर्वेभ्यो लोपः ॥४८॥ लोपात्स्वरादेशः ॥४९॥ आदेशादागमः ॥५०॥ आगमात्सर्वादेशः ॥५१॥ परान्नित्यम् ॥५२॥ नित्यादन्तरङ्गम् ॥५३॥ अन्तरङ्गाच्चानवकाशम् ॥५४॥ उत्सर्गादपवादः ॥५५॥ अपवादात् क्वचिदुत्सर्गोऽपि ॥५६॥ नानिष्टार्था शास्त्रप्रवृत्तिरिति ॥५७॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां श्रीसिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनबृहद्वृत्तौ सप्तमस्याध्यायस्य चतुर्थः पादः ॥७।४॥

क्षितिधव ! भवदीयैः क्षीरधारावलक्षै–
रिपुविजययशोभिः श्वेत एवासिदण्डः ॥
किमुत कवलितैस्तैः कज्जलैर्मौलवीनां
परिणतमहिमानं कालिमानं तनोति ॥१॥

समाप्तः सप्तमोऽध्यायः

निस्सीमप्रतिभैकजीवितधरौ निःशेषभूमिस्पृशां
पुण्यौघेन सरस्वतीसुरगुरू स्वाङ्गैकरूपौ दधत् ।
यः स्याद्वादमसाधयन् निजवपुर्दृष्टान्ततः सोऽस्तु मे,
सद्बुध्यम्बुनिधिप्रबोधविधये श्रीहेमचन्द्रः प्रभुः ॥
श्रीमल्लिषेणसूरिः ॥

॥ ॐ ह्रीँ अर्हँ नमः ॥

कलिकालसर्वज्ञ श्री हेमचन्द्राचार्यविरचितं

# प्राकृत व्याकरणम्

## ( अष्टमोऽध्यायः )

---

### अथ प्राकृतम् ॥ ८ । १ । १ ॥

अथशब्द आनन्तर्यार्थोऽधिकारार्थश्च । प्रकृतिः संस्कृतम् । तत्र भवं तत आगतं वा प्राकृतम् । सस्कृतानन्तरं प्राकृतमधिक्रियते । सस्कृतानन्तरं च प्राकृतस्यानुशासनं सिद्धसाध्यमानभेदसस्कृत योनेरेव तस्य लक्षणं न देश्यस्य इति ज्ञापनार्थम् । संस्कृतसमं तु सस्कृतलक्षणेनैव गतार्थम् । प्राकृते च प्रकृति–प्रत्यय लिङ्ग-कारक-समास-सञ्ज्ञादय संस्कृत-वद् वेदितव्याः । लोकाद् इति च वर्तते । तेन ऋ-ॠ ऌ–ॡ–ऐ–औ–ङ–ञ–श–ष विसर्जनीय–प्लुत-वर्जो वर्णसमाम्नायो लोकादवगन्तव्यः । ङञौ स्ववर्ग्यसंयुक्तौ भवत एव । ऐदौतौ च केषाचित् । कैतवम्–कैअवं । सौन्दर्यम्–सौअरिअं । कौरवा–कौरवा । तथा अस्वरं व्यञ्जनं द्विवचनं चतुर्थीबहु-वचनं च न भवति ॥१॥

### वहुलम् ॥ ८ । १ । २ ॥

बहुलम् इत्यधिकृतं वेदितव्यम् आ शास्त्रपरि-समाप्तेः । ततश्च । क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिद् अन्यदेव भवति । तच्च यथा-स्थानं दर्शयिष्यामः ॥२॥

### आर्षम् ॥ ८ । १ । ३ ॥

ऋषीणाम् इदम् आर्षम् । आर्षं प्राकृतं बहुलं भवति । तदपि यथास्थानं दर्शयिष्यामः । आर्षे हि सर्वे विधयो विकल्प्यन्ते ॥३॥

### दीर्घह्रस्वौ मिथो वृत्तौ ॥ ८ । १ । ४ ॥

वृत्तौ समासे स्वराणां दीर्घह्रस्वौ बहुलं भवतः । मिथः परस्परम् ॥ तत्र ह्रस्वस्य दीर्घः । अन्तर्वेदि । अन्ता–वेई । सप्तविंशतिः । सत्तावीसा । क्वचिन्न भवति । जुवइ–अणो । क्वचिद् विकल्पः । वारी–मई । वारि–मई ॥ भुजयन्त्रम् । भुआ–यन्तं । भुअ–यन्त ॥ पतिगृहम् पई–हर पइ–हरं ॥ वेळु-वणं वेलु-वणं ॥ दीर्घस्य ह्रस्वः । निअम्ब–सिल–खलिअ-वीइ-मालस्स ॥ क्वचिद् विकल्पः । जँउण–यडं जॅउणा–यडं । नइ-सोत्तं-नई–सोत्त । गोरि–हरं गोरी हरं । वहु–मुहं वहू–मुहं ॥४॥

### पदयोः सन्धिर्वा ॥ ८ । १ । ५ ॥

संस्कृतोक्तः सधिः सर्वः प्राकृते पदयोर्व्यवस्थित-विभाषया भवति ॥ वासेसी वास इसी । विसमायवो विसम–आयवो । दहि ईसरो दहीसरो । साऊअय साउ–उअयं ॥ पदयोरिति किम् ? पाओ । पई । वत्थाओ । मुद्धाइ । मुद्धाए । महइ । महए ॥ बहुलाधिकारात् क्वचिद् एकपदेऽपि । काहिइ काही । बिइओ बीओ ॥५॥

## न युवर्णस्यास्वे ॥ ८ । १ । ६ ॥

इवर्णस्य उवर्णस्य च अस्वे वर्णे परे संधिर्न भवति । न वेरिवग्गे वि अवयासो । वन्दामि अज्ज– वइर ।

दणुइन्द-रुहिर-लित्तो, सहइ उइन्दो नहप्पहावलि-अरुणो।
सझा-वहु अवऊढो, णववारिहरोव्व विज्जुलापडि भिन्नो॥

युवर्णस्येति किम् ?

गूढोअर–तामरसाणुसारिणी भमर–पन्तिव्व ।

अस्व इति किम् ? पुहवीसो ॥६॥

## एदोतोः स्वरे ॥ ८ । १ । ७ ॥

एकार ओकारयोः स्वरे परे सधिर्न भवति ।

वहुआइ नहुल्लिहणे, आवन्धन्तीएँ कञ्चुअं अगे ।
मयरद्धयसरधोरणि–धारा छेअ व्व दीसन्ति ॥१॥
उवमासु अपज्जत्तेभ-कलभ दन्तावहासमूरुजुअ ।
तं चेव मलिअ-बिस-दण्ड-विरसमालक्खिमो एण्हिं ॥२।

अहो अच्छरिअं ॥ एदोतोरिति किम् ?

अत्थालोअण–तरला, इअर-कईण भमन्ति बुद्धीओ ।
अत्थ च्चेअ निरारम्भमेन्ति हिअयं कइन्दाणं ॥३॥

## स्वरस्योद्वृत्ते ॥ ८ ।१।८॥

व्यञ्जनसपृक्तः स्वरो व्यञ्जने लुप्ते योऽव- शिष्यते स उद्वृत्त इहोच्यते ।

स्वरस्य उद्वृत्ते स्वरे परे सधिर्न भवति ॥

विससिज्जन्त-महा-पसु-दसण-सभम-परोप्परारूढा ।
गयणे च्चिअ गन्ध-उडिं कुणन्ति तुह कउल-णारीओ ॥१॥

निसा-अरो । निसि-अरो । रयणी-अरो । मणु- अत्तं ॥ वहुलाधिकारात् क्वचिद् विकल्पः । कुम्भ- आरो कुम्भारो । सु-उरिसो सूरिसो ॥ क्वचित् संधि- रेव सालाहणो । चक्काओ ॥ अत एव प्रतिषेधात् समासे ऽपि स्वरस्य सधौ भिन्नपदत्वम् ॥

## त्यादेः ॥८।१।९ ॥

तिबादीनां स्वरस्य स्वरे परे संधिर्न भवति ॥ भवति इह । होइ इह ॥९॥

## लुक् ॥ ८।१ ।१० ॥

स्वरस्य स्वरे परे वहुलं लुग् भवति ॥ त्रिद- शेशः । तिअसीसो । निःश्वासोच्छ्वासौ । नीसासू- सासा ॥१०॥

## अन्त्यव्यञ्जनस्य ॥ ८। १। ११ ॥

शब्दानां यद् अन्त्यव्यञ्जनं तस्य लुग् भवति ॥ जाव । ताव । जसो । तमो । जम्मो ॥ समासे तु वाक्यविभक्त्यपेक्षायाम् अन्त्यत्वम् अनन्त्यत्वं च । तेनोभयमपि भवति । सद्भिक्षु । सभिक्खू । सज्जनः । सज्जणो । एतद्गुणाः । एअ-गुणा ॥ तद्गुणाः । तग्गुणा ॥११॥

## न श्रदुदोः ॥ ८।१। १२ ॥

श्रद् उद् इत्येतयोरन्त्यव्यञ्जनस्य लुग् न भवति । सद्दहिअं । सद्धा । उग्गयं । उन्नयं ॥१२॥

## निर्दुरोर्वा ॥ ८। १ । १३ ॥

निर् दुर् इत्येतयोरन्त्यव्यञ्जनस्य वा लुग् भवति ॥ निस्सह नीसह । दुस्सहो दूसहो । दुक्खिओ दुहिओ ॥१३॥

## स्वरेन्तरश्च ॥ ८ । १ । १४ ॥

अन्तरो निंदुरोश्चान्त्यव्यञ्जनस्य स्वरे परे लुग् न भवति ॥ अन्तरप्पा ॥ निरन्तर । निरवसेसं ॥ दुरुत्तरं दुरवगाह ॥ क्वचिद् भवत्यपि । अन्तोवरि ॥१४॥

### स्त्रियामादविद्युतः ॥ ८।१ । १५ ॥

स्त्रियां वर्तमानस्य शब्दस्यान्त्यव्यञ्जनस्य आत्व भवति विद्युच्छब्दं वर्जयित्या । लुगपवादः ॥ सरित् । सरिआ । प्रतिपद् । पाडिवआ ॥ सपद् । सपआ ॥ बहुलाधिकारात् ईषत्स्पृष्टतरयश्रुतिरपि । सरिया । पाडिवया । संपया ॥ अविद्युत इति किम् ? विज्जू ॥१५॥

### रो रा ॥ ८। १ । १६ ॥

स्त्रीयां वर्तमानस्यान्त्यस्य रेफस्य रा इत्यादेशो भवति । आत्त्वापवादः ॥ गिरा । धुरा । पुरा ॥१६॥

### क्षुधो हा ॥ ८। १ । १७ ॥

क्षुधशब्दस्यान्त्यव्यञ्जनस्य हादेशो भवति ॥ छुहा ॥१७॥

### शरदादेरत् ॥ ८। १ । १८ ॥

शरदादेरन्त्यव्यञ्जनस्य अत् भवति ॥ शरद् । सरओ ॥ भिषक् । भिसओ ॥१८॥

### दिक्-प्रावृषोः सः ॥ ८। १। १९ ॥

एतयोरन्त्यव्यञ्जनस्य सो भवति ॥ दिसा । पाउसो ॥१९॥

### आयुरप्सरसोर्वा ॥ ८ । १ । २० ॥

एतयोरन्त्यव्यञ्जनस्य सो वा भवति ॥ दीहाउसो दीहाऊ । अच्छरसा अच्छरा ॥२०॥

### ककुभो हः ॥ ८।१। २१ ॥

ककुभ्शब्दस्यान्त्यव्यञ्जनस्य हो भवति ॥ कउहा ॥२१॥

### धनुषो वा ॥ ८ ।१। २२ ॥

धनुःशब्दस्यान्त्यव्यञ्जनस्य हो वा भवति ॥ धणुहं धणू ॥२२॥

### मोनुस्वारः ॥ ८ ।१। २३ ॥

अन्त्यमकारस्यानुस्वारो भवति ॥ जलं फलं वच्छं गिरिं पेच्छ ॥ क्वचिद् अनन्त्यस्यापि । वणम्मि । वणंमि ॥२३॥

### वा स्वरे मश्च ॥ ८ । १ । २४ ॥

अन्त्यमकारस्य स्वरे परेऽनुस्वारो वा भवति । पक्षे लुगपवादो मस्य मकारश्च भवति ॥ वन्दे उसभं अजिअं । उसभमजिअं च वन्दे ॥ बहुलाधिकाराद् अन्यस्यापि व्यञ्जनस्य मकारः ॥ साक्षात् । सक्खं ॥ यत् । जं ॥ तत् । तं ॥ विष्वक् । वीसुं । पृथक् । पिहं ॥ सम्यक् । सम्मं ॥ इहं । इहयं । आलेट्ठुअं इत्यादि ॥२४॥

### ङ-ञ-ण-नो व्यञ्जने ॥ ८ ।१।२५॥

ङ ञ ण न इत्येतेषां स्थाने व्यञ्जने परे अनुस्वारो भवति ॥ ङ । पङ्क्तिः । पंती ॥ पराङ्मुखः । परंमुहो ॥ ञ । कञ्चुकः । कंचुओ ॥ लाञ्छनम् । लंछणं ॥ ण । षण्मुखः । छंमुहो ॥ उत्कण्ठा । उक्कंठा ॥ न । सन्ध्या । संझा । विन्ध्यः । विंझो ॥२५॥

### वक्रादावन्तः ॥ ८ । १ । २६ ॥

वक्रादिषु यथादर्शनं प्रथमादेः स्वरस्य अन्त आगमरूपोऽनुस्वरो भवति ॥ वंकं । तंसं । अंसुं । मंसू । पुंछं । गुंछं । मुंढा । पंसू । बुंधं । कंकोडो । कुंपलं । दंसणं । विंछिओ । गिंठी । मंजारो । एष्वाद्यस्य । वयंसो । मणंसिणी । मणंसिला । पडंसुआ । एषु । द्वितीयस्य ॥ अवरिं । अणिउंतयं । अइमुंतयं । अनयोस्तृतीयस्य ॥ वक्र । त्र्यस्र । अश्रु । श्मश्रु । पुच्छ । गुच्छ । मूर्द्धन् । पर्शु । बुध्न । कर्कोट । कुड्मल । दर्शन । वृश्चिक । गृष्टि । मार्जार । वयस्य । मनस्विन् । मनस्विनी । मनःशिला । प्रतिश्रुत् । उपरि ।

अतिमुक्तक । इत्यादि ॥ क्वचिच्छन्दःपूरणेऽपि । देवं-नाग-सुवण्ण ॥ क्वचिन्न भवति । गिट्ठी । मज्जारो । मणसिला । मणासिला ॥ आर्षे ॥ मणोसिला । अइमुत्तयं ॥

**क्त्वा-स्यादेर्ण-स्वोर्वा ॥ ८ । १ । २७ ॥**

क्त्वायाः स्यादीनां च यौ णसू तयोरनुस्वारोन्तो वा भवति ॥ क्त्वा । काऊणं काऊण । काउआणं काउआण ॥ स्यादि । वच्छेणं वच्छेण । वच्छेसुं वच्छेसु ॥ णस्वोरिति किम् ? करिअ । अग्गिणो ॥२७॥

**विंशत्यादेर्लुक् ॥ ८ । १ । २८ ॥**

विंशत्यादीनाम् अनुस्वारस्य लुग् भवति । विंशतिः । वीसा ॥ त्रिंशत् । तीसा ॥ संस्कृतम् । सक्कयं ॥ संस्कारः । सक्कारो इत्यादि ॥ २८ ॥

**मांसादेर्वा ॥ ८ । १ । २९ ॥**

मांसादीनामनुस्वारस्य लुग् वा भवति । मासं मंसं । मासलं मंसलं । कासं कंसं । पासू पंसू । कह कहं । एव एवं । नूण नूणं । इआणि इआणिं । दाणि दाणिं । किं करेमि किं करेमि । समुहं समुहं । केसुअं किंसुअं । सीहो सिंघो ॥ मांस । मांसल । कांस्य । पांसु । कथम् । एवम् । नूनम् । इदानीम् । किम् । संमुख । किंशुक । सिंह । इत्यादि ॥ २९ ॥

**वर्गेऽन्त्यो वा ॥ ८ । १ । ३० ॥**

अनुस्वारस्य वर्गे परे प्रत्यासत्तेस्तस्यैव वर्गस्यान्त्यो वा भवति ॥ पङ्को पंको । सङ्खो संखो । अङ्गणं अंगणं । लङ्घणं लंघणं । कञ्चुओ कंचुओ । लञ्छणं लंछणं । अञ्जिअं अंजिअं । सञ्झा संझा । कण्टओ कंटओ । उक्कण्ठा । उक्कंठा । कण्डं कंडं । सण्ढो संढो । अन्तरं अंतरं । पन्थो पंथो । चन्दो चंदो । बन्धवो बंधवो । कम्पइ कंपइ । वम्फइ वंफइ । कलम्बो कलंबो । आरम्भो आरंभो ॥ वर्ग इति किम् ? संसओ । संहरइ ॥ नित्यमिच्छन्त्यन्ये ॥ ३० ॥

**प्रावृट्-शरत्तरणयः पुंसि ॥ ८ । १ । ३१ ॥**

प्रावृष् शरद् तरणि इत्येते शब्दाः पुंसि पुल्लिङ्गे प्रयोक्तव्याः ॥ पाउसो । सरओ । एस तरणी ॥ तरणिशब्दस्य पुंस्त्रीलिङ्गत्वेन नियमार्थमुपादानम् ॥३१॥

**स्नमदाम-शिरो-नभः ॥ ८ । १ । ३२ ॥**

दामन्शिरस्नभस्वर्जितं सकारान्तं नकारान्तं च शब्दरूपं पुंसि प्रयोक्तव्यम् ॥ सान्तम् । जसो । पओ । तमो । तेओ । उरो ॥ नान्तम् । जम्मो । नम्मो । मम्मो ॥ अदामशिरोनभ इति किम् ? दामं । सिरं । नहं ॥ यच्च सेयं वयं सुमणं सम्मं चम्ममिति दृश्यते तद् बहुलाधिकारात् ॥ ३२ ॥

**वाक्ष्यर्थ-वचनाद्याः ॥ ८ । १ । ३३ ॥**

अक्षिपर्याया वचनादयश्च शब्दाः पुंसि वा प्रयोक्तव्याः ॥ अक्ष्यर्थाः । अज्जवि सा सवइ ते अच्छी । नच्चावियाइँ तेणम्ह अच्छीइं ॥ अञ्जल्यादिपाठादक्षिशब्दः स्त्रीलिङ्गेऽपि । एसा अच्छी । चक्खू चक्खूइं । नयणा नयणाइं । लोअणा लोअणाइं ॥ वचनादि । वयणा वयणाइं । विज्जुणा विज्जूए । कुलो कुलं । छन्दो छन्दं । माहप्पो माहप्पं । दुक्खा दुक्खाइं ॥ भायणा भायणाइं । इत्यादि । इति वचनादयः ॥ नेत्ता नेत्ताइं । कमला कमलाइं इत्यादि तु संस्कृतवदेव सिद्धम् ॥ ३३ ॥

**गुणाद्याः क्लीबे वा ॥ ८ । १ । ३४ ॥**

गुणादयः क्लीबे वा प्रयोक्तव्याः ॥ गुणाइं गुणा । विहवेहि गुणाइँ मग्गन्ति । देवाणि देवा । बिन्दूइं बिन्दुणो । खग्गं खग्गो । मण्डलग्गं मण्डलग्गो । कररुहं कररुहो । रुक्खाइं रुक्खा । इत्यादि । इति गुणादयः ॥ ३४ ॥

**वेमाञ्जल्याद्याः स्त्रियाम् ॥ ८ । १ । ३५ ॥**

इमान्ता अञ्जल्यादयश्च शब्दाः स्त्रियां वा प्रयोक्तव्याः ॥ एसा गरिमा एस गरिमा । एसा महिमा एस महिमा । एसा निल्लज्जिमा एस निल्लज्जिमा । एसा धुत्तिमा एस धुत्तिमा ॥ अञ्जल्यादि । एसा अञ्जली एस अञ्जली । पिट्ठी पिट्ठं । पृष्ठमित्वे कृते स्त्रियामेवेत्यन्ये अच्छी अच्छि । पण्हा पण्हो । चोरिआ चोरिअं । एवं कुच्छी । बली । निही । विही रस्सी । गण्ठी । इत्यञ्जल्यादयः ॥ गड्डा गड्डो इति तु संस्कृतवदेव सिद्धम् ॥ इमेति तन्त्रेण त्वादेशस्य डिमा इत्यस्य पृथ्वादीम्नश्च संग्रहः । त्वादेशस्य स्त्रीत्वमेवेच्छन्त्येके ॥३५॥

**बाहोरात् ॥ ८ । १ । ३६ ॥**

बाहुशब्दस्य स्त्रियामाकारोन्तादेशो भवति ॥ बाहाए जेण धरिओ एक्काए ॥ स्त्रियामित्येव । वामेअरो बाहू ॥३६॥

**अतो डो विसर्गस्य ॥ ८ । १ । ३७ ॥**

संस्कृतलक्षणोत्पन्नस्यात परस्य विसर्गस्य स्थाने डो इत्यादेशो भवति ॥ सर्वतः । सव्वओ ॥ पुरतः । पुरओ ॥ अग्रतः । अग्गओ ॥ मार्गतः । मग्गओ एवं सिद्धावस्थापेक्षया । भवतः । भवओ ॥ भवन्तः । भवन्तो ॥ सन्तः । सन्तो ॥ कुतः । कुदो ॥३७॥

**निष्प्रती ओत्परी माल्य-स्थोर्वा ॥ ८ । १ । ३८ ॥**

निर् प्रति इत्येतौ माल्यशब्दे स्थाधातौ च परे यथासङ्ख्यम् ओत् परि इत्येवंरूपौ वा भवतः । अभेदनिर्देशः सर्वादेशार्थः ॥ ओमाल । निम्मल्लं । ओमालयं वहइ । परिट्ठा पइट्ठा । परिट्ठिअं पइट्ठिअं ॥३८॥

**आदेः ॥ ८ । १ । ३९ ॥**

आदेरित्यधिकारः कगचज [१. १७७] इत्यादिसूत्रात् प्रागविशेषे वेदितव्यः ॥३९॥

**त्यदाद्यव्ययात् तत्स्वरस्य लुक् ॥ ८ । १ । ४० ॥**

त्यदादेरव्ययाच्च परस्य तयोरेव त्यदाद्यव्यययोरादेः स्वरस्य बहुलं लुग् भवति ॥ अम्हेत्थ अम्हे एत्थ । जइमा जइ इमा । जइहं जइ अहं ॥४०॥

**पदादपेर्वा ॥ ८ । १ । ४१ ॥**

पदात् परस्य अपेरव्ययस्यादेर्लुग् वा भवति ॥ त पि तमवि । किं पि किमवि । केण वि । केणावि । कहं पि कहमवि ॥४१॥

**इतेः स्वरात् तश्च द्विः ॥ ८ । १ । ४२ ॥**

पदात् परस्य इतेरादेर्लुग् भवति स्वरात् परश्च तकारो द्विर्भवति ॥ किं ति । जं ति । दिट्ठं ति । न जुत्त ति ॥ स्वरात् । तह त्ति । झ त्ति । पिओत्ति । पुरिसो त्ति ॥ पदादित्येव । इअ विञ्झ-गुहा-निलयाए ॥४२॥

**लुप्त-य-र-व-श-ष-सां श-ष-सां दीर्घः ॥ ८ । १ । ४३ ॥**

प्राकृतलक्षणवशाल्लुप्ता याद्या उपरि अधो वा येषां शकारषकारसकाराणा तेषामादेः स्वरस्य दीर्घो भवति ॥ शस्य यलोपे । पश्यति । पासइ ॥ कश्यप । कासवो ॥ आवश्यक । आवासय ॥ रलोपे । विश्राम्यति वीसमइ ॥ विश्राम । वीसामो ॥ मिश्रम् । मीस ॥ संस्पर्शः । संफासो ॥ वलोपे । अश्व ।

आसो ॥ विश्वसिति । वीससइ ॥ विश्वास । वीसासो । शलोपे । दुश्शासनः । दूसासणो ॥ मनःशिला । मणासिला ॥ षस्य यलोपे । शिष्यः सीसो । पुष्य । पूसो । मनुष्य मणूसो ॥ रलोपे । कर्षकः । कासओ । वर्षा । वासा ॥ वर्ष । वासो ॥ वलोपे । विष्वाण । वीसाणो ॥ विष्वक् । वीसु ॥ षलोपे । निष्षिक्त । नीसित्तो ॥ सस्य यलोपे । सस्यम् । सास ॥ कस्यचित । कासइ ॥ रलोपे । उस्र । ऊसो ॥ विस्रम्भ । वीसम्भो ॥ । वलोपे । विकस्वर । विकासरो ॥ नि स्व । नीसो ॥ सलोपे । निस्सह । नीसहो ॥ न दीर्घानुस्वारात् [२. ९२] इति प्रतिषेधात् सर्वत्र अनादौ शेषादेशयोर्द्वित्वम् [२ ८९] इति द्वित्वाभावः ॥४३॥

## अतः समृद्ध्यादौ वा ॥ ८ । १ । ४४ ॥

समृद्धि इत्येवमादिषु शब्देषु आदेरकारस्य दीर्घो वा भवति । सामिद्धी समिद्धी । पासिद्धी पसिद्धी । पायड । पयट । पाडिवआ पडिवआ । पासुत्तो । पसुत्तो । पाडसिद्धी पडिसिद्धी । सारिच्छो सरिच्छो । माणंसी मणंसी । माणंसिणी मणंसिणी । आहिआई अहिआई । पारोहो परोहो । पावासू पवासू । पाडिप्फद्धी पडिप्फद्धी ॥ समृद्धि । प्रसिद्धि । प्रकट । प्रतिपत । प्रसुप्त । प्रतिसिद्धि । सदृक्ष । मनस्विन् । मनस्विनी । अभियाति । प्ररोह । प्रवासिन् । प्रतिस्पर्धिन् । आकृतिगणोऽयम् । तेन । अस्पर्श । आफंसो । परकीयम् । पारकेरं । पारक्कं ॥ प्रवचनम । पावयण । चतुरन्तम् । चाउरन्त इत्याद्यपि भवति ॥४४॥

## दक्षिणे हे ॥ ८ । १ । ४५ ॥

दक्षिणशब्दे आदेरतो हे परे दीर्घो भवति ॥ दाहिणो ॥ ह इति किम् ? दक्खिणो ॥४५॥

## इः स्वप्नादौ ॥ ८ । १ । ४६ ॥

स्वप्न इत्येवमादिषु आदेरस्य इत्व भवति ॥ सिविणो । सिमिणो ॥ आर्षे उकारोपि । सुमिणो । ईसि । वेडिसो । विलिअं । विअणं । मुइङ्गो । किविणो । उत्तिमो । मिरिअं । दिण्णं ॥ बहुलाधिकारण्णत्वाभावे न भवति । दत्तं । देवदत्तो ॥ स्वप्न । ईषत् । वेतस । व्यलीक । व्यंजन । मृदङ्ग । कृपण । उत्तम । मरिच । दत्त । इत्यादि ॥४६॥

## पक्वाङ्गार-ललाटे वा ॥ ८ । १ । ४७ ॥

एष्वादेरत इत्वं वा भवति ॥ पिक्कं पक्कं । इङ्गालो अङ्गारो । णिडालं णडालं ॥४७॥

## मध्यम-कतमे द्वितीयस्य ॥ ८ । १ । ४८ ॥

मध्यमशब्दे कतमशब्दे च द्वितीयस्यात इत्वं भवति ॥ मज्झिमो । कइमो ॥४८॥

## सप्तपर्णे वा ॥ ८ । १ । ४९ ॥

सप्तपर्णे द्वितीयस्यात इत्वं वा भवति ॥ छत्तिवण्णो । छत्तवण्णो ॥४९॥

## मयट्यइर्वा ॥ ८ । १ । ५० ॥

मयट्प्रत्यये आदेरतः स्थाने अइ इत्यादेशो भवति वा ॥ विषमय. । विसमइओ विसमओ ॥५०॥

## ईर्हरे वा ॥ ८ । १ । ५१ ॥

हरशब्दे आदेरत ईर्वा भवति ॥ हीरो हरो ॥५१॥

## ध्वनि-विष्वचोरुः ॥ ८ । १ । ५२ ॥

अनयोरादेरस्य उत्वं भवति ॥ झुणी । वीसुं ॥ कथं सुणओ । शुनक इति प्रकृत्यन्तरस्य ॥ श्वन्शब्दस्य तु सा सणो इति प्रयोगौ भवतः ॥५२॥

## वन्द्र-खण्डिते णा वा ॥ ८ । १ । ५३ ॥

अनयोरादेरस्य णकारेण सहितस्य उत्वं वा भवति ॥ वुन्द्रं वन्द्रं । खुडिओ खण्डिओ ॥५३॥

### गवये वः ॥ ८ । १ । ५४ ॥

गवयशब्दे वकाराकारस्य उत्वं भवति ॥ गउओ । गउआ ॥५४॥

### प्रथमे प–थोर्वा ॥ ८ । १ । ५५ ॥

प्रथमशब्दे पकारथकारयोरकारस्य युगपत् क्रमेण च उकारो वा भवति ॥ पुढुमं पुढमं पढुमं पढम ॥५५॥

### ज्ञो णत्वे ऽभिज्ञादौ ॥ ८ । १ । ५६ ॥

अभिज्ञ एवंप्रकारेषु ज्ञस्य णत्वे कृते ज्ञस्यैव अत उत्वं भवति ॥ अहिण्णू । सव्वण्णू । कयण्णू । आगमण्णू ॥ णत्व इति किम् ? अहिज्जो । सव्वज्जो ॥ अभिज्ञादाविति किम् ? प्राज्ञः । पण्णो ॥ येषां ज्ञस्य णत्वे उत्वं दृश्यते ते अभिज्ञादयः ॥५६॥

### एच्छय्यादौ ॥ ८ । १ । ५७ ॥

शय्यादिषु आदेरस्य एत्वं भवति ॥ सेज्जा । सुन्देरं । गेन्दुअं । एत्थ ॥ शय्या । सौन्दर्य । कन्दुक । अत्र ॥ आर्षे पुरेकम्मं ॥५७॥

### वल्ल्युत्कर–पर्यन्ताश्चर्ये वा ॥ ८ । १ । ५८ ॥

एषु आदेरस्य एत्वं वा भवति ॥ वेल्ली वल्ली । उक्केरो उक्करो । पेरन्तो पज्जन्तो । अच्छेरं अच्छरिअं अच्छअरं अच्छरिज्जं अच्छरीअं ॥५८॥

### ब्रह्मचर्ये चः ॥ ८ । १ । ५९ ॥

ब्रह्मचर्यशब्दे चस्य अत एत्वं भवति ॥ बम्हचेरं ॥५९॥

### तोन्तरि ॥ ८ । १ ॥ ६० ॥

अन्तरशब्दे तस्य अत एत्वं भवति ॥ अन्तः–पुरम् । अन्तेउरं ॥ अन्तश्चारी । अन्तेआरी । क्वचिन्न भवति । अन्तग्गयं । अन्तोवीसम्भ-निवेसिआणं ॥६०॥

### ओत्पद्मे ॥ ८ । १ । ६१ ॥

पद्मशब्दे आदेरत ओत्वं भवति । पोम्मं ॥ पद्म-छद्म० [२. ११२] इति विश्लेषे न भवति । पउमं ॥६१॥

### नमस्कार-परस्परे द्वितीयस्य ॥८।१।६२॥

अनयोर्द्वितीयस्य अत ओत्वं भवति ॥ नमोक्कारो । परोप्परं ॥६२॥

### वार्पौ ॥८।१।६३॥

अर्पयतौ धातौ आदेरस्य ओत्वं वा भवति ॥ ओप्पेइ अप्पेइ । ओप्पिअं अप्पिअं ॥६३॥

### स्वपावुच्च ॥८।१।६४॥

स्वपितौ धातौ आदेरस्य ओत् उत् च भवति ॥ सोवइ । सुवइ ॥६४॥

### नात्पुनर्यादाई वा ॥८।१।६५॥

नञः परे पुनःशब्दे आदेरस्य आ आइ इत्यादेशौ वा भवतः ॥ न उणा । न उणाइ । पक्षे । न उण । न उणो ॥ केवलस्यापि दृश्यते । पुणाइ ॥६५॥

### वालाब्वरण्ये लुक् ॥८।१।६६॥

अलाब्वरण्यशब्दयोरादेरस्य लुग् वा भवति ॥ लाउं अलाउं । लाऊ अलाऊ । रण्णं अरण्णं ॥ अत इत्येव । आरण्ण-कुञ्जरो व्व वेल्लन्तो ॥६६॥

### वाव्ययोत्खातादावदातः ॥८।१।६७॥

अव्ययेषु उत्खातादिषु च शब्देषु आदेराकारस्य अद् वा भवति ॥ अव्ययम् । जह जहा । तह तहा । अहव अहवा । व वा । ह हा । इत्यादि ॥ उत्खातादि । उक्खयं उक्खायं । चमरो चामरो । कलओ कालओ । ठविओ ठाविओ । परिट्ठविओ । परिट्ठाविओ । संठविओ संठाविओ । पयय पाययं ।

तलवेण्टं तालवेण्ट । तलवोण्ट तालवोण्टं । हलिओ हालिओ । नराओ नाराओ । बलया बलाया । कुमरो कुमारो । खइरं खाइर ॥ उत्खात । चामर । कालक । स्थापित । प्राकृत । तालवृन्त । हालिक । नाराच । बलाका । कुमार । खादिर । इत्यादि ॥ केचिद् ब्राह्मणपूर्वाह्णयोरपीच्छन्ति । बम्हणो बाम्हणो । पुव्वण्हो पुव्वाण्हो ॥ दवग्गी । दावग्गी । चडू । चाडू । इति शब्दभेदात् सिद्धम् ॥६७॥

### घञ्वृद्धेर्वा ॥८।१।६८॥

घञ्निमित्तो यो वृद्धिरूप आकारस्तस्यादिभूतस्य अद् वा भवति ॥ पवहो पवाहो । पहरो पहारो । पयरो पयारो । प्रकारः प्रचारो वा । पत्थवो पत्थावो॥ क्वचिन्न भवति । राग. राओ॥६८॥

### महाराष्ट्रे ॥ ८ । १ । ६९ ॥

महाराष्ट्रशब्दे आदेराकारस्य अद् भवति ॥ मरहट्ठ । मरहट्ठो ॥६९॥

### मांसादिष्वनुस्वारे ॥८।१।७०॥

मासप्रकारेपु अनुस्वारे सति आदेरात अद् भवति ॥ मंस । पसू । पंसणो । कंस । कंसिओ । वंसिओ । पंडवो । ससिद्धिओ । सजत्तिओ ॥ अनुस्वार इति किम् ? मास । पासू ॥ मास । पासु । पांसन । कास्य । कांसिक । वांशिक । पाण्डव । सासिद्धिक । सांयात्रिक । इत्यादि ॥७०॥

### श्यामाके मः ॥ ८ ।१ । ७१ ॥

श्यामाके मस्य आत. अद् भवति ॥ सामओ ॥ ॥७१॥

### इः सदादौ वा ॥८।१।७२॥

सदादिपु शब्देपु आत इत्व वा भवति ॥ सइ सया । निसि-अरो निसा-अरो । कुप्पिसो कुप्पासो ॥७२॥

### आचार्ये चोच्च ॥८।१।७३॥

आचार्यशब्दे चस्य आत इत्वम् अत्वं च भवति ॥ आइरिओ । आयरिओ ॥७३॥

### ईः स्त्यान-खल्वाटे ॥८।१।७४॥

स्त्यानखल्वाटयोरादेरात ईर्भवति ॥ ठीणं । थीण । थिण्ण । खल्लीडो ॥ सखायं इति तु समः स्त्यः खा [४.१५] इति खादेशे सिद्धम् ॥७४॥

### उः सास्ना-स्तावके ॥८।१।७५॥

अनयोरादेरात उत्वं भवति ॥ सुण्हा । थुवओ ॥७५॥

### ऊद्वासारे ॥८।१।७६॥

आसारशब्दे आदेरात ऊद् वा भवति ॥ ऊसारो । आसारो ॥७६॥

### आर्यायां र्यः श्वश्र्वाम् ॥७७॥

आर्याशब्दे श्वश्रूवाच्यायां र्यस्यात ऊर्भवति ॥ अज्जू ॥ श्वश्र्वामिति किम् ? अज्जा ॥७७॥

### एद् ग्राह्ये ॥८।१।७८॥

ग्राह्यशब्दे आदेरात एद् भवति ॥ गेज्झं ॥७८॥

### द्वारे वा ॥८।१।७९॥

द्वारशब्दे आत एद् वा भवति ॥ देर । पक्षे । दुआरं दारं बारं ॥ कथं नेरइओ नारइओ । नैरयिकनारकिकशब्दयोर्भविष्यति ॥ आर्षे अन्यत्रापि । पच्छेकम्म । असहेज्ज देवासुरी ॥७९॥

### पारापते रो वा ॥८।१।८०॥

पारापतशब्दे रस्थस्यात एद् वा भवति ॥ पारेवओ पारावओ ॥८०॥

### मात्रटि वा ॥८।१।८१॥

मात्रट्प्रत्यये आत एद् वा भवति ॥ एत्तिअमेत्तं । एत्तिअमत्त ॥ बहुलाधिकारात् क्वचिन्मात्रशब्दे ऽपि । भोअण-मेत्तं ॥८१॥

## उदोद्वार्द्रे ॥८।१।८२॥

आर्द्रशब्दे आदेरात उत् ओच्च वा भवतः ॥ उल्लं । ओल्लं । पक्षे । अल्लं । अद्दं । बाह-सलिल-पवहेण उल्लेइ ॥८२॥

## ओदाल्यां पंक्तौ ॥८।१।८३॥

आलीशब्दे पङ्क्तिवाचिनि आत ओत्वं भवति॥ ओली ॥ पंक्ताविति किम् ? आली सखी ॥८३॥

## ह्रस्वः संयोगे ॥८।१।८४॥

दीर्घस्य यथादर्शनं संयोगे परे ह्रस्वो भवति ॥ आत् । आम्रम् । अम्बं ॥ ताम्रम् । तम्बं ॥ विरहाग्निः । विरहग्गी ॥ आस्यम् । अस्सं ॥ ईत् । मुनीन्द्रः । मुणिन्दो ॥ तीर्थम् । तित्थं ॥ ऊत् । गुरूल्लापाः । गुरुल्लावा ॥ चूर्णः । चुण्णो ॥ एत् । नरेन्द्रः । नरिन्दो ॥ म्लेच्छः । मिलिच्छो ॥ दिट्ठिक्क-थण-वट्टं ॥ ओत् । अधरोष्ठः । अहरुट्ठं ॥ नीलोत्पलम् । नीलुप्पलं ॥ संयोग इति किम् ? आयासं । ईसरो । ऊसवो ॥८४॥

## इत एद्वा ॥८।१।८५॥

सयोग इति वर्तते । आदेरिकारस्य संयोगे परे एकारो वा भवति ॥ पेण्डं पिण्डं । धम्मेल्ल धम्मिल्ल । सेन्दूरं सिन्दूरं । वेण्हू विण्हू । पेट्ठं पिट्ठं । बेलं बिलं ॥ क्वचिन्न भवति । चिन्ता ॥८५॥

## किंशुके वा ॥८।१।८६॥

किशुकशब्दे आदेरित एकारो वा भवति ॥ केसुअं किसुअं ॥८६॥

## मिरायाम् ॥८।१।८७॥

मिराशब्दे इत एकारो भवति ॥ मेरा ॥८७॥

## पथि-पृथिवी-प्रतिश्रुन्मूषिक-हरिद्रा-बिभीतकेष्वत् ॥८।१।८८॥

एषु आदेरितोकारो भवति ॥ पहो । पुहई । पुढवी । पडंसुआ । मूसओ । हलद्दी । हलद्दा । बहेडओ ॥ पन्थं किर देसित्तेति तु पथिशब्दसमानार्थस्य पन्थशब्दस्य भविष्यति ॥ हरिद्रायां विकल्प इत्यन्ये । हलिद्दी हलिद्दा ॥८८॥

## शिथिलेऽङ्गुदे वा ॥८।१।८९॥

अनयोरादेरितोद् वा भवति ॥ सढिल । पसढिलं । सिढिलं । पसिढिलं । अंगुअं ॥ इङ्गुअं निर्मितशब्दे तु वा आत्वं न विधेयम् । निर्मातनिर्मिशब्दाभ्यामेव सिद्धे. ॥८९॥

## तित्तिरौ रः ॥८।१।९०॥

तित्तिरिशब्दे रस्येतोद् भवति ॥ तित्तिरो ॥९०॥

## इतौ तो वाक्यादौ ॥८।१।९१॥

वाक्यादिभूते इतिशब्दे यस्तस्तत्सबन्धिन इकारस्य अकारो भवति ॥ इअ जम्पिआवसाणे । इअ विअसिअ-कुसुम-सरो ॥ वाक्यादाविति किम् ? पिओ त्ति । पुरिसो त्ति ॥९१॥

## ईर्जिह्वा-सिंह-त्रिंशद्विंशतौ त्या ॥८।१।९२॥

जिह्वादिषु इकारस्य तिशब्देन सह ईर्भवति ॥ जीहा । सीहो । तीसा । वीसा ॥ बहुलाधिकारात क्वचिन्न भवति । सिंह-दत्तो । सिंह-राओ ॥९२॥

## लुकि निरः ॥८।१।९३॥

निर् उपसर्गस्य रेफलोपे सति इत ईकारो भवति ॥ नीसरइ । नीसासो ॥ लुकीति किम् ? निण्णओ । निस्सहाइँ अङ्गाइं ॥९३॥

## द्विन्योरुत् ॥८।१।९४॥

द्विशब्दे नावुपसर्गे च इत उद् भवति । द्वि । दु-मत्तो । दु-आई । दु-विहो । दु-रेहो । दु-वयणं ॥ बहुलाधिकारात् क्वचिद् विकल्प. । दु-उणो बि-उणो। दुइओ । बिइओ ॥ कचिन्न भवति । द्विज ।

दिओ ॥ द्विरदः । दिरओ ॥ क्वचिद् ओत्वमपि । दो-वयणं ॥ नि । णुमज्जइ । णुमन्नो ॥ क्वचिन्न भवति । निवडइ ॥९४॥

**प्रवासीक्षौ ॥८।१।९५॥**

अनयोरादेरित उत्वं भवति ॥ पावासुओ । उच्छू ॥९५॥

**युधिष्ठिरे वा ॥८।१।९६॥**

युधिष्ठिरशब्दे आदेरित उत्वं वा भवति ॥ जहुट्ठिलो । जहिट्ठिलो ॥९६॥

**ओच्च द्विधाकृगः ॥८।१।९७॥**

द्विधाशब्दे कृग्धातोः प्रयोगे इत ओत्वं चकारादुत्वं च भवति । दोहा-किज्जइ । दुहा-किज्जइ ॥ दोहा-इअ ॥ दुहा-इअं ॥ कृग इति किम् ? दिहा-गय ॥ क्वचित् केवलस्यापि ॥ दुहा वि सो सुर-वहू-सत्थो ॥९७॥

**वा निर्झरे ना ॥८।१।९८॥**

निर्झरशब्दे नकारेण सह इत ओकारो वा भवति ॥ ओज्झरो निज्झरो ॥९८॥

**हरीतक्यामीतोत् ॥८।१।९९॥**

हरीतकीशब्दे आदेरीकारस्य अद् भवति ॥ हरडई ॥९९॥

**आत्कश्मीरे ॥८।१।१००॥**

कश्मीरशब्दे ईत आद् भवति ॥ कम्हारा ॥१००॥

**पानीयादिष्वित् ॥८।१।१०१॥**

पानीयादिषु शब्देषु ईत इद् भवति ॥ पाणिअं । अलिअं । जिअइ । जिअउ । विलिअं । करिसो । सिरिसो । दुइअं । तइअं । गहिरं । उवणिअं । आणिअं । पलिविअं । ओसिअन्त । पसिअ । गहिअं । वम्मिओ । तयाणिं ॥ पानीय । अलीक । जीवति । जीवतु । व्रीडित । करीष । शिरीष । द्वितीय । तृतीय । गभीर । उपनीत । आनीत । प्रदीपित । अवसीदत् । प्रसीद । गृहीत । वल्मीक । तदानीम् । इति पानीयादयः ॥ बहुलाधिकारादेषु क्वचिन्नित्यं क्वचिद् विकल्पः । तेन । पाणीअं । अलीअं । जीअइ । करीसो । उवणीओ । इत्यादि सिद्धम् ॥१०१॥

**उज्जीर्णे ॥८।१।१०२॥**

जीर्णशब्दे ईत उद् भवति ॥ जुण्ण-सुरा ॥ क्वचिन्न भवति । जिण्णे भोअणमत्ते ॥१०२॥

**ऊर्हीन-विहीने वा ।८।१।१०३॥**

अनयोरीत ऊत्वं वा भवति ॥ हूणो हीणो । विहूणो विहीणो ॥ विहीन इति किम् ? पहीण-जर-मरणा ॥१०३॥

**तीर्थे हे ॥८।१।१०४॥**

तीर्थशब्दे हे सति ईत उत्वं भवति ॥ तूहं ॥ ह इति किम् ? तित्थं ॥१०४॥

**एत्पीयूषापीड-बिभीतक-कीदृशेदृशे ॥८।१।१०५॥**

एषु ईत एत्वं भवति ॥ पेऊसं । आमेलो । बहेडओ । केरिसो । एरिसो ॥१०५॥

**नीड-पीठे वा ॥८।१।१०६॥**

अनयोरीत एत्वं वा भवति ॥ नेडं नीडं । पेढं पीढं ॥१०६॥

**उतो मुकुलादिष्वत् ॥८।१।१०७॥**

मुकुल इत्येवमादिषु शब्देषु आदेरुतोऽत्वं भवति ॥ मउलं । मउलो । मउरं । मउडं । अगरुं । गरुई । जहुट्ठिलो । जहिट्ठिलो । सोअमल्लं । गलोई ॥ मुकुल । मुकुर । मुकुट । अगुरु । गुर्वी ।

युधिष्ठिर । सौकुमार्य । गुडूची । इति मुकुलादय ॥ क्वचिदाकारो ऽपि । विद्रुत. । विद्दाओ ॥१०७॥

**वोपरौ ॥८।१।१०८॥**

उपरावुतो ऽद् वा भवति ॥ अवरि । उवरिं ॥१०८॥

**गुरौ के वा ॥८।१।१०९॥**

गुरौ स्वार्थे के सति आदेरुतो ऽद् वा भवति ॥ गरुओ गुरुओ ॥ क इति किम् ? गुरु ॥१०९॥

**इर्भ्रुकुटौ ॥८।१।११०॥**

भ्रुकुटावादेरुत इर्भवति ॥ भिउडी ॥११०॥

**पुरुषे रोः ॥८।१।१११॥**

पुरुषशब्दे रोरुत इर्भवति ॥ पुरिसो । पउरिस ॥१११॥

**ईः क्षुते ॥८।१।११२॥**

क्षुतशब्दे आदेरुत ईत्वं भवति ॥ छीअं ॥११२॥

**ऊत्सुभग-मुसले वा ॥८।१।११३॥**

अनयोरादेरुत ऊद् वा भवति ॥ सूहवो सुहओ । मूसलं मुसलं ॥११३॥

**अनुत्साहोत्सन्ने त्सच्छे ॥८।१।११४॥**

उत्साहोत्सन्नवर्जिते शब्दे यौ त्सच्छौ तयोः परयोरादेरुत उद् भवति ॥ त्स । ऊसुओ । ऊसवो । ऊसित्तो । ऊसरइ ॥ छ । उद्गताः शुका यस्मात् सः ऊसुओ । ऊससइ ॥ अनुत्साहोत्सन्न इति किम् ? उच्छाहो । उच्छन्नो ॥११४॥

**लुकि दुरो वा ॥८।१।११५॥**

दुरुपसर्गस्य रेफस्य लोपे सति उत ऊत्वं वा भवति ॥ दूसहो दुसहो । दूहवो दुहवो ॥ लुकीति किम् ? दुस्सहो विरहो ॥११५॥

**ओत्संयोगे ॥८।१।११६॥**

संयोगे परे आदेरुत ओत्वं भवति ॥ तोण्ड । मोण्डं । पोक्खरं । कोट्टिमं । पोत्थओ । लोद्धओ । मोत्था । मोग्गरो । पोग्गलं । कोण्ढो । कोन्तो । वोक्कन्तं ॥११६॥

**कुतूहले वा ह्रस्वश्च ॥८।१।११७॥**

कुतूहलशब्दे उत ओद् वा भवति तत्संनियोगे ह्रस्वश्च वा ॥ कोऊहलं कुऊहलं कोउहल्लं ॥ ११७॥

**अदूतः सूक्ष्मे वा ॥८।१।११८॥**

सूक्ष्मशब्दे उतो ऽद् वा भवति ॥ सण्हं सुण्हं ॥ आर्षे । सुहुमं ॥११८॥

**दुकूले वा लश्च द्विः ॥८।१।११९॥**

दुकूलशब्दे ऊकारस्य अत्वं वा भवति तत्संनियोगे च लकारो द्विर्भवति ॥ दुअल्लं दुऊलं ॥ आर्षे दुगुल्लं ॥११९॥

**ईर्वोद्व्यूढे ॥८।१।१२०॥**

उद्व्यूढशब्दे ऊत ईत्वं वा भवति ॥ उव्वीढं । उव्वूढं ॥१२०॥

**उर्भ्रू-हनूमत्कण्डूय-वातूले ॥८।१।१२१॥**

एषु ऊत उत्वं भवति ॥ भुमया । हणुमन्तो । कण्डुअइ । वाउलो ॥१२१॥

**मधूके वा ॥८।१।१२२॥**

मधूकशब्दे ऊत उद् वा भवति ॥ महुअं महूअं ॥१२२॥

**इदेतौ नूपुरे वा ॥८।१।१२३॥**

नूपुरशब्दे ऊत इत् एत् इत्येतौ वा भवतः ॥ निउरं नेउरं । पक्षे नूउरं ॥१२३॥

**ओत्कूष्माण्डी-तूणीर-कूर्पर-स्थूल-ताम्बूल-गुडूची-मूल्ये ॥८।१।१२४॥**

एषु ऊत ओद् भवति ॥ कोहण्डी कोहली । तोणीरं । कोप्परं । थोरं । तम्बोलं । गलोई । मोल्लं ॥१२४॥

## स्थूणा-तूणे वा ॥८।१।१२५॥

अनयोरूत ओत्वं वा भवति ॥ थोणा थूणा । तोणं तूणं ॥१२५॥

## ऋतो ऽत् ॥८।१।१२६॥

आदेरृकारस्य अत्वं भवति ॥ घृतम् । घयं ॥ तृणम् । तण ॥ कृतम् । कयं ॥ वृषभः । वसहो ॥ मृग. । मओ ॥ घृष्ट. । घट्ठो ॥ दुहाइअमिति कृपादिपाठात् ॥१२६॥

## आत्कृशा-मृदुक-मृदुत्वे वा ॥८।१।१२७॥

एषु आदेरृत आद् वा भवति ॥ कासा किसा । माउक्कं मउअं । माउक्कं मउत्तणं ॥१२७॥

## इत्कृपादौ ॥८।१।१२८॥

कृपा इत्यादिषु शब्देषु आदेरृत इत्वं भवति ॥ किंवा । हिययं । मिट्ठं रसे एव । अन्यत्र मट्ठं । दिट्ठ । दिट्ठी । सिट्ठं । सिट्ठी । गिण्ठी । पिच्छी । भिऊ । भिङ्गो । भिङ्गारो । सिङ्गारो । सिआलो । घिणा । घुसिणं । विद्ध-कई । समिद्धी । इद्धी । गिद्धी । किसो । किसाणू । किसरा । किच्छ । तिप्पं । क्रिसिओ । निवो । किच्चा । किई । धिई । किवो । किविणो । किवाणं । विञ्चुओ । वित्तं । वित्ती । हिअं । वाहित्तं । विहिओ । विसी । इसी । विइण्हो । छिहा । सइ । उक्किट्ठं । निससो ॥ क्वचिन्न भवति । रिद्धी ॥ कृपा । हृदय । मृष्ट । दृष्ट । दृष्टि । सृष्ट । सृष्टि । गृष्टि । पृथ्वी । भृगु । भृङ्ग । भृङ्गार । शृङ्गार । शृगाल । घृणा । घुसृण । वृद्धकवि । समृद्धि । ऋद्धि । गृद्धि । कृश । कृशानु । कृसरा । कृच्छ्र । तृप्त । कृषित । नृप । कृत्या । कृति । धृति । कृप । कृपण । कृपाण । वृश्चिक । वृत्त । वृत्ति । हृत । व्याहृत । बृंहित । वृसी । ऋषि । वितृष्ण । स्पृहा । सकृत् । उत्कृष्ट । नृशंश ॥१२८॥

## पृष्ठे वानुत्तरपदे ॥८।१।१२९॥

पृष्ठशब्दे ऽनुत्तरपदे ऋत इद् भवति वा ॥ पिट्ठी पट्ठी । पिट्ठिपरिट्ठविअं । अनुत्तरपद इति किम् ? महि-वट्ठं ॥१२९॥

## मसृण-मृगाङ्क-मृत्यु-शृङ्ग-धृष्टे वा ॥८।१।१३०॥

एषु ऋत इद् वा भवति ॥ मसिणं मसणं । मिअङ्को । मयङ्को । मिच्चु मच्चु । सिङ्ग । सङ्गं । धिट्ठो धट्ठो ॥१३०॥

## उदृत्वादौ ॥८।१।१३१॥

ऋतु इत्यादिषु शब्देषु आदेरृत उद् भवति ॥ उऊ । परामुट्ठो । पुट्ठो । पउट्ठो । पुहई । पउत्ती । पाउसो । पाउओ । भुई । पहुडि । पाहुडं । परहुओ । निहुअं निउअं । सवुअं । वुत्तन्तो । निव्वुअं । निव्वुई । वुन्दं । वुन्दावणो । वुड्ढो । उसहो । मुणालं । उज्जू । जामाउओ । माउओ । माउआ । भाउओ । पिउओ पुहुवी ॥ ऋतु । परामृष्ट । स्पृष्ट । प्रवृष्ट । पृथिवी । प्रवृत्ति । प्रावृष् । प्रावृत । भृति । प्रभृति । प्राभृत । परभृत । निभृत । निवृत । विवृत । सवृत । वृत्तान्त निर्वृत । निर्वृति । वृन्द । वृन्दावन । वृद्ध । वृद्धि । ऋषभ । मृणाल । ऋजु । जामातृक । मातृक । मातृका भ्रातृक । पितृक । पृथ्वी । इत्यादि ॥१३१॥

## निवृत्त-वृन्दारके वा ॥८।१।१३२॥

अनयोरृत उद् वा भवति ॥ निवुत्त निअत्त । वुन्दारया वन्दारया ॥१३२॥

## वृषभे वा वा ॥८।१।१३३॥

वृषभे ऋतो वेन सह उद् भवति ॥ उसहो वसहो ॥१३३॥

**गौणान्त्यस्य ॥८।१।१३४॥**

गौणशब्दस्य यो ऽन्त्य ऋत् तस्य उद् भवति । माउ-मण्डलं । माउहरं । पिउ-हरं । माउ-सिआ । पिउ-सिआ । पिउवण । पिउ वई ॥१३४॥

**मातुरिद्वा ॥८।१।१३५॥**

मातृशब्दस्य गौणस्य ऋत इद् भवति ॥ माइ हरं ॥ क्वचिदगौणस्यापि । माईण ॥१३५॥

**उदूदोन्मृषि ॥८।१।१३६॥**

मृषाशब्दे ऋत उत् ऊत् ओच्च भवन्ति ॥ मुसा मूसा । मोसा । मुसा-वाओ । मूसा वाओ मोसा-वाओ ॥१३६॥

**इदुतौ वृष्ट-वृष्टि-पृथङ् मृदङ्ग-नप्तृके ॥८।१।१३७॥**

एषु ऋत इकारोकारौ भवत ॥ विट्ठो वुट्ठो । विट्ठी वुट्ठी । पिहं पुह । मिइङ्गो मुइङ्गो । नात्तिओ नात्तुओ ॥१३७॥

**वा बृहस्पतौ ॥८।१।१३८॥**

बृहस्पतिशब्दे ऋत इदुतौ वा भवत ॥ बिहप्फई बुहप्फई । पक्षे । बहप्फई ॥१३८॥

**इदेदोद्वृन्ते ॥८।१।१३९॥**

वृन्तशब्दे ऋत इत् एत् ओच्च भवन्ति ॥ विण्ट वेण्टं वोण्ट ॥१३९॥

**रिः केवलस्य ॥८।१।१४०॥**

केवलस्य व्यञ्जनेनासपृक्तस्य ऋतो रिरादेशो भवति ॥ रिद्धी । रिच्छो ॥१४०॥

**ऋणर्ज्वृषभत्वृषौ वा ॥८।१।१४१॥**

ऋणऋजुऋषभऋतुऋषिषु ऋतो रिर्वा भवति ॥ रिण अणं । रिज्जू उज्जु । रिसहो उसहो । रिऊ उऊ । रिसी इसी ॥

**दृशः क्विप् टक्सकः ॥८।१।१४२॥**

क्विप् टक् सक् इत्येतदन्तस्य दृशेर्धातोर्ऋतो रिरादेशो भवति ॥ सदृक् । सरि-वण्णो । सरि-रुवो सरि-बन्दीणं ॥ सदृशः । सरिसो ॥ सदृक्षः । सरि-च्छो ॥ एवम् एआरिसो । भवारिसो । जारिसो । तारिसो । केरिसो । एरिसो । अन्नारिसो । अम्हारिसो तुम्हारिसो ॥ टक्सक्साहचर्यात् **त्यदाद्यन्या**दिति [हे० ५. १. १५०) सूत्रविहितः क्विबिह गृह्यते ॥१४२॥

**आदृते ढिः ॥८।१।१४३॥**

आदृतशब्दे ऋतो ढिरादेशो भवति ॥ आढिओ ॥१४३॥

**अरिर्दृप्ते ॥८।१।१४४॥**

दृप्तशब्दे ऋतो रिरादेशो भवति ॥ दरिओ । दरिअ-सीहेण ॥१४४॥

**लृत इलिः क्लृप्त-क्लृन्ने ॥८।१।१४५॥**

अनयोर्लृत इलिरादेशो भवति ॥ किलित्त–कुसुमोवयारेसु ॥ धाराकिलिन्न-वत्तं ॥१४५॥

**एत इद्वा वेदना-चपेटा-देवर-केसरे ॥८।१।१४६॥**

वेदनादिषु एत इत्वं वा भवति ॥ विअणा वेअणा । चविडा । विअडचवेडा-विणोआ । दिअरो देवरो ॥ महमहिअ-दसण-किसरं । केसरं ॥ महिला महेला इति तु महिलामहेलाभ्यां शब्दाभ्यां सिद्धम् ॥१४६॥

**ऊः स्तेने वा ॥८।१।१४७॥**

स्तेने एत ऊद् वा भवति ॥ थूणो थेणो ॥१४७॥

**ऐत एत् ॥८।१।१४८॥**

ऐकारस्यादौ वर्तमानस्य एत्वं भवति ॥ सेला ।

तेलोक्कं । एरावणो । केलासो । वेज्जो । केढवो । वेहव्वं ॥१४८॥

इत्सैन्धव-शनैश्चरे ॥८।१।१४९॥

एतयोरैत इत्वं भवति ॥ सिन्धवं । सणिच्छरो ॥१४९॥

सैन्ये वा ॥८।१।१५०॥

सैन्यशब्दे ऐत इद् वा भवति ॥ सिन्नं सेन्नं ॥१५०॥

अइदैत्यादौ च ॥८।१।१५१॥

सैन्यशब्दे दैत्य इत्येवमादिषु च ऐतो अइ इत्यादेशो भवति । एत्वापवादः ॥ सइन्नं । दइच्चो । दइन्नं । अइसरिअ । भइरवो । वइजवणो । दइवअं । वइआलीअ । वइएसो । वइएहो । वइदब्भो । वइस्साणरो । कइअव । वइसाहो । वइसालो । सइरं चइत्त ॥ दैत्य । दैन्य । ऐश्वर्य । भैरव । वैजवन । दैवत । वैतालीय । वैदेश । वैदेह । वैदर्भ । वैश्वानर । कैतव । वैशाख । स्वैर । चैत्य । इत्यादि ॥ विश्लेषे न भवति । चैत्यम् । चैइअं ॥ आर्षे । चैत्यवन्दनम् । ची-वन्दणं ॥

वैरादौ वा ॥८।१।१५२॥

वैरादिषु ऐत अइरादेशो वा भवति ॥ वइरं वेरं । कइलासो केलासो । कइरव केरवं । वइसवणो वेसवणो । वइसम्पायणो वेसम्पायणो । वइआलिओ वेआलिओ । वइसिअ वेसिअं । चइत्तो चेत्तो ॥ वैर । कैलास । करव । वैश्रवण । वैशम्पायन । वैतालिक । वैशिक । चैत्र । इत्यादि ॥१५२॥

एच्च दैवे ॥८।१।१५३॥

दैवशब्दे ऐत एत् अइश्चादेशो भवति ॥ देव्वं दइव्व दइव ॥१५३॥

उच्चैर्नीचस्यैअः ॥८।१।१५४॥

अनयोरैतः अअ इत्यादेशो भवति ॥ उच्चअं । नीचअं । उच्चनीचाभ्यां के सिद्धम् । उच्चैर्नीचैसोस्तु रूपान्तरनिवृत्त्यर्थं वचनम् ॥१५४॥

ईद्धैर्ये ॥८।१।१५५॥

धैर्यशब्दे ऐत ईद् भवति ॥ धीरं हरइ विसाओ ॥१५५॥

ओतोद्वान्योन्य-प्रकोष्ठातोद्य-शिरोवेदना-मनोहर-सरोरुहे क्तोश्च वः ॥८।१।१५६॥

एषु ओतोत्त्वं वा भवति तत्सनियोगे च यथासभवं ककारतकारयोर्वादेशः ॥ अन्नन्नं अन्नुन्नं । पवट्ठो पउट्ठो । आवज्जं आउज्जं । सिरविअणा सिरो-विअणा । मणहरं मणोहरं । सररुह सरोरुहं ॥१५६॥

ऊत्सोच्छ्वासे ॥८।१।१५७॥

सोच्छ्वासशब्दे ओत ऊद् भवति ॥ सोच्छ्वासः । सूसासो ॥१५७॥

गव्यउ-आअ ॥८।१।१५८॥

गोशब्दे ओतः अउ आअ इत्यादेशौ भवत. ॥ गउओ । गउआ । गाओ ॥ हरस्स एसा गाई ॥१५८॥

औत ओत् ॥८।१।१५९॥

औकारस्यादेरोद् भवति ॥ कौमुदी कोमुई ॥ यौवनम् । जोव्वणं ॥ कौस्तुभ । कोत्थुहो । कौशाम्बी॥ कोसम्बी । क्रौञ्चः कोञ्चो ॥ कौशिक । कोसिओ ॥१५९॥

उत्सौन्दर्यादौ ॥८।१।१६०॥

सौन्दर्यादिषु शब्देषु औत उद् भवति ॥ सुन्देरं सुन्दरिअं । मुञ्जायणो । सुण्डो । सुद्धोअणी । दुवारिओ । सुगन्धत्तणं । पुलोमी । सुवण्णिओ ॥

सौन्दर्य । मौञ्जायन । शौण्ड । शौद्धोदनि । दौवारिक । सौगन्ध्य । पौलोमी । सौवर्णिकः ॥१६०॥

### कौक्षेयके वा ॥८।१।१६१॥

कौक्षेयकशब्दे औत उद् वा भवति ॥ कुच्छेअयं । कोच्छेअय ॥१६१॥

### अउः पौरादौ च ॥८।१।१६२॥

कौक्षेयके पौरादिषु च औत अउरादेशो भवति ॥ कउच्छेअयं । पौरः । पउरो । पउर-जणो ॥ कौरवः । कउरवो ॥ कौशलम् कउसल ॥ पौरुषम् । पउरिसं ॥ सौधम् । सउहं ॥ गौडः । गउडो ॥ मौलिः । मउली ॥ मौनम् । मउण ॥ सौराः । सउरा ॥ कौलाः ॥ कउला ॥१६२॥

### आच्च गौरवे ॥८।१।१६३॥

गौरवशब्दे औत आत्वम् अउश्च भवति ॥ गारवं गउरवं ॥१६३॥

### नाव्यावः ॥८।१।१६४॥

नौशब्दे औत आवादेशो भवति ॥ नावा ॥ ॥१६४॥

### एत्त्रयोदशादौ स्वरस्य सस्वरव्यञ्जनेन ॥८।१।१६५॥

त्रयोदश इत्येवंप्रकारेषु संख्याशब्देषु आदेः स्वरस्य परेण सस्वरेण व्यञ्जनेन सह एद् भवति ॥ तेरह । तेवीसा । तेतीसा ॥१६५॥

### स्थविर-विचकिलायस्कारे ॥८।१।१६६॥

एषु आदेः स्वरस्य परेण सस्वरव्यञ्जनेन सह एद् भवति ॥ थेरो । वेइल्लं । मुद्ध-विअइल्ल-पसूण-पुञ्जा इत्यपि दृश्यते । एक्कारो ॥१६६॥

### वा कदले ॥८।१।१६७॥

कदलशब्दे आदेः स्वरस्य परेण सस्वरव्यञ्जनेन सह एद् वा भवति ॥ केलं कयलं । केली कयली ॥१६७॥

### वेतः कर्णिकारे ॥८।१।१६८॥

कर्णिकारे इतः सस्वरव्यञ्जनेन सह एद् वा भवति ॥ कण्णेरो कण्णिआरो ॥१६८॥

### अयौ वैत् ॥८।१।१६९॥

अयिशब्दे आदेः स्वरस्य परेण सस्वरव्यञ्जनेन सह ऐद् वा भवति ॥ ऐ बीहेमि । अइ उम्मत्तिए । वचनादैकारस्यापि प्राकृते प्रयोगः ॥१६९॥

### ओत्पूतर-बदर-नवमालिका-नवफलिका पूगफले ॥८।१।१७०॥

पूतरादिषु आदेः स्वरस्य परेण सस्वरव्यञ्जनेन सह ओद् भवति ॥ पोरो । बोर । बोरी । नोमालिआ । नोहलिआ पोप्फलं । पोप्फली ॥

### न वा मयूख-लवण-चतुर्गुण-चतुर्थ चतुर्दशचतुर्वार सुकुमार-कुतूहलोदूखलोलूखले ।८।१।१७१

मयूखादिषु आदेः स्वरस्य परेण सस्वरव्यञ्जनेन सह ओद् वा भवति ॥ मोहो मऊहो । लोणं । इअ लवणुग्गमा । चोग्गुणो । चउग्गुणो । चोत्थो चउत्थो । चोत्थी चउत्थी । चोद्दह । चउद्दह । चोद्दसी चउद्दसी । चोव्वारो चउव्वारो । सोमालो सुकुमालो । कोहलं कोउहल्लं । तह मन्ने कोहलिए । ओहलो । उऊहलो । ओक्खलं । उलूहलं ॥ मोरो मऊरो इति तु मोरमयूरशब्दाभ्या सिद्धम् ॥१७१॥

### अवापोते ॥८।१॥१७२॥

अवापयोरुपसर्गयोरुत इति विकल्पार्थनिपाते च आदेः स्वरस्य परेण सस्वरव्यञ्जनेन सह ओद् वा भवति ॥ अव । ओअरइ । अवयरइ । ओआसो अवयासो ॥ अप । ओसरइ अवसरइ । ओसारिअं अवसारिअं ॥ उत । ओ वणं । ओ घणो । उअ वणं । उअ घणो ॥ क्वचिन्न भवति । अवगयं अवसद्दो । उअ रवी ॥१७२॥

**ऊच्चोपे ॥८।१।१७३॥**

उपशब्दे आदे. स्वस्य परेण सस्वरव्यञ्जनेन सह ऊत् ओच्चादेशौ वा भवत ॥ ऊहसिअं ओहसिअं उवहसिअं ऊज्झाओ ओज्झाओ उवज्झाओ । ऊआसो ओआसो उववासो ॥१७३॥

**उमो निषण्णे ॥८।१।१७४॥**

निषण्णशब्दे आदेः स्वरस्य परेण सस्वरव्यञ्जनेन सह उम आदेशो वा भवति ॥ णुमण्णो । णिसण्णो ॥१७४॥

**प्रावरणे अङ्ग्वाऊ ॥८।१।१७५॥**

प्रावरणशब्दे आदेः स्वरस्य परेण सस्वरव्यञ्जनेन सह अंगु आउ इत्येतावादेशौ वा भवतः ॥ पंगुरणं पाउरणं पावरणं ॥१७५॥

**स्वरादसंयुक्तस्यानादेः ॥८।१।१७६॥**

अधिकारो ऽ यम् । यदित ऊर्ध्वमनुक्रमिष्याम-स्तत्स्वरात्परस्यासयुक्तस्यानादेर्भवतीति वेदितव्यम् ॥१७६॥

**क-ग-च-ज त-द-प-य-वां प्रायो लुक् ॥८।१।१७७॥**

स्वरात्परेषामनादिभूतानामसयुक्तानां कगचजतदपयवाना प्रायो लुग् भवति ॥ क । तित्थयरो । लोओ । सयढं ॥ ग । नओ । नयरं । मयङ्को ॥ च । सई । कय-ग्गहो ॥ ज । रययं । पयावई । गओ ॥ त । विआण । रसा-यल । जई ॥ द । गया । मयणो ॥ प । रिऊ सुउरिसो ॥ य । दयालू । नयणं । विओओ ॥ व । लायण्णं । विउहो । वलयाणलो ॥ प्रायोग्रहणात्कचिन्न भवति । सुकुसुम । पयागजलं । सुगओ । अगरू । सचावं । विजणं । सुतार । विदुरो । सपाव । समवाओ । देवो । दाणवो ॥ स्वरादित्येव । सकरो । सगमो । नक्कचरो । धणंजओ । विसतवो । पुरंदरो । सवुडो । सवरो ॥ असयुक्तस्येत्येव । अक्को । वग्गो । अच्चो । वज्ज । धुत्तो । उद्दामो । विप्पो । कज्जं । सव्वं ॥ क्वचित्संयुक्तस्यापि । नक्तंचरः । नक्कंचरो ॥ अनादेरित्येव । कालो । गन्धो । चोरो । जारो । तरू । दवो । पावं । वण्णो ॥ यकारस्य तु जत्वम आदौ वक्ष्यते । समासे तु वाक्यविभक्त्यपेक्षया भिन्नपदत्वमपि विवक्ष्यते । तेन तत्र यथादर्शनमुभयमपि भवति । सुहकरो सुहयरो । आगमिओ आयमिओ । जलचरो जलयरो । बहुतरो बहुअरो । सुहदो । सुहओ । इत्यादि ॥ क्वचिदादेरपि । स पुन. । स उण ॥ स च । सो अ ॥ चिह्नं । इन्ध ॥ क्वचिच्चस्य ज । पिशाची । पिसाजी ॥ एकत्वम् । एगत्तं ॥ एक । एगो ॥ अमुक । अमुगो ॥ असुकः । असुगो ॥ श्रावक । सावगो ॥ आकारः । आगारो ॥ तीर्थकरः । तित्थगरो ॥ आकर्ष. । आगरिसो ॥ लोगस्सुज्जोअगरा इत्यादिषु तु व्यत्ययश्च [४ ४४७] इत्येव कस्य गत्वम् ॥ आर्षे अन्यदपि दृश्यते । आकुञ्चन आउण्टण । अत्र चस्य टत्वम् ॥१७७॥

**यमुना-चामुण्डा-कामुकातिमुक्तके मो ऽ नुनासिकश्च ॥८।१।१७८॥**

एषु मस्य लुग् भवति लुकि च सति मस्य स्थाने अनुनासिको भवति ॥ जउँणा । चाउँण्डा । काउँओ । अणिउँतयं ॥ क्वचिन्न भवति । अइमुंतयं । अइमुत्तय ॥१७८॥

**नावर्णात्पः ॥८।१।१७९॥**

अवर्णात्परस्यानादेः पस्य लुग् न भवति ॥ सवहो । सावो ॥ अनादेरित्येव । परउट्ठो ॥१७९॥

**अवर्णो यश्रुतिः ॥८।१।१८०॥**

कगचजेत्यादिना लुकि सति शेषः अवर्णः अवर्णात्परो लघुप्रयत्नतरयकारश्रुतिर्भवति ॥ तित्थयरो । सयढ । नयरं । मयङ्को । कयग्गहो । काय-

मणी । रययं । पयावई । रसायलं । पायाल । मयणो । गया । नयणं । दयालू । लायण्णं । अवर्ण इति किम् ? सउणो । पउणो । पउरं । राईव । निहओ । निनओ । वाऊ । कई । अवर्णादित्येव । लोअस्स । देअरो ॥ क्वचिद् भवति । पियइ ॥१८०॥

**कुब्ज कर्पर-कीले कः खो ऽ पुष्पे ॥८।१।१८१॥**

एषु कस्य खो भवति पुष्पं चेत् कुब्जाभिधेयं न भवति ॥ खुज्जो । खप्परं । खीलओ ॥ अपुष्प इति किम् ? बंधेउं कुज्जय-पसूणं । आर्षे ऽन्यत्रापि । कासितं । खासिअ । कसित । खसिअं ॥१८१॥

**मरकत-मदकले गः कन्दुके त्वादेः ॥८।१।१८२॥**

अनयोः कस्य गो भवति कन्दुके त्वाद्यस्य कस्य ॥ मरगयं । मयगलो । गेन्दुअं ॥१८२॥

**किराते चः ॥८।१।१८३॥**

किराते कस्य चो भवति ॥ चिलाओ ॥ पुलिन्द एवायं विधिः । कामरूपिणि तु नेष्यते । नमिमो हर-किरायं ॥१८३॥

**शीकरे भ-हौ वा ॥८।१।१८४॥**

शीकरे कस्य भहौ वा भवतः ॥ सीभरो सीहरो । पक्षे । सीअरो ॥१८४॥

**चन्द्रिकायां मः ॥८।१।१८५॥**

चन्द्रिकाशब्दे कस्य मो भवति ॥ चन्दिमा ॥१८५॥

**निकष-स्फटिक-चिकुरे हः ॥८।१।१८६॥**

एषु कस्य हो भवति ॥ निहसो । फलिहो । चिहुरो । चिहुरशब्दः संस्कृते ऽपि इति दुर्गः ॥१८६॥

**ख-घ-थ ध-भाम् ॥८।१।१८७॥**

स्वरात्परेषामसंयुक्तानामनादिभूतानां ख घ थ ध भ इत्येतेषां वर्णानां प्रायो हो भवति ॥ ख । साहा । मुहं । मेहला । लिहइ ॥ घ । मेहो । जहणं । माहो । लाहइ ॥ थ । नाहो । आवसहो । मिहुणं । कहइ ॥ ध । साहू । वाहो । बहिरो । वाहइ । इन्द-हणू ॥ भ । सहा । सहावो । नहं । थणहरो । सोहइ ॥ स्वरादित्येव । सखो । सघो । कंथा । बंधो । खंभो ॥ असंयुक्तस्येत्येव । अक्खइ । अग्घइ । कत्थइ । सिद्धओ । बन्धइ । लब्भइ ॥ अनादेरित्येव । गज्जन्ते खे मेहा । गच्छइ घणो ॥ प्राय इत्येव । सरिसव-खलो । पलय-घणो । अथिरो । जिण-धम्मो । पणट्ठ-भओ । नभ ॥१८७॥

**पृथकि धो वा ॥८।१।१८८॥**

पृथक्शब्दे थस्य धो वा भवति ॥ पिध पुध । पिह पुहं ॥१८८॥

**शृङ्खले खः कः ॥८।१।१८९॥**

शृङ्खले खस्य को भवति ॥ सङ्कलं ॥१८९॥

**पुन्नाग-भागिन्योर्गो मः ॥८।१।१९०॥**

अनयोर्गस्य मो भवति ॥ पुन्नामाइँ वसन्ते । भामिणी ॥१९०॥

**छागे लः ॥८।१९१**

छागे गस्य लो भवति ॥ छालो । छाली ॥१९१॥

**ऊत्वे दुर्भग-सुभगे वः ॥८।१।१९२॥**

अनयोरूत्वे गस्य वो भवति ॥ दूहवो । सूहवो ॥ ऊत्व इति किम् ? दुहओ । सुहओ ॥१९२॥

**खचित-पिशाचयोश्चः स-ल्लौ वा ॥८।१।१९३॥**

अनयोश्चस्य यथासंख्य स ल्ल इत्यादेशौ वा भवतः ॥ खसिओ खइओ । पिसल्लो पिसाओ ॥ ॥१९३॥

**जटिले जो झो वा ॥८।१।१९४॥**

जटिले जस्य झो वा भवति ॥ झडिलो जडिलो ॥१९४॥

**टो डः ॥८।१।१९५॥**

स्वरात्परस्यासयुक्तस्यानादेष्टस्य डो भवति ॥ नडो । भडो । घडो । घडइ ॥ स्वरादित्येव । घटा असयुक्तस्येत्येव । खट्टा ॥ अनादेरित्येव । टक्को ॥ क्वचिन्न भवति । अटति । अटइ ॥१९५॥

**सटा-शकट कैटभे ढः ॥८।१।१९६॥**

एषु टस्य ढो भवति ॥ सढा । सयढो । केढवो ॥१९६॥

**स्फटिके लः ॥८।१।१९७॥**

स्फटिके टस्य लो भवति ॥ फलिहो ॥१९७॥

**चपेटा पाटौ वा ॥८।१।१९८॥**

चपेटाशब्दे ण्यन्ते च पटिधातौ टस्य लो वा भवति ॥ चविला चविडा । फालेइ फाडेइ ॥१९८॥

**ठो ढः ॥८।१।१९९॥**

स्वरात्परस्यासयुक्तस्यानादेष्टस्य ढो भवति ॥ मढो । सढो । कमढो । कुढारो । पढइ । स्वरादित्येव । वेकुंठो ॥ असयुक्तस्येत्येव । चिट्ठइ ॥ अनादेरित्येव । हिअए ठाइ ॥१९९॥

**अङ्कोठे ल्लः ॥८।१।२००॥**

अङ्कोठे ठस्य द्विरुक्तो लो भवति ॥ अङ्कोल्ल-तेल्ल-तुप ॥२००॥

**पिठरे हो वा रश्च डः ॥८।१।२०१॥**

पिठरे ठस्य हो वा भवति तत्सनियोगे च रस्य डो भवति ॥ पिहडो पिढरो ॥२०१॥

**डो लः ॥८।१।२०२॥**

स्वरात्परस्यासयुक्तस्यानादेर्डस्य प्रायो लो भवति ॥ वडवामुखम् । वलया–मुह ॥ गरुलो । तलाय । कीलइ ॥ स्वरादित्येव । मोंडं । कोड ॥ असंयुक्तस्येत्येव । खग्गो ॥ अनादेरित्येव । रमइ डिम्भो ॥ प्रायोग्रहणात् क्वचिद् विकल्प । वलिसं वडिसं । दालिमं दाडिमं । गुलो गुडो । णाली णाडी णलं णडं । आमेलो आवेडो ॥ क्वचिन्न भवत्येव । निविडं । गउडो । पीडिअं । नीडं । उडू । तडी ॥ ॥२०२॥

**वेणौ णो वा ॥८।१।२०३॥**

वेणौ णस्य लो वा भवति ॥ वेळू । वेणू ॥ ॥२०३॥

**तुच्छे तश्च छौ वा ॥८।१।२०४**

तुच्छशब्दे तस्य च छ इत्यादेशौ वा भवत ॥ चुच्छं । छुच्छं । तुच्छ ॥२०४॥

**तगर त्रसर तूवरे ८ । १ । २०५ ॥**

एषु तस्य टो भवति ॥ टगरो । टसरो टूवरो ॥ ॥२०५॥

**प्रत्यादौ डः ॥८।१।२०६॥**

प्रत्यादिषु तस्य डो भवति ॥ पडिवन्न । पडिहासो । पडिहारो । पाडिप्फद्धी । पडिसारो । पडिनिअत्त । पडिमा । पडिवया । पडसुआ । पडिकरइ । पहुडि । पाहुडं । वावडो । पडाया । बहेडओ । हरडई । मडयं ॥ आर्षे । दुष्कृतम् । दुक्कड । सुकृतम् । सुकड ॥ आहृतम् । आहड । अवहृत । अवहडं । इत्यादि ॥ प्राय इत्येव । प्रतिसमयम् । पइसमयं । प्रतीपम् । पईव ॥ सम्प्रति । सपइ ॥ प्रतिष्ठानम् । पइट्ठाण । प्रतिष्ठा । पइट्ठा । प्रतिज्ञा । पइण्णा ॥ प्रति । प्रभृति । प्राभृत । व्यापृत । पताका । बिभीतक । हरीतकी । मृतक । इत्यादि ॥२०६॥

**इत्वे वेतसे ॥८।१।२०७॥**

वेतसे तस्य डो भवति इत्वे सति ॥ वेडिसो ॥ इत्व इति किम् ? वेअसो ॥ इ स्वप्नादौ (१ ४६) इति इकारो न भवति इत्व इति व्यावृत्तिबलात् ॥ ॥२०७॥

**गर्भितातिमुक्तके णः ॥८।१।२०८॥**

अनयोस्तस्य णो भवति ॥ गब्भिणो । अणिउँतयं ॥ क्वचिन्न भवत्यपि । अइमुत्तयं ॥ कथम् एरावणो । ऐरावणशब्दस्य । एरावओ इति तु ऐरावतस्य ॥२०८॥

**रुदिते दिना ण्णः ॥८।१।२०९॥**

रुदिते दिना सह तस्य द्विरुक्तो णो भवति ॥ रुण्ण ॥ अत्र केचिद ऋत्वादिषु द इत्यारब्धवन्तः स तु शौरसेनीमागधीविषय एव दृश्यते इति नोच्यते । प्राकृते हि । ऋतु । रिऊ । उऊ ॥ रजतम् । रयय । एतद् । एअं ॥ गतः । गओ ॥ आगत । आगओ ॥ साम्प्रतम् सपयं ॥ यत । जओ ॥ तत । तओ ॥ कृतम् । कयं ॥ हतम् । हय ॥ हताश । हयासो ॥ श्रुतः । सुओ ॥ आकृतिः । आकिई ॥ निर्वृतः । निव्वुओ ॥ तातः । ताओ ॥ कतरः कयरो ॥ द्वितीय दुइओ इत्यादयः प्रयोगा भवन्ति । न पुन उदू रयदं इत्यादि ॥ क्वचित् भावे ऽपि व्यत्ययश्च (४.४४७) इत्येव सिद्धम् ॥ दिही इत्येतदर्थं तु धृतेर्दिहिः (२-१३१) इति वक्ष्यामः ॥२०९॥

**सप्ततौ रः ॥८।१।२१०॥**

सप्ततौ तस्य रो भवति ॥ सत्तरी ॥२१०॥

**अतसी सातवाहने लः ॥८।१।२११॥**

अनयोस्तस्य लो भवति ॥ अलसी । सालाहणो । सालवाहणो । सालाहणी भासा ॥२११॥

**पलिते वा ॥८।१।२१२॥**

पलिते तस्य लो वा भवति ॥ पलिलं । पलिअं ॥ ॥२१२॥

**पीते वो ले वा ॥८।१।२१३॥**

पीते तस्य वो वा भवति स्वार्थलकारे परे ॥ पीवलं । पीअलं ॥ ल इति किम् ? पीअं ॥२१३॥

**वितस्ति वसति-भरत-कातर-मातुलिङ्गे हः ॥८।१।२१४॥**

एषु तस्य हो भवति ॥ विहत्थी । वसही ॥ बहुलाधिकारात् क्वचिन्न भवति । वसई । भरहो । काहलो । माहुलिङ्गं । मातुलुङ्गशब्दस्य तु माउलुङ्गं ॥२१४॥

**मेथि-शिथिर-प्रथमे थस्य ढः ॥८।१।२१५॥**

एषु थस्य ढो भवति । हापवादः ॥ मेढी । सिढिलो । सिढिलो पढमो ॥२१५॥

**निशीथ-पृथिव्योर्वा ॥८।१।२१६॥**

अनयोस्थस्य ढो वा भवति ॥ निसीढो । निसीहो । पुढवी ॥ पुहवी ॥२१६॥

**दशन-दष्ट-दग्ध-दोला-दण्ड-दर-दाह-दम्भ-दर्भ-कदन-दोहदे दो वा डः ॥८।१।२१७॥**

एषु दस्य डो वा भवति ॥ डसण दसणं । डट्ठो दट्ठो । डड्ढो दड्ढो । डोला दोला । डण्डो दण्डो । डरो दरो । डाहो दाहो । डम्भो दम्भो । डब्भो दब्भो । कडणं कयणं । डोहलो दोहलो ॥ दरशब्दस्य च भयार्थवृत्तेरेव भवति । अन्यत्र दर-दलिअं ॥२१७॥

**दंश-दहोः ॥८।१।२१८॥**

अनयोर्धात्वोर्दस्य डो भवति ॥ डसइ । डहइ ॥२१८॥

**संख्या-गद्गदे रः ॥८।१।२१९॥**

सख्यावाचिनि गद्गदशब्दे च दस्य रो भवति ॥ एआरह । बारह ॥ तेरह । गग्गरं ॥ अनादेरित्येव । ते दस ॥ असयुक्तस्येत्येव ॥ चउद्दह ॥२१९॥

**कदल्यामद्रुमे ॥८।१।२२०॥**

कदलीशब्दे अद्रुमवाचिनि दस्य रो भवति ॥ करली ॥ अद्रुम इति किम् ? कयली । केली ॥२२०॥

**प्रदीपि-दोहदे लः ॥८।१।२२१॥**

प्रपूर्वे दीप्यतौ धातौ दोहदशब्दे च दस्य लो भवति ॥ पलीवेइ पलित्त । दोहलो ॥२२१॥

**कदम्बे वा ॥८।१।२२२॥**

कदम्बशब्दे दस्य लो वा भवति ॥ कलम्बो । कयम्बो ॥२२२॥

**दीपौ धो वा ॥८।१।२२३॥**

दीप्यतौ दस्य धो वा भवति ॥ धिप्पइ । दिप्पइ ॥२२३॥

**कदर्थिते वः ॥८।१।२२४॥**

कदर्थिते दस्य वो भवति ॥ कवट्टिओ ॥२२४॥

**ककुदे हः ॥८।१।२२५**

ककुदे दस्य हो भवति ॥ कउहं ॥२२५॥

**निषधे धो ढः ॥८।१।२२६॥**

निषधे धस्य ढो भवति ॥ निसढो ॥ २२६॥

**वौषधे ॥८।१।२२७॥**

ओषधे धस्य ढो वा भवति ॥ ओसढं । ओसहं ॥२२७॥

**नो णः ॥८।१।२२८॥**

स्वरात्परस्यासंयुक्तस्यानादेर्नस्य णो भवति ॥ कणयं । मयणो । वयण । नयणं । माणइ ॥ आर्षे । आरनालं । अनिलो । अनलो । इत्याद्यपि ॥२२८॥

**वादौ ॥८।१।२२९॥**

असयुक्तस्यादौ वर्तमानस्य नस्य णो वा भवति ॥ णरो नरो । णई नई । णेइ नेइ ॥ असंयुक्तस्येत्येव । न्याय. । नाओ ॥२२९॥

**निम्ब-नापिते ल-ण्हं वा ॥८।१।२३०॥**

अनयोर्नस्य ल ण्ह इत्येतौ वा भवत ॥ लिम्बो निम्बो । ण्हाविओ नाविओ ॥२३०॥

**पो वः ॥८।१।२३१॥**

स्वरात्परस्यासंयुक्तस्यानादे: पस्य प्रायो वो भवति ॥ सवहो । सावो । उवसग्गो । पइवो । कासवो । पावं । उवमा । कविल । कुणवं । कलावो । कवालं । महि-वालो । गो-वइ । तवइ ॥ स्वरादित्येव । कम्पइ ॥ असयुक्तस्येत्येव । अप्पमत्तो ॥ अनादेरित्येव । सुहेण पढइ ॥ प्राय इत्येव । कई । रिऊ ॥ एतेन पकारस्य प्राप्तयोर्लोपवकारयोर्यस्मिन् कृते श्रुतिसुखमुत्पद्यते स तत्र कार्यः ॥२३१॥

**पाटि-परुष परिघ-परिखा-पनस-पारिभद्रे फः ॥८।१।२३२॥**

ण्यन्ते पटिधातौ परुषादिषु च पस्य फो भवति ॥ फालेइ फाडेइ । फरुसो । फलिहो । फलिहा । फणसो । फालिहद्दो ॥२३२॥

**प्रभूते वः ॥८।१।२३३॥**

प्रभूते पस्य वो भवति ॥ वहुत्त ॥२३३॥

**नीपापीडे मो वा ॥८।१।२३४॥**

अनयोः पस्य मो वा भवति ॥ नीमो नीवो । आमेलो आमेडो ॥२३४॥

**पापर्द्धौ रः ॥८।१।२३५॥**

पापर्द्धावपदादौ पकारस्य रो भवति ॥ पारद्धी ॥२३५॥

**फो भ-हौ ॥८।१।२३६॥**

स्वरात्परस्यासयुक्तस्यानादेः फस्य भहौ भवत ॥ क्वचिद् भ । रेफ । रेभो ॥ शिफा । सिभा ॥ क्वचित्तु ह. । मुत्ताहलं ॥ क्वचिदुभावपि । सभलं सहलं । सेभालिआ सेहालिआ । सभरी सहरी । गुभइ गुहइ ॥ स्वरादित्येव । गुंफइ । असंयुक्तस्येत्येव । पुप्फ ॥ अनादेरित्येव । चिट्ठइ फणी ॥ प्राय इत्येव । कसण-फणी ॥२३६॥

**बो वः ॥ ८ । १ । २३७ ॥**

स्वरात्परस्यासयुक्तस्यानादेर्बस्य वो भवति ॥ अलाबू । अलावू । अलाऊ ॥ शबलः । सवलो ॥२३७॥

**विसिन्यां भः ॥ ८ । १ । २३८ ॥**

बिसिन्यां बस्य भो भवति ॥ भिसिणी ॥ स्त्रीलिङ्गनिर्देशादि न भवति । बिस-तन्तु पेलवाणं ॥२३८॥

**कवन्धे म-यौ ॥ ८ । १ । २३९ ॥**

कबन्धे बस्य मयौ भवतः ॥ कमन्धो । कयन्धो । ॥२३९॥

**कैटभे भो वः ॥ ८ । १ । २४० ॥**

कैटभे भस्य वो भवति ॥ केढवो ॥२४०॥

**विषमे मो ढो वा ॥ ८ । १ । २४१ ॥**

विषमे मस्य ढो वा भवति ॥ विसढो । विसमो ॥२४१॥

**मन्मथे वः ॥ ८ । १ । २४२ ॥**

मन्मथे मस्य वो भवति ॥ वम्महो ॥२४२॥

**वाभिमन्यौ ॥ ८ । १ । २४३ ॥**

अभिमन्युशब्दे मो वो वा भवति ॥ अहिवन्नू अहिमन्नू ॥२४३॥

**भ्रमरे सो वा ॥ ८ । १ । २४४ ॥**

भ्रमरे मस्य सो वा भवति ॥ भसलो भमरो ॥२४४॥

**आदेर्यो जः ॥ ८ । १ । २४५ ॥**

पदादेर्यस्य जो भवति ॥ जसो । जमो । जाइ ॥ आदेरिति किम् ? अवयवो । विणवो ॥ बहुलाधिकारात् सोपसर्गस्यानादेरपि । संजमो । संजोगो । अवजसो ॥ क्वचिन्न भवति । पओओ ॥ आर्षे लोपो ऽपि । यथाख्यातम् । अहक्खायं । यथाजातं । अहाजायं ॥२४५॥

**युष्मदर्थपरे तः ॥ ८ । १ २४६ ॥**

युष्मच्छब्देर्थपरे यस्य तो भवति ॥ तुम्हारिसो । तुम्हकेरो ॥ अर्थपर इति किम् ? जुम्हदम्ह-पयरणं ॥२४६॥

**यष्ट्यां लः ॥ ८ । १ । २४७ ॥**

यष्ट्यां यस्य लो भवति ॥ लट्ठी । वेणु-लट्ठी । उच्छु-लट्ठी । महु-लट्ठी ॥२४७॥

**वोत्तरीयानीय-तीय-कृद्ये ज्जः ॥ ८ । १ । २४८ ॥**

उत्तरीयशब्दे अनीयतीयकृद्यप्रत्ययेषु च यस्य द्विरुक्तो जो वा भवति ॥ उत्तरिज्जं उत्तरीअं ॥ अनीय । करणिज्जं करणीअं । विम्हयणिज्जं विम्हयणीअं । जवणिज्ज जवणीअ ॥ तीय । बिइज्जो बीओ ॥ कृद्य । पेज्जा पेआ ॥२४८॥

**छायायां होकान्तौ वा ॥ ८ । १ । २४९ ॥**

अकान्तौ वर्तमाने छायाशब्दे यस्य हो वा भवति ॥ वच्छस्स च्छाही वच्छस्स च्छाया । आतपाभावः । सच्छाहं सच्छायं ॥ अकान्ताविति किम् ? मुह-च्छाया । कान्तिरित्यर्थ. ॥२४९॥

**डाह-वौ कतिपये ॥ ८ । १ । २५० ॥**

कतिपये यस्य डाह व इत्येतौ पर्यायेण भवतः॥ कइवाह । कइअव ॥२५०॥

**किरि-भेरे रो डः ॥ ८ । १ । २५१ ॥**

अनयो रस्य डो भवति ॥ किडी । भेडो ॥ ॥२५१॥

**पर्याणे डा वा ॥ ८ । १ । २५२ ॥**

पर्याणे रस्य डा इत्यादेशो वा भवति ॥ पडायाणं पल्लाणं ॥२५२॥

**करवीरे णः ॥ ८ । १ । २५३ ॥**

करवीरे प्रथमस्य रस्य णो भवति ॥ कणवीरो ॥२५३॥

**हरिद्रादौ लः ॥८ । १ । २५४ ॥**

हरिद्रादिषु शब्देषु असंयुक्तस्य लो भवति ॥ हलिद्दी । दलिद्दाइ । दलिद्दो । दालिद्दं । हलिद्दो । जहुट्ठिलो । सिढिलो । मुहलो । चलणो । वलुणो । कलुणो । इङ्गालो । सक्कालो । सोमालो । चिलाओ । फलिहा । फलिही । फालिहद्दो । काहलो लुक्को । अवद्दालं । भसलो । जढलं । बढलो । निट्ठुलो ॥ बहुलाधिकाराच्चरणशब्दस्य पादार्थवृत्तेरेव । अन्यत्र चरण-करणं ॥ भ्रमरे ससंनियोगे एव । अन्यत्र भमरो ॥ तथा । जढर । बढरो । निट्ठुरो इत्यादयपि ॥ हरिद्रा । दरिद्राति । दरिद्र ॥ दारिद्र्य । हरिद्र । युधिष्ठिर । शिथिर । मुखर । चरण । वरुण । करुण । अङ्गार । सत्कार । सुकुमार । किरात । परिखा । परिघ । पारिभद्र । कातर । रुग्ण । अपद्वार । भ्रमर । जरठ । वठर । निष्ठुर इत्यादि ॥ आर्षे दुवालसङ्गे इत्याद्यपि ॥२५४॥

**स्थूले लो रः ॥८ ।१ । २५५ ॥**

स्थूले लस्य रो भवति ॥ थोरं ॥ कथं । थूल-भद्दो । स्थूरस्य हरिद्रादिलत्वे भविष्यति ॥२५५॥

**लाहल-लाङ्गल-लाङ्गूले वादेर्णः ॥८।१।२५६॥**

एषु आदेर्लस्य णो वा भवति ॥ णाहलो लाहलो ॥ णङ्गलं । लङ्गलं । णङ्गूलं । लङ्गूलं ॥२५६॥

**ललाटे च ॥८।१।२५७॥**

ललाटे च आदेर्लस्य णो भवति ॥ चकार आदेरनुवृत्त्यर्थः ॥ णिडालं णडालं ॥२५७॥

**शबरे वो मः ।८।१।२५८॥**

शबरे बस्य मो भवति ॥ समरो ॥२५८॥

**स्वप्न-नीव्योर्वा ॥८।१।२५९॥**

अनयोर्वस्य मो वा भवति ॥ सिमिणो सिविणो । नीमी नीवी ॥२५९॥

**श-षोः सः ॥८।१।२६०॥**

शकारषकारयोः सो भवति ॥ श । सद्दो । कुसो । निससो । वंसो । सामा । सुद्धं । दस । सोहइ । विसइ ॥ ष । सण्ढो निहसो । कसाओ । घोसइ । उभयोरपि । सेसो । विसेसो ॥२६०॥

**स्नुषायां ण्हो न वा ॥८।१।२६१॥**

स्नुषाशब्दे षस्य ण्हः णकाराक्रान्तो हो वा भवति ॥ सुण्हा सुसा ॥२६१॥

**दश-पाषाणे हः ॥८।१। २६२॥**

दशन्शब्दे पाषाणशब्दे च शषोर्यथादर्शनं हो वा भवति ॥ दह-मुहो दस-मुहो । दह-बलो दस-बलो । दह-रहो दस-रहो । दह दस । एआरह । बारह तेरह । पाहाणो पासाणो ॥२६२॥

**दिवसे सः ॥८।१।२६३॥**

दिवसे सस्य हो वा भवति ॥ दिवहो । दिवसो ॥२६३॥

**हो घोऽनुस्वारात् ॥८।१।२६४॥**

अनुस्वारात्परस्य हस्य घो वा भवति । सिंघो । सीहो ॥ संघारो संहारो । क्वचिदननुस्वारादपि । दाहः । दाघो ॥२६४॥

**षट्-शमी-शाव-सुधा-सप्तपर्णेष्वादेश्छः ॥८।१।२६५॥**

एषु आदेर्वर्णस्य छो भवति ॥ छट्ठो । छट्ठी । छप्पओ । छम्मुहो । छमी । छावो । छुहा । छत्तिवण्णो ॥२६५॥

**शिरायां वा ॥८।१।२६६॥**

शिराशब्दे आदेश्छो वा भवति ॥ छिरा सिरा ॥२६६॥

**लुग् भाजन-दनुज-राजकुले जः सस्वरस्य न वा ॥८।१।२६७॥**

एषु सस्वरजकारस्य लुग् वा भवति ॥ भाणं भायणं । द्णु-वहो । दणुअ-वहो । रा-उलं राय-उलं ॥२६७॥

**व्याकरण–प्राकारागते कगोः ॥८।१।२६८॥**

एषु को गश्च सस्वरस्य लुग् वा भवति ॥ वारणं वायरणं । पारो पायारो ॥ आओ आगओ ॥ ॥२६८॥

**किसलय-कालायस-हृदये यः ॥८।१।२६९॥**

एषु सस्वरयकारस्य लुग् वा भवति ॥ किसलं किसलयं । कालास कालायसं । महण्णव-समा सहिआ । जाला ते सहिअएहिं घेप्पन्ति । निसमणुप्पिअ-हिअस्स हिअयं ॥२६९॥

**दुर्गादेव्युदुम्बर-पादपतन-पाद-पीठेन्तर्दः ॥८।१।२७०॥**

एषु सस्वरस्य दकारस्य अन्तर्मध्ये वर्तमानस्य लुग् वा भवति ॥ दुग्गा-वी । दुग्गा-एवी । उम्बरो उउम्बरो । पा-वडणं पाय-वडणं । पा–वीढं पाय-वीढं ॥ अन्तरिति किम् ? दुर्गादेव्यामादौ मा भूत् ॥२७०॥

**यावत्तावज्जीवितावर्तमानावट-प्रावारक-देवकुलै-वमेवे वः ॥८ । १ । २७१॥**

यावदादिषु सस्वरवकारस्यान्तर्वर्तमानस्य लुग् वा भवति । जा जाव । ता ताव । जीअं जीविअं । अत्तमाणो आवत्तमाणो । अडो अवडो । पारओ पावारओ । दे-उलं देव-उलं । एमेव एवमेव ॥ अन्तरित्येव । एवमेवेन्त्यस्य न भवति ॥

**इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनवृत्तौ अष्टमस्याध्यायस्य प्रथमः पादः ॥**

यद् दोर्मण्डलकुण्डलीकृतधनुर्दण्डेन सिद्धाधिप ? क्रीतं, वैरिकुलात् त्वया किल दलत्कुन्दावदातं यशः ।
भ्रान्त्वा त्रीणि जगन्ति खेदविवश तन्मालवीनां व्यधा–दापाण्डौ स्तनमण्डले च धवले गण्डस्थले च स्थितिम् ॥१॥

---

॥अर्हं॥

**संयुक्तस्य ॥८।२।१॥**

अधिकारो ऽयं ज्यायामीत् [२. ११५] इति यावत् । यदित ऊर्ध्वमनुक्रमिष्यामस्तत्सयुक्तस्येति वेदितव्यम् ॥१॥

**शक्त-मुक्त-दष्ट-रुग्ण-मृदुत्वे को वा ॥८।२।२॥**

एषु संयुक्तस्य को वा भवति ॥ सक्को सत्तो । मुक्को मुत्तो । डक्को दट्ठो । लुक्को लुग्गो । माउक्कं माउत्तण ॥२॥

**क्षः खः क्वचित्तु छ-झौ ॥८ । २ । ३॥**

क्षस्य खो भवति । खओ । लक्खणं ॥ क्वचित्तु छझावपि । खीणं । छीणं । झीणं । झिज्जइ ॥३॥

**ष्क-स्कयोर्नाम्नि ॥८ । २ । ४॥**

अनयोर्नाम्नि संज्ञायां खो भवति ॥ ष्क ।

पोक्खरं । पोक्खरिणी । निक्खं ॥ स्क । खन्धो । खन्धावारो । अवक्खन्दो ॥ नाम्नीति किम् ? दुक्करं । निक्कम्पं । निक्कओ । नमोक्कारो । सक्कयं । सक्कारो । तक्करो ॥४॥

**शुष्क-स्कन्दे वा ॥८ । २ । ५॥**

अनयोः ष्कस्कयोः खो वा भवति ॥ सुक्खं सुक्कं । खन्दो कन्दो ॥५॥

**क्ष्वेटकादौ ॥८ । २ । ६॥**

क्ष्वेटकादिषु सयुक्तस्य खो भवति ॥ खेडओ । क्ष्वेटकशब्दो विषपर्यायः । क्ष्वोटकः । खोडओ ॥ स्फोटकः । खोडओ । स्फेटकः । खेडओ । स्फेटिकः । खेडिओ ॥६॥

**स्थाणावहरे ॥८ । २ । ७॥**

स्थाणौ सयुक्तस्य खो भवति हरश्चेद् वाच्यो न भवति ॥ खाणू ॥ अहर इति किम् ? थाणुणो रेहा ॥७॥

**स्तम्भे स्तो वा ॥८ । २ । ८॥**

स्तम्भशब्दे स्तस्य खो वा भवति ॥ खम्भो । थम्भो । काष्ठादिमयाः ॥८॥

**थ-ठावस्पन्दे ॥८ । २ । ९॥**

स्पन्दाभाववृत्तौ स्तम्भे स्तस्य थठौ भवतः ॥ थम्भो ठम्भो ॥ स्तम्भ्यते । थम्भिज्जइ ठम्भिज्जइ ॥९॥

**रक्ते गो वा ॥८ । २ । १०॥**

रक्तशब्दे सयुक्तस्य गो वा भवति ॥ रग्गो रत्तो ॥१०॥

**शुक्ले ङ्गो वा ॥८ । २ । ११॥**

शुल्कशब्दे सयुक्तस्य ङ्गो वा भवति ॥ सुङ्गं सुक्क ॥११॥

**कृत्ति-चत्वरे चः ॥८ । २ । १२॥**

अनयोः सयुक्तस्य चो भवति । किच्ची । चच्चरं ॥१२॥

**त्योऽचैत्ये ॥८ । २ । १३॥**

चैत्यवर्जिते त्यस्य चो भवति ॥ सच्चं । पच्चओ ॥ अचैत्य इति किम् ? चइत्त ॥१३॥

**प्रत्यूषे षश्च हो वा ॥८ । २ ।१४॥**

प्रत्यूषे त्यस्य चो भवति तत्संनियोगे च षस्य हो वा भवति ॥ पच्चूहो । पच्चूसो ॥१४॥

**त्व-थ्व-द्व-ध्वां च-छ-ज-झाः क्वचित् ॥८ । २ । १५॥**

एषा यथासंख्यमेते क्वचिद् भवन्ति ॥ भुक्त्वा । भोच्चा ॥ ज्ञात्वा । णच्चा ॥ श्रुत्वा । सोच्चा । पृथ्वी । पिच्छी ॥ विद्वान् । विज्जं ॥ बुद्ध्वा बुज्झा ॥१५॥

भोच्चा सयलं पिच्छिं, विज्ज बुज्झा अणण्णय-ग्गामि ।
चइऊण तव काउं, सन्ती पत्तो सिव परमं ॥

**वृश्चिके श्चेर्ञ्चुर्वा ॥८।२।१६॥**

वृश्चिके श्चेः सस्वरस्य स्थाने ञ्चुरादेशो वा भवति । छापवादः ॥ विञ्चुओ विंचुओ । पक्षे । विञ्छिओ ॥१६॥

**छो ऽक्ष्यादौ ॥८।२।१७॥**

अक्ष्यादिषु सयुक्तस्य छो भवति । खस्यापवादः ॥ अच्छि । उच्छू । लच्छी । कच्छो । छीअं । छीरं । सरिच्छो । वच्छो । मच्छिआ । छेत्तं । छुहा । दच्छो । कुच्छी । वच्छं । छुण्णो । कच्छा । छारो । कुच्छेअयं । छुरो । उच्छा । छयं । सारिच्छं ॥ अक्षि । इक्षु । लक्ष्मी । कक्ष । क्षुत । क्षीर । सदृक्ष । वृक्ष । मक्षिका । क्षेत्र । क्षुध् । दक्ष । कुक्षि । वक्षस् । क्षुण्ण । कक्षा । क्षार । कौक्षेयक । क्षुर । उक्षन् । क्षत । सादृश्य ॥ क्वचित् स्थगितशब्दे ऽपि । छइअं ॥ आर्षे । इक्खू । खीरं । सारिक्खमित्याद्यपि दृश्यते ॥१७॥

**क्ष्मायां कौ ॥ ८ । २ । १८ ॥**

कौ पृथिव्यां वर्तमाने क्ष्माशब्दे सयुक्तस्य छो भवति ॥ छमा पृथिवी ॥ लाक्षणिकस्यापि क्ष्मादेशस्य भवति। क्ष्मा । छमा ॥ काविति किम् ? खमा क्षान्तिः ॥१८॥

**ऋक्षे वा ॥ ८ । २ । १९ ॥**

ऋक्षशब्दे संयुक्तस्य छो वा भवति ॥ रिच्छं। रिक्खं। रिच्छो । रिक्खो ॥ कथं छूढं क्षिप्तं। वृक्ष-क्षिप्तयो रुक्ख-छूढौ [२. १२७] इति भविष्यति ॥१९॥

**क्षण उत्सवे ॥ ८ । २ । २० ॥**

क्षणशब्दे उत्सवाभिधायिनि संयुक्तस्य छो भवति ॥ छणो ॥ उत्सव इति किम् ? खणो ॥२०॥

**ह्रस्वात् थ्य-श्च-त्स-प्सामनिश्चले ॥८।२।२१॥**

ह्रस्वात्परेषां थ्यश्चत्सप्सां छो भवति निश्चले तु न भवति ॥ थ्य । पच्छं। पच्छा। मिच्छा ॥ श्च । पच्छिमं । अच्छेरं । पच्छा ॥ त्स । उच्छाहो । मच्छलो। मच्छरो। सवच्छलो। सवच्छरो। चिइच्छइ ॥ प्स । लिच्छइ । जुगुच्छइ । अच्छरा ॥ ह्रस्वादिति किम् ? ऊसारिओ। अनिश्चल इति किम् ? निच्चलो ॥ आर्षे तथ्ये चो ऽपि। तच्चं ॥२१॥

**सामर्थ्योत्सुकोत्सवे वा ॥८।२।२२॥**

एषु संयुक्तस्य छो वा भवति ॥ सामच्छं सामत्थं। उच्छुओ ऊसुओ। उच्छवो ऊसवो ॥२२॥

**स्पृहायाम् ॥८।२।२३॥**

स्पृहाशब्दे संयुक्तस्य छो भवति। फस्यापवादः ॥ छिहा ॥ बहूलाधिकारात्क्वचिदन्यदपि। निप्पिहो ॥२३॥

**द्य-य्य-र्यां जः ॥८।२।२४॥**

एषां संयुक्तानां जो भवति॥ द्य । मज्जं । अवज्जं। वेज्जो। जुई। जोजो ॥ य्य । जज्जो । सेज्जा ॥ र्य । भज्जा । चौर्यसमत्वात् भारिआ । कज्जं। वज्जं । पज्जाओ । पज्जत्तं। मज्जाया ॥२४॥

**अभिमन्यौ ज-ञ्जौ वा ॥८।२।२५॥**

अभिमन्यौ संयुक्तस्य जो ञ्जश्च वा भवति ॥ अहिमज्जू। अहिमञ्जू। पक्षे। अहिमन्नू ॥ अभिग्रहणादिह न भवति। मन्नू॥

**साध्वस-ध्य-ह्यां झः ॥८।२।२६॥**

साध्वसे संयुक्तस्य ध्यह्ययोश्च झो भवति ॥ सज्झसं ॥ ध्य। वज्झए। झाणं। उवज्झाओ। सज्झं। विज्झो ॥ ह्य। सज्झो । मज्झं ॥ गुज्झं । णज्झइ ॥२६॥

**ध्वजे वा ॥८।२।२७॥**

ध्वजशब्दे संयुक्तस्य झो वा भवति ॥ झओ धओ ॥२७॥

**इन्धौ झा ॥८।२।२८॥**

इन्धौ धातौ सयुक्तस्य झा इत्यादेशो भवति ॥ समिज्झाइ विज्झाइ ॥२८॥

**वृत्त-प्रवृत्त-मृत्तिका-पत्तन कदर्थिते टः ॥८।२।२९॥**

एषु संयुक्तस्य टो भवति ॥ वट्टो। पयट्टो मट्टिआ। पट्टणं। कवट्टिओ ॥२९॥

**र्तस्याधूर्तादौ ॥८।२।३०॥**

र्तस्य टो भवति धूर्तादीन् वर्जयित्वा ॥ केवट्टो। वट्टी। जट्टो । पयट्टइ ॥ वट्टुलं । रायवट्टयं। नट्टई। संवट्टिअं ॥ अधूर्तादाविति किम् ? धुत्तो। कित्ती। वत्ता। आवत्तणं। निवत्तणं। पवत्तणं। संवत्तणं । आवत्तओ । निवत्तओ। निव्वत्तओ। पवत्तओ। संवत्तओ। वत्तिआ। वत्तिओ।

कत्तिओ । उक्कत्तिओ । कत्तरी । मुत्ती । मुत्तो । मुहुत्तो ॥ बहुलाधिकाराद् वट्टा ॥ धूर्त । कीर्ति । वार्ता । । आवर्तन । निवर्तन । प्रवर्तन । संवर्तन । आवर्तक । निवर्तक । निर्वर्तक । प्रवर्तक । सवर्तक वर्तिका । वार्तिक । कातिक । उत्कर्तित । कर्तरी । मूर्ति । मूर्त । मुहूर्त । इत्यादि ॥३०॥

**वृन्ते ण्टः ॥८।२।३१॥**

वृन्ते संयुक्तस्यय ण्टो भवति ॥ वेण्टं । तालवेण्ट ॥३१॥

**ठोऽस्थि-विसंस्थुले ॥८।२।३२॥**

अनयोः संयुक्तस्य ठो भवति ॥ अट्ठी । विसंट्ठुल ॥३२॥

**स्त्यान-चतुर्थार्थे वा ॥८।२।३३॥**

एषु संयुक्तस्य ठो वा भवति ॥ ठीण थीणं। चउट्ठो । अट्ठो प्रयोजनम् । अत्थो धनम् ॥

**ष्टस्यानुष्ट्रेष्टासंदष्टे ॥८।२।३४॥**

उष्ट्रादिवर्जिते ष्टस्य ठो भवति ॥ लट्ठी । मुट्ठी दिट्ठी । सिट्ठी । पुट्ठो । कट्ठं । सुरट्ठा । इट्ठो । अणिट्ठं । अनुष्ट्रेष्टासंदष्ट इति किम् ? उट्टो इट्टा-चुण्ण व्व । सदट्टो ॥३४॥

**गर्ते डः ॥८।२।३५॥**

गर्तशब्दे सयुक्तस्य डो भवति । टापवाद' गड्डो । गड्डा ॥३५॥

**संमर्द-वितर्दि-विच्छर्द-च्छर्दि-कपर्द-मर्दिते र्दस्य ॥८।२।३६॥**

एषु र्दस्य डत्वं भवति ॥ समड्डो । विअ-ड्डी । विच्छड्डो । छड्डइ । छड्डी । कवड्डो । मड्डिओ । समड्डिओ ॥३६॥

**गर्दभे वा ॥८।२।३७॥**

गर्दभे र्दस्य डो वा भवति ॥ गड्डहो गद्दहो । ॥३७॥

**कन्दरका-भिदिपाले ण्डः ॥८।२।३८॥**

अनयोः संयुक्तस्य ण्डो भवति ॥ कण्डलिआ । भिण्डिवालो ॥३८॥

**स्तब्धे ठ-ढौ ॥८।२।३९॥**

स्तब्धे संयुक्तयोर्यथाक्रमं ठढौ भवतः ॥ ठड्ढो ॥३९॥

**दग्ध-विदग्ध-वृद्धि-वृद्धे ढः ॥८।२।४०॥**

एषु सयुक्तस्य ढो भवति ॥ दड्ढो । विअ-ड्ढो । वुड्ढी । वुड्ढो ॥ क्वचिन्न भवति । विद्ध-कइ-निरूविअं ॥४०॥

**श्रद्धर्द्धि-मूर्धार्धेन्ते वा ॥८।२।४१॥**

एषु अन्ने वर्तमानस्य सयुक्तस्य ढो वा भवति ॥ सड्ढा सद्धा । इड्ढी रिद्धी । मुण्ढा मुद्धा । अड्ढं अद्धं ॥४१॥

**म्नज्ञोर्णः ॥८।२।४२॥**

अनयोर्णो भवति ॥ म्न । निण्णं । पज्जुण्णो ॥ ज्ञ । णाणं । सण्णा । पण्णा । विण्णाणं ॥४२॥

**पञ्चाशत्पञ्चदश-दत्ते ॥८।२।४३॥**

एषु सयुक्तस्य णो भवति ॥ पण्णासा । पण्ण-रह । दिण्णं ॥४३॥

**मन्यौ न्तो वा ॥८।२।४४॥**

मन्युशब्दे सयुक्तस्य न्तो वा भवति ॥ मन्तू मन्नू ॥४४॥

**स्तस्य थोऽसमस्त-स्तम्बे ॥८।२।४५॥**

समस्तस्तम्बवर्जिते स्तस्य थो भवति ॥ हत्थो । थुई । थोत्तं । थोअं । पत्थरो । पसत्थो । अत्थि ।

सत्थि॥ असमस्तस्तम्ब इति किम्? समत्तो। तम्बो॥४५॥

स्तवे वा॥८।२।४६॥

स्तवशब्दे स्तस्य थो वा भवति॥ थवो तवो॥४६॥

पर्यस्ते थ-टौ॥८।२।४७॥

पर्यस्ते स्तस्य पर्यायेण थटौ भवतः॥ पल्लत्थो पल्लट्टो॥४७॥

वोत्साहे थो हश्च रः॥८।२।४८॥

उत्साहशब्दे संयुक्तस्य थो वा भवति तत्संनियोगे च हस्य रः॥ उत्थारो उच्छाहो॥४८॥

आश्लिष्टे ल-धौ॥८।२।४९॥

आश्लिष्टे संयुक्तयोर्यथासंख्यं ल ध इत्येतौ भवतः॥ आलिद्धो॥४९॥

चिह्ने न्धो वा॥८।२।५०॥

चिह्ने संयुक्तस्य न्धो वा भवति। ण्हापवादः॥ पक्षे सोपि॥ चिन्धं इन्धं चिण्हं॥५०॥

भस्मात्मनोः पो वा॥८।२।५१॥

अनयोः संयुक्तस्य पो वा भवति॥ भप्पो भस्मो। अप्पा अप्पाणो। पक्षे। अत्ता॥५१॥

ड्म-क्मोः॥८।२।५२॥

ड्मक्मोः पो भवति॥ कुड्मलम्। कुम्पलं। रुक्मिणी। रुप्पिणी॥ क्वचित् च्मोपि। रुच्मी रुप्पी॥५२॥

ष्प-स्पयोः फः॥८।२।५३॥

ष्पस्पयोः फो भवति॥ पुष्पम्। पुप्फं॥ शष्पम्। सप्फं॥ निष्पेषः॥ निप्फेसो॥ निष्पावः। निप्फावो॥ स्पन्दनम्। फन्दणं॥ प्रतिस्पर्धिन्। पाडिप्फद्धी॥ बहुलाधिकारात् क्वचिद् विकल्पः। बुहप्फई बुहप्पई॥ क्वचिन्न भवति। निप्पहो। णिप्पुंसणं। परोप्परम्॥५३॥

भीष्मे ष्मः॥८।२।५४॥

भीष्मे ष्मस्य फो भो भवति॥ भिप्फो॥५४॥

श्लेष्मणि वा॥८।२।५५॥

श्लेष्मशब्दे ष्मस्य फो वा भवति॥ सेफो सिलिम्हो॥५५॥

ताम्राम्रे म्बः॥८।२।५६॥

अनयोः संयुक्तस्य मयुक्तो बो भवति॥ तम्बं। अम्बं॥ अम्बिर तम्बिर इति देश्यौ॥५६॥

ह्वो भो वा॥८।२।५७॥

ह्वस्य भो वा भवति॥ जिब्भा जीहा॥५७॥

वा विह्वले वौ वश्च॥८।२।५८॥

विह्वले ह्वस्य भो वा भवति तत्संनियोगे च विशब्दे वस्य वा भो भवति॥ भिब्भलो विब्भलो विहलो॥५८॥

वोर्ध्वे॥८।२।५९॥

ऊर्ध्वशब्दे संयुक्तस्य भो वा भवति॥ उब्भं उद्धं॥५९॥

कश्मीरे म्भो वा॥८।२।६०॥

कश्मीरशब्दे संयुक्तस्य म्भो वा भवति॥ कम्भारा कम्हारा॥६०॥

न्मो मः॥८।२।६१॥

न्मस्य मो भवति। अधोलोपापवादः॥ जम्मो। वम्महो। मम्मणं॥६१॥

ग्मो वा॥८।२।६२॥

ग्मस्य मो वा भवति॥ युग्मम्। जुम्मं जुग्गं॥ तिग्मम्। तिम्मं तिग्गं॥६२॥

## ब्रह्मचर्य तूर्य-सौन्दर्य-शौण्डीर्ये र्यो रः ॥८।२।६३॥

एषु र्यस्य रो भवति । जापवादः ॥ वम्हचेरं । चौर्यसमत्वाद् वम्हचरिअं । तूरं । सुन्देरं । सोण्डीरं ॥६३॥

## धैर्ये वा ॥८।२।६४॥

धैर्ये र्यस्य रो वा भवति ॥ धीरं धिज्जं । सूरो सुज्जो इति तु सूरसूर्यप्रकृतिभेदात् ॥६४॥

## एतः पर्यन्ते ॥८।२।६५॥

पर्यन्ते एकारात्परस्य र्यस्य रो भवति ॥ पेरन्तो ॥ एत इति किम् ? पज्जन्तो ॥६५॥

## आश्चर्ये ॥८।२।६६॥

आश्चर्ये एतः परस्य र्यस्य रो भवति ॥ अच्छेरं ॥ एत इत्येव । अच्छरिअं ॥६६॥

## अतो रिआर-रिज्ज-रीअं ॥८।२।६७॥

आश्चर्ये अकारात्परस्य र्यस्य रिअ अर रिज्ज रीअ इत्येते आदेशा भवन्ति ॥ अच्छरिअं अच्छअरं अच्छरिज्ज अच्छरीअ॥ अत इति किम् ? अच्छेर ॥६७॥

## पर्यस्त-पर्याण-सौकुमार्ये ल्लः ॥८।२।६८॥

एषु र्यस्य ल्लो भवति ॥ पर्यस्तं पल्लट्टं पल्लत्थं । पल्लाण सोअमल्लं ॥ पल्लङ्को इति च पल्यङ्कशब्दस्य यलोपे द्वित्वे च ॥ पलिअङ्को इत्यपि चौर्यसमत्वात् ॥६८॥

## बृहस्पति-वनस्पत्योः सो वा ॥८।२।६९॥

अनयो. सयुक्तस्य सो वा भवति ॥ बहस्सई बहप्फई । भयस्सई भयप्फई । वणस्सई वणप्फई ॥६९॥

## वाष्पे हो ऽश्रुणि ॥८।२।७०॥

वाष्पशब्दे संयुक्तस्य हो भवति अश्रुण्यभिधेये ॥ वाहो नेत्रजलम् ॥ अश्रुणीति किम् ? बप्फो ऊष्मा ॥७०॥

## कार्षापणे ॥८।२।७१॥

कार्षापणे सयुक्तस्य हो भवति ॥ काहावणो ॥ कथं कहावणो । ह्रस्वः संयोगे [१.८४] इति पूर्वमेव ह्रस्वत्वे पश्चादादेशे । कर्षापणशब्दस्य वा भविष्यति ॥७१॥

## दुःख-दक्षिण-तीर्थे वा ॥८।२।७२॥

एषु सयुक्तस्य हो वा भवति ॥ दुहं दुक्खं । पर-दुक्खे दुक्खिआ विरला । दाहिणो दक्खिणो । तूहं तित्थं ॥७२॥

## कूष्माण्ड्यां ष्मो लस्तु ण्डो वा ॥८।२।७३॥

कूष्माण्ड्या ष्मा इत्येतस्य हो भवति ण्ड इत्यस्य तु वा लो भवति ॥ कोहली कोहण्डी ॥७३॥

## पक्ष्म-श्म-ष्म-स्म-ह्मां म्हः ॥८।२।७४॥

पक्ष्मशब्दसवन्धिनः सयुक्तस्य श्मष्मस्मह्मा च मकराक्रान्तो हकार आदेशो भवति ॥ पक्ष्मन् । पम्हाइं । पम्हल-लोअणा । श्म । कुश्मानः । कुम्हाणो । कश्मीराः । कम्हारा । ष्म । ग्रीष्मः । गिम्हो । ऊष्मा । उम्हा । स्म । अस्मादृशः । अम्हारिसो । विस्मयः । विम्हओ ॥ ह्म । ब्रह्मा वम्हा ॥ सुह्माः सुम्हा । वम्हणो वह्मचेरं ॥ क्वचित् म्भोपि दृश्यते । वम्भचेरं । सिम्भो । क्वचिन्न भवति । रश्मिः । रस्सी । स्मरः । सरो ॥७४॥

## सूक्ष्म-श्न-ष्ण-स्न-ह्न-ह्ण-क्ष्णां ण्हः ॥८।२।७५॥

सूक्ष्मशब्दसवन्धिनः सयुक्तस्य श्नष्णस्नह्नह्णक्ष्णां च णकाराक्रान्तो हकार आदेशो भवति ॥

सूक्ष्मं। सण्हं ॥ श्न। पण्हो। सिण्हो ॥ ष्ण। विण्हू। कण्हो। उण्हसं ॥ स्न। जोण्हा। ण्हाओ पण्हुओ ॥ ह्न। वण्ही। जण्हू ॥ ह्ण। पुव्वण्हो। अवरण्हो ॥ क्ष्ण। सण्हं। तिण्हं ॥ विप्रकर्षे तु कृष्णकृत्स्नशब्दयोः कसणो। कसिणो ॥७५॥

**ह्लो ल्हः ॥८।२।७६॥**

ह्लः स्थाने लकाराक्रान्तो हकारो भवति ॥ कल्हारं। पल्हाओ ॥७६॥

**क-ग-ट-ड-त-द-प-श-ष-स-ᳵक-ᳵपामूर्ध्वं लुक् ॥८।२।७७॥**

एषां सयुक्तवर्णसबन्धिनामूर्ध्वं स्थितानां लुग् भवति ॥ क। भुत्तं। सित्थं ॥ ग। दुद्धं। मुद्धं ॥ ट। षट्पदः। छप्पओ ॥ कट्फलम्। कप्फलं ॥ ड। खड्गः। खग्गो ॥ षड्ज। सज्जो ॥ त उप्पलं। उप्पाओ ॥ द। मद्गु। मग्गू। मोग्गरो ॥ प। सुत्तो। गुत्तो ॥ श। लण्ह। णिच्चलो। चुअइ ॥ ष। गोट्ठी। छट्ठो। निट्ठुरो ॥ स। खलिओ। नेहो ॥ ᳵक। दुᳵखम् ॥ दुक्खं ॥ ᳵप। अंतᳵपातः। अंतप्पाओ ॥७७॥

**अधो म-न-नाम् ॥८।२।७८॥**

मनया सयुक्तस्याधो वर्तमानानां लुग् भवति ॥ म। जुग्गं। रस्सी। सरो। सेरं ॥ न। नग्गो। लग्गो ॥ य। समा। कुड्ड। वाहो ॥७८॥

**सर्वत्र ल-व-रामवन्द्रे ॥८।२।७९॥**

वन्द्रशब्दादन्यत्र लवरां सर्वत्र सयुक्तस्योर्ध्वमधश्च स्थितानां लुग् भवति ॥ उर्ध्वं ॥ ल। उल्का। उक्का। वल्कलम्। वक्कल ॥ व। शब्दः। सद्दो ॥ अब्दः। अद्दो ॥ लुब्धक लोद्धओ ॥ र। अर्क। अक्को ॥ वर्गः। वग्गो ॥ अध.। श्लक्ष्णम्। सण्हं ॥ विक्लवः। विक्कवो ॥ पक्कम्। पक्कं पिक्कं ॥ ध्वस्तः। धत्थो ॥ चक्रम्। चक्कं। ग्रहः। गहो ॥ रात्रिः। रत्ती ॥ अत्र द्व इत्यादिसंयुक्तानामुभयप्राप्तौ यथादर्शनं लोपः ॥ क्वचिदूर्ध्वम्। उद्विग्नः। उव्विग्गो ॥ द्विगुणः। बि-उणो ॥ द्वितीयः। बीओ। कल्मषम्। कम्मसं ॥ सर्वम्। सव्वं ॥ शुल्बम्। सुव्वं ॥ क्वचित्त्वधः। काव्यम्। कव्वं ॥ कुल्या। कुल्ला ॥ माल्यम्। मल्लं। द्विपः दिओ ॥ द्विजातिः। दुआई ॥ क्वचित्पर्यायेण। द्वारम्। बार। दारं ॥ उद्विग्नः। उव्वग्गो। उव्विण्णो। अवन्द्र इति किम् ? वन्द्रं सस्कृतसमो ऽयं प्राकृतशब्दः। अत्रोत्तरेण विकल्पो ऽपि न भवति निषेधसामर्थ्यात् ॥७९॥

**द्रे रो न वा ॥८।२।८०॥**

द्रशब्दे रेफस्य वा लुग् भवति ॥ चन्दो चन्द्रो। रुद्दो रुद्रो। भद्दं भद्रं। समुद्दो समुद्रो। ह्रदशब्दस्य स्थितिपरिवृत्तौ द्रह इति रूपम्। तत्र द्रहो दहो। केचिद् रलोपं नेच्छन्ति। द्रहशब्दमपि कश्चित् सस्कृतः मन्यते ॥ वोद्रहादयस्तु तरुणपुरुषादिवाचका नित्यं रेफसयुक्ता देश्या एव। सिक्खन्तु वोद्रहीओ। वोद्रह-द्रहम्मि पडिआ ॥८०॥

**धात्र्याम् ॥८।२।८१॥**

धात्रीशब्दे रस्य लुग् वा भवति ॥ धत्ती। ह्रस्वात् प्रागेव रलोपे धाई। पक्षे। धारी ॥८१॥

**तीक्ष्णे णः ॥८।२।८२॥**

तीक्ष्णशब्दे णस्य लुग् वा भवति ॥ तिक्खं। तिण्हं ॥८२॥

**ज्ञो ञः ॥८।२।८३॥**

ज्ञ सवन्धिनो ञस्य लुग् वा भवति ॥ जाणं णाणं। सव्वज्जो सव्वण्णू। अप्पज्जो अप्पण्णू।

दइवज्जो दइवण्णू । इङ्गिअज्जो इङ्गिअण्णू । मणोज्जं । मणोण्णं, अहिज्जो अहिण्णू ।पज्जा पण्णा । अज्जा अाणा । सज्ञा सण्णा ॥ क्वचिन्न भवति । विण्णाणं ॥८३॥

### मध्याह्ने हः ॥८।२।८४॥

मध्याह्ने हस्य लुग् वा भवति ॥ मज्झन्नो मज्झण्हो ॥८४॥

### दशार्हे ॥८।२।८५॥

पृथग्योगाद्वेति निवृत्तम् । दशार्हे हस्य लुग् भवति ॥ दसारो ॥८५॥

### आदेः श्मश्रु-श्मशाने ॥८।२।८६॥

अनयोरादेर्लुग् भवति ॥ मासू मसू मस्सू । मसाणं । आर्षे श्मशानशब्दस्य सीआणं सुसाण-मित्यपि भवति ॥८६॥

### श्रो हरिश्चन्द्रे ॥८।२।८७॥

हरिश्चन्द्रशब्दे श्च इत्यस्य लुग् भवति ॥ हरिअन्दो ॥८७॥

### रात्रौ वा ॥८।२।८८॥

रात्रिशब्दे सयुक्तस्य लुग् वा भवति ॥ राई रत्ती ॥८८॥

### अनादौ शेषादेशयोर्द्वित्वम् ॥८।२।८९॥

पदस्यानादौ वर्तमानस्य शेषस्यादेशस्य च द्वित्वं भवति ॥ शेष । कप्पतरू । भुत्तं । दुद्धं । नग्गो । उक्का । अक्को । मुक्खो ॥ आदेश । डक्को । जक्खो । रग्गो । किच्ची । रुप्पी ॥ क्वचिन्न भवति । कसिणो । अनादाविति किम् ? खलिअं । थेरो । खम्भो । द्वयोस्तु द्वित्वमस्त्येवेति न भवति । विञ्चुओ । भिण्डिवालो ॥८९॥

### द्वितीय-तुर्ययोरुपरि पूर्वः ॥८।२।९०॥

द्वितीयतुर्ययोर्द्वित्वप्रसङ्गे उपरि पूर्वौ भवतः ॥ द्वितीयरयोपरि प्रथमश्चतुर्थरयोपरि तृतीय इत्यर्थः ॥ शेष । वक्खाणं । वग्घो । मुच्छा । निज्झरो । कट्ठं । तित्थं । निद्धणो । गुप्फं । निब्भरो ॥ आदेश । जक्खो ॥ घस्य नास्ति ॥ अच्छी । मज्झं । पट्ठी । वुड्ढो । हत्थो । आलिद्धो । पुप्फं । भिब्भलो ॥ तैलादौ [२.९८] द्वित्वे ओक्खलं ॥ सेवादौ [२ ९९] नक्खा । नहा ॥ समासे । कइ-द्धओ कइ-धओ ॥ द्वित्व इत्येव । खाओ ॥९०॥

### दीर्घे वा ॥८।२।९१॥

दीर्घशब्दे शेषस्य घस्य उपरि पूर्वो वा भवति ॥ दिग्घो दीहो ॥९१॥

### न दीर्घानुस्वारात् ॥८।२।९२॥

दीर्घानुस्वाराभ्यां लाक्षणिकाभ्यामलाक्षणिकाभ्यां च परयोः शेषादेशयोर्द्वित्वं न भवति ॥ छूढो । नीसासो । फासो ॥ अलाक्षणिक । पार्श्वम् । पास । शीर्षम् । सीस ॥ ईश्वरः । ईसरो ॥ द्वेष्यः । वेसो ॥ लास्यम् । लास ॥ आस्यम् । आस ॥ प्रेष्यः । पेसो ॥ अवमाल्यम् । ओमालं ॥ आज्ञा । आणा । आज्ञप्तिः । आणत्ती ॥ आज्ञपनं । आणवणं ॥ अनु-स्वारात् । त्र्यस्रम् । तंस ॥ अलाक्षणिक । सञ्झा । विञ्झो । कसालो ॥९२॥

### र-होः ॥८।२।९३॥

रेफहकारयोर्द्वित्वं न भवति ॥ रेफः शेषो नास्ति ॥ आदेश । सुन्देरं । बम्हचेर । पेरन्तं ॥ शेषस्य हस्य । विहलो ॥ आदेशस्य । कहा-वणो ॥९३॥

### धृष्टद्युम्ने णः ॥८।२।९४॥

धृष्टद्युम्नशब्दे आदेशस्य णस्य द्वित्वं न भवति ॥ धट्ठज्जुणो ॥९४॥

## कर्णिकारे वा ॥८।२।९५॥

कर्णिकारशब्दे शेषस्य णस्य द्वित्वं वा न भवति ॥ कणिआरो कण्णिआरो ॥९५॥

## दृप्ते ॥८।२।९६॥

दृप्तशब्दे शेषस्य द्वित्वं न भवति ॥ दरिअ-सीहेण ॥९६॥

## समासे वा ॥८।२।९७॥

शेषादेशयोः समासे द्वित्वं वा भवति ॥ नइ-ग्गामो नइ-गामो । कुसुमप्पयरो कुसुम-पयरो । देव-त्थुई देव-थुई । हर-क्खन्दा हर-खन्दा । आणाल-क्खम्भो आणाल-खम्भो ॥ बहुलाधिकारादशेषादेशयोरपि । स-प्पिवासो स-पिवासो । बद्ध-प्फलो बद्ध-फलो । मलय-सिहर-क्खण्डं मलय-सिहर-खण्डं । पम्मुक्कं पमुक्कं । अद्दंसणं अदंसणं । पडिक्कूलं पडिकूलं । तेल्लोकं । तेलोक्कं इत्यादि ॥९७॥

## तैलादौ ॥८।२।९८॥

तैलादिषु अनादौ यथादर्शनमन्त्यस्यानन्त्यस्य च व्यञ्जनस्य द्वित्वं भवति ॥ तेल्लं । मण्डुक्को । वेइल्ल । उज्जू । विड्डा । वहुत्तं ॥ अनत्यस्य । सोत्तं । पेम्मं । जुव्वणं ॥ आर्षे । पडिसोओ । विस्सोअसिआ ॥ तैल । मण्डूक । विचकिल । ऋजु । व्रीडा । प्रभूत । स्रोतस् । प्रेमन् । यौवन इत्यादि ॥९८॥

## सेवादौ वा ॥८।२।९९॥

सेवादिषु अनादौ यथादर्शनमन्त्यस्यानन्त्यस्य च द्वित्व वा भवति ॥ सेव्वा सेवा ॥ नेड्ड नीड । नक्खा नहा । निहित्तो निहिओ । वाहित्तो वाहिओ । माउक्कं माउअं । एक्को एओ । कोउहल्ल कोउहलं । वाउल्लो वाउलो । थुल्लो थोरो । हुत्तं हूअं । दइव्वं दइवं । तुण्हिक्को तुण्हिओ । मुक्को मूओ । खण्णू खाणू । थिण्णं थीणं ॥ अनन्त्यस्य । अम्हक्केरं अम्हकेरं । तं च्चेअ तं चेअ । सो च्चिअ सो चिअ ॥ सेवा । नीड । नख । निहित । व्याहृत । मृदुक । एक । कुतूहल । व्याकुल । स्थूल । हूत । दैव । तूष्णीक । मूक । स्थाणु । स्त्यान । अस्मदीय । चेअ । च्चिअ । इत्यादि ॥९९॥

## शार्ङ्गे ङात्पूर्वो ऽत् ॥८।२।१००॥

शार्ङ्गे ङात्पूर्वो ऽकारो भवति ॥ सारङ्गं ॥१००॥

## क्ष्मा-श्लाघा-रत्ने ऽन्त्यव्यञ्जनात् ॥८।२।१०१॥

एषु सयुक्तस्य यदन्त्यव्यञ्जनं तस्मात्पूर्वो ऽद् भवति ॥ छमा । सलाहा । रयणं ॥ आर्षे सूक्ष्मे ऽपि ॥ सुहमं ॥१०१॥

## स्नेहाग्न्योर्वा ॥८।२।१०२॥

अनयोः संयुक्तस्यान्त्यव्यञ्जनात्पूर्वोकारो वा भवति ॥ सणेहो नेहो । अगणी अग्गी ॥१०२॥

## प्लक्षे लात् ॥८।२।१०३॥

प्लक्षशब्दे सयुक्तस्यान्त्यव्यञ्जनाल्लात्पूर्वोद् भवति ॥ पलक्खो ॥१०३॥

## र्ह-श्री-ह्री-कृत्स्न-क्रिया-दिष्टयास्वित् ॥८।२।१०४॥

एषु सयुक्तस्यान्त्यव्यञ्जनात्पूर्व इकारो भवति ॥ र्ह । अरिहइ । अरिहा । गरिहा । बरिहो ॥ श्री । सिरी ॥ ह्री । हिरी ॥ ह्रीतः । हिरीओ ॥ अह्रीकः । अहिरीओ ॥ कृत्स्नः । कसिणो ॥ क्रिया । किरिआ ॥ आर्षे तु । हय नाणं किया-हीण ॥ दिष्टया । दिट्ठिआ ॥१०४॥

## र्श-र्ष-तप्त-वज्रे वा ॥८।२।१०५॥

र्शर्षयोस्तप्तवज्रयोश्च सयुक्तस्यान्त्यव्यञ्जनात्पूर्व इकारो वा भवति ॥ र्श । आयरिसो आयंसो । सुद-

रिसणो सुदंसणो । दरिसणं । दंसणं ॥ र्ष । वरिसं वासं । वरिसा वासा । वरिस-सयं वास-सयं ॥ व्यवस्थितविभाषया क्वचिन्नित्यम् । परामरिसो । हरिसो अमरिसो ॥ तप्त । तविओ तत्तो ॥ वज्र । वइरं वज्जं ॥१०५॥

## लात् ॥८।२।१०६॥

संयुक्तस्यान्त्यव्यञ्जनाल्लात्पूर्व इद् भवति ॥ किलिन्नं । किलिट्ठं । सिलिट्ठं । पिलुट्ठं । पिलोसो । सिलिम्हो । सिलेसो । सुक्किलं सुइलं । सिलोओ । किलेसो । अम्बिलं । गिलाइ । गिलाणं मिलाइ । मिलाइ । मिलाणं किलम्मइ । किलन्त ॥ क्वचिन्न भवति । कमो । पवो । विप्पवो । सुक्क-पक्खो ॥ उत्प्लावयति । उप्पावेइ ॥१०७॥

## स्याद्-भव्य-चैत्य-चौर्यसमेषु यात् ॥८।२।१०७॥

स्यादादिषु चौर्यशब्देन समेषु च संयुक्तस्य यात्पूर्व इद् भवति ॥ सिआ । सिआ-वाओ । भविओ । चेइअं ॥ चौर्यसम । चोरिअं । थेरिअं । भारिआ । गम्भीरिअं । गहीरिअं । आयरिओ । सुन्दरिअं । सोरिअं । वीरिअं । वरिअं । सूरिओ । धीरिअं । बम्हचरिअं ॥१०७॥

## स्वप्ने नात् ॥८।२।१०८॥

स्वप्नशब्दे नकारात्पूर्व इद् भवति ॥ सिविणो ॥१०८॥

## स्निग्धे वादितौ ॥८।२।१०९॥

स्निग्धे संयुक्तस्य नात्पूर्वौ अदितौ वा भवतः ॥ सणिद्धं सिणिद्धं । पक्षे निद्धं ॥१०९॥

## कृष्णे वर्णे वा ॥८।२।११०॥

कृष्णे वर्णवाचिनि संयुक्तस्यान्त्यव्यञ्जनात्पूर्वौ अदितौ वा भवतः ॥ कसणो कसिणो कण्हो ॥ वर्ण इति किम् ? विष्णौ कण्हो ॥११०॥

## उच्चार्हति ॥८।२।१११॥

अर्हत् शब्दे संयुक्तस्यान्त्यव्यञ्जनात्पूर्व उत् अदितौ च भवतः ॥ अरुहो अरहो अरिहो । अरुहन्तो अरहन्तो अरिहन्तो ॥१११॥

## पद्म-छद्म-मूर्ख-द्वारे वा ॥८।२।११२॥

एषु संयुक्तस्यान्त्यव्यञ्जनात्पूर्व उद् वा भवति । पउमं पोम्मं । छउम छम्मं । मुरुक्खो । मुक्खो । दुवारं । पक्षे । वारं । देरं । दारं ॥११२॥

## तन्वीतुल्येषु ॥८।२।११३॥

उकारान्ता ङीप्रत्ययान्तास्तन्वीतुल्याः । तेषु संयुक्तस्यान्त्यव्यञ्जनात्पूर्व उकारो भवति ॥ तणुवी । लहुवी । गरुवी । बहुवी । पुहुवी । मउवी । क्वचिदन्यत्रापि । स्रुघ्नम् । सुरुग्घ ॥ आर्षे । सूक्ष्मम् । सुहुमं ॥११३॥

## एकस्वरे श्वः-स्वे ॥८।२।११४॥

एकस्वरे पदे यौ श्वस् स्व इत्येतौ तयोरन्त्यव्यञ्जनात्पूर्व उद् भवति ॥ श्वः कृतम् । सुवे कयं ॥ स्वे जनाः ॥ सुवे जणा ॥ एकस्वर इति किम् ? स्व-जन । स-यणो ॥११४॥

## ज्यायामीत् ॥८।२।११५॥

ज्याशब्दे अन्त्यव्यञ्जनात्पूर्व ईद् भवति ॥ जीआ ॥११५॥

## करेणू-वाराणस्यो र-णोर्व्यत्ययः ॥८।२।११६॥

अनयो रेफणकारयोर्व्यत्ययः स्थितिपरिवृत्तिर्भवति ॥ कणेरू । वाणारसी ॥ स्त्रीलिङ्गनिर्देशात्पुंसि भवति । एसो करेणू ॥११६॥

## आलाने लनोः ॥८।२।११७॥

आलानशब्दे लनोर्व्यत्ययो भवति ॥ आणालो । आणाल-क्खम्भो ॥११७॥

### अचलपुरे च-लोः ॥८।२।११८॥

अचलपुरशब्दे चकारलकारयोर्व्यत्ययो भवति। अलचपुरं ॥११८॥

### महाराष्ट्रे ह-रोः ॥८।२।११९॥

महाराष्ट्रशब्दे हरोर्व्यत्ययो भवति॥ मरहट्ठं ॥११९॥

### ह्रदे ह-दोः ॥८।२।१२०॥

ह्रदशब्दे हकारदकारयोर्व्यत्ययो भवति॥ द्रहो॥ आर्षे। हरए महपुण्डरिए ॥१२०॥

### हरिताले र-लोर्न वा ॥८।२।१२१॥

हरितालशब्दे रकारलकारयोर्व्यत्ययो वा भवति॥ हलिआरो हरिआलो ॥१२१॥

### लघुके ल-होः ॥८।२।१२२॥

लघुकशब्दे घस्य हत्वे कृते लहोर्व्यत्ययो वा भवति॥ हलुअं। लहुअं॥ घस्य व्यत्यये कृते पदादित्वात् हो न प्राप्नोतीति हकरणम् ॥१२२॥

### ललाटे ल-डोः ॥८।२।१२३॥

ललाटशब्दे लकारडकारयोर्व्यत्ययो भवति वा॥ णडालं। णलाड। ललाटे च [१.२५७] इति आदेर्लस्य णविधानादिह द्वितीयो लः स्थानी ॥१२३॥

### ह्ये ह्योः ॥८।२।१२४॥

ह्यशब्दे हकारयकारयोर्व्यत्ययो वा भवति॥ गुह्यम्। गुय्हं गुज्झं॥ सह्यः। सय्हो सज्झो ॥१२४॥

### स्तोकस्य थोक्क-थोव-थेवाः ॥८।२।१२५॥

स्तोकशब्दस्य एते त्रय आदेशा भवन्ति वा॥ थोक्कं थोवं थेवं। पक्षे। थोअ ॥१२५॥

### दुहितृ-भगिन्योर्धूआ-वहिण्यौ ॥८।२।१२६॥

अनयोरेतावादेशौ वा भवतः॥ धूआ दुहिआ। वहिणी भइणी ॥१२६॥

### वृक्ष-क्षिप्तयो रुक्ख-छूढौ ॥८।२।१२७॥

वृक्षक्षिप्तयोर्यथासंख्यं रुक्ख छूढ इत्यादेशौ वा भवतः। रुक्खो वच्छो। छूढं खित्त। उच्छूढं। उक्खित्तं ॥१२७॥

### वनिताया विलया ॥८।२।१२८॥

वनिताशब्दस्य विलया इत्यादेशो वा भवति॥ विलया वणिआ॥ विलयेति संस्कृते ऽपीति केचित ॥१२८॥

### गौणस्येषत कूरः ॥८।२।१२९॥

ईषच्छब्दस्य गौणस्य कूर इत्यादेशो वा भवति॥ चिच व्व कूर-पिक्का। पक्षे। ईसि ॥१२९॥

### स्त्रिया इत्थी ॥८।२।१३०॥

स्त्रीशब्दस्य इत्थी इत्यादेशो वा भवति॥ इत्थी थी ॥१३०॥

### धृतेर्दिहिः ॥८।२।१३१॥

धृतिशब्दस्य दिहिरित्यादेशो वा भवति॥ दिही धिई ॥१३१॥

### मार्जारस्य मञ्जर-वञ्जरौ ॥८।२।१३२॥

मार्जारशब्दस्य मञ्जर वञ्जर इत्यादेशौ वा भवतः॥ मञ्जरो वञ्जरो। पक्षे। मज्जारो ॥१३२॥

### वैडूर्यस्य वेरुलिअं ॥८।२।१३३॥

वैडूर्यशब्दस्य वेरुलिअ इत्यादेशो वा भवति॥ वेरुलिअं। वेडुज्ज ॥१३३॥

### एण्हिं एत्ताहे इदानीमः ॥८।२।१३४॥

अस्य एतावादेशौ वा भवतः॥ एण्हि। एत्ताहे। इआणि ॥१३४॥

### पूर्वस्य पुरिमः ॥८।२।१३५॥

पूर्वस्य स्थाने पुरिम इत्यादेशो वा भवति॥ पुरिमं पुव्वं ॥१३५॥

**त्रस्तस्य हित्थ-तट्ठौ ॥८।२।१३६॥**

त्रस्तशब्दस्य हित्थ तट्ठ इत्यादेशौ वा भवतः ॥ हित्थं तट्ठं तत्थ ॥१३६॥

**बृहस्पतौ बहो भयः ॥८।२।१३७॥**

बृहस्पतिशब्दे बह इत्यस्यावयवस्य भय इत्यादेशो वा भवति ॥ भयस्सई भयप्फई भयप्पई ॥ पक्षे। बहस्सई । बहप्फई । बहप्पई ॥ वा बृहस्पतौ [१.१३८] इति इकारे उकारे च बिहस्सई । बिहप्फई । बिहप्पई । बुहस्सई । बुहप्फई । बुहप्पई ॥१३७॥

**मलिनोभय-शुक्ति-छुप्तारब्ध-पदातेर्मइलावह-सिप्पि-छिक्का-ढत्त-पाइक्कं ॥८।२।१३८॥**

मलिनादीनां यथासख्यं मइलादय आदेशा वा भवन्ति ॥ मलिन । मइलं मलिण ॥ उभय । अवह । उवहमित्यपि केचित् । अवहोआस । उभयबल ॥ आर्षे । उभयोकाल ॥ शुक्ति । सिप्पी सुत्ती ॥ छुप्त । छिक्को छुत्तो ॥ आरब्ध । आढत्तो आरद्धो ॥ पदाति । पाइक्को पयाई ॥१३८॥

**दंष्ट्राया दाढा ॥८।२।१३९॥**

पृथग्योगाद्वेति निवृत्तम् । दष्ट्राशब्दस्य दाढा इत्ययादेशो भवति ॥दाढा । अयं सस्कृते ऽपि ॥१३९॥

**बहिसो बाहिं-बाहिरौ ॥८।२।१४०॥**

बहिःशब्दस्य बाहि बाहिर इत्यादेशौ भवतः ॥ बाहिं बाहिरं ॥१४१॥

**अधसो हेट्ठं ॥८।२।१४१॥**

अधस्शब्दस्य हेट्ठ इत्ययमादेशो भवति ॥ हेट्ठं ॥१४१॥

**मातृ-पितुः स्वसुः सिआ-छौ ॥८।२।१४२॥**

मातृपितृभ्या परस्य स्वसृशब्दस्य सिआ छा इत्यादेशौ भवत ॥ माउसिआ । माउ-च्छा । पिउ-सिआ । पिउ-च्छा ॥१४२॥

**तिर्यचस्तिरिच्छिः ॥८।२।१४३॥**

तिर्यच्शब्दस्य तिरिच्छिरित्यादेशो भवति ॥ तिरिच्छि पेच्छइ ॥ आर्षे तिरिआ इत्यादेशो ऽपि । तिरिआ ॥१४३॥

**गृहस्य घरोऽपतौ ॥८।२।१४४॥**

गृहशब्दस्य घर इत्यादेशो भवति पतिशब्दश्चेत् परो न भवति ॥ घरो । घर-सामी । राय-हरं ॥ अपताविति किम् ? गह-वई ॥१४४॥

**शीलाद्यर्थस्येरः ॥८।२।१४५॥**

शीलधर्मसाध्वर्थे विहितस्य प्रत्ययस्य इर इत्यादेशो भवति ॥ हसनशील हसिरो । रोविरो । लज्जिरो । जम्पिरो । वेविरो । भमिरो । ऊससिरो ॥ केचित् तृन एव इरमाहुस्तेषां नमिरगमिरादयो न सिध्यन्ति । तृनो ऽत्र रादिना बाधित्वात् ॥१४५॥

**क्त्वस्तुमत्तूण-तुआणाः ॥८।२।१४६॥**

क्त्वाप्रत्ययस्य तुम् अत् तूण तुआण इत्येते आदेशा भवन्ति ॥ तुम् । दट्ठु । मोत्तुं ॥ अत् । भमिअ । रमिअ ॥ तूण । घेत्तूण । काऊण ॥ तुआण । भेत्तुआण । सोउआण ॥ वन्दित्तु इत्यनुस्वारलोपात् ॥ वन्दित्ता इति सिद्धसंस्कृतस्यैव वलोपेन ॥ कट्टु इति तु आर्षे ॥१४६॥

**इदमर्थस्य केरः ॥८।२।१४७॥**

इदमर्थस्य प्रत्ययस्य केर इत्यादेशो भवति ॥ युष्मदीयः । तुम्हकेरो ॥ अस्मदीयः । अम्हकेरो ॥ न च भवति । मईअ-पक्खे । पाणिणीआ ॥ १४७॥

**पर-राजभ्यां क्क-डिक्कौ च ॥८।२।१४८॥**

पर राजन् इत्येताभ्यां परस्येदमर्थस्य प्रत्ययस्य यथासख्य सयुक्तो क्को डित् इक्कश्चादेशौ भवत । चकारात्केरश्च ॥ परकीयम् । पारक्क । परक्क पार-केरं ॥ राइक्क । रायकेरं ॥१४८॥

## युष्मदस्मदोञ एच्चयः ॥८।२।१४९॥

आभ्या परस्येदमर्थस्याञ एच्चय इत्यादेशो भवति ॥ युष्माकमिदं यौष्माकम् ॥ तुम्हेच्चयं । एवम् अम्हेच्चयं ॥१४९॥

## वतेर्व्वः ॥८।२॥१५०॥

वतेः प्रत्ययस्य द्विरुक्तो वो भवति ॥ महुरव्व पाडलिउत्ते पासाया ॥१५०॥

## सर्वाङ्गादीनस्येकः ॥८।२।१५१॥

सर्वाङ्गात् सर्वादेः पथ्यङ्ग [हे. ७. १] इत्यादिना विहितस्येनस्य स्थाने इक इत्यादेशो भवति ॥ सर्वाङ्गीणः । सव्वङ्गिओ ॥१५१॥

## पथो णस्येकट् ॥८।२।१५२॥

नित्यं णः पन्थश्च (हे० ६. ४) इति यः पथो णो विहितस्तस्य इकट् भवति ॥ पान्थः । पहिओ ॥१५२॥

## ईयस्यात्मनो णयः ॥८।२।१५३॥

आत्मनः परस्य ईयस्य णय इत्यादेशो भवति ॥ आत्मीयम् । अप्पणयं ॥ १५३॥

## त्वस्य डिमा-त्तणौ वा ॥८।२।१५४॥

त्वप्रत्ययस्य डिमा त्तण इत्यादेशौ वा भवतः ॥ पीणिमा । पुप्फिमा । पीणत्तणं । पुप्फत्तणं । पक्षे । पीणत्तं । पुप्फत्तं ॥ इम्नः पृथ्वादिषु नियतत्वात् तदन्यप्रत्ययान्तेषु अस्य विधिः ॥ पीनता इत्यस्य प्राकृते पीणया इति भवति । पीणदा इति तु भाषान्तरे । तेनेह तलो दा न क्रियते ॥ १५४॥

## अनङ्कोठात्तैलस्य डेल्लः ।८।२।१५५॥

अङ्कोठवर्जिताच्छब्दात्परस्य तैलप्रत्ययस्य डेल्ल इत्यादेशो भवति ॥ सुरहि-जलेण कडुएल्लं ॥ अनङ्कोठादिति किम् ? अङ्कोल्लतेल्लं ॥ १५५॥

## यत्तदेतदोतोरित्तिअ एतल्लुक् च ॥८।२।१५६॥

एभ्य. परस्य डावादेरतोः परिमाणार्थस्य इत्तिअ इत्यादेशो भवति एतदो लुक् च ॥ यावत् । जित्तिअं ॥ तावत् । तित्तिअं ॥ एतावत् । इत्तिअं ॥ १५६॥

## इदंकिमश्च डेत्तिअ-डेत्तिल-डेद्दहाः॥८।२।१५७॥

इदंकिम्भ्यां यत्तदेतद्भ्यश्च परस्यातोर्डावतोर्वा डित एत्तिअ एत्तिल एद्दह इत्यादेशा भवन्ति एतल्लुक् च ॥ इयत् । एत्तिअं । एत्तिलं । एद्दहं ॥ कियत् । केत्तिअं । केत्तिलं । केद्दहं ॥ यावत् । जेत्तिअं । जेत्तिल । जेद्दहं ॥ तावत् । तेत्तिअं । तेत्तिलं । तेद्दहं ॥ एतावत् । एत्तिअं । एत्तिलं एद्दहं ॥१५७॥

## कृत्वसो हुत्तं ॥८।२।१५८॥

वारे कृत्वस् [हे० ७.२] इति यः कृत्वस् विहितस्तस्य हुत्तमित्यादेशो भवति ॥ सयहुत्तं । सहस्सहुत्तं ॥ कथं प्रियाभिमुखं पियहुत्तं । अभिमुखार्थेन हुत्तशब्देन भविष्यति ॥१५८॥

## आल्विल्लोल्लाल-वन्त-मन्तेत्तेर-मणा मतोः ॥८।२।१५९॥

आलु इत्यादयो नव आदेशा मतोः स्थाने यथाप्रयोगं भवन्ति ॥ आलु । नेहालू । दयालू । ईसालू । लज्जालुआ ॥ इल्ल । सोहिल्लो । छाइल्लो । जामइल्लो ॥ उल्ल । विआरुल्लो । मसुल्लो । दप्पुल्लो ॥ आल । सद्दालो । जडालो । फडालो । रसालो । जोण्हालो ॥ वन्त ॥ धणवन्तो । भत्तिवन्तो ॥ मन्त । हणुमन्तो । सिरिमन्तो । पुण्णमन्तो ॥ इत्त । कव्वइत्तो । माणइत्तो ॥ इर ॥ गव्विरो । रेहिरो । मण । धणमणो ॥ केचिन्मादेशमपीच्छन्ति । हणुमा ॥ मतोरिति किम् ? धणी । अत्थिओ ॥१५९॥

**त्तो दो तसो वा ॥८।२।१६०॥**

तसः प्रत्ययस्य स्थाने त्तो दो इत्यादेशौ वा भवतः ॥ सव्वत्तो सव्वदो । एकत्तो एकदो । अन्नत्तो अन्नदो । कत्तो कदो । जत्तो जदो । तत्तो तदो । इत्तो इदो । पक्षे । सव्वओ । इत्यादि ॥१६०॥

**त्रपो हि-ह-त्थाः ॥८।२।१६१॥**

त्रप्प्रत्ययस्य एते भवन्ति ॥ यत्र । जहि । जह । जत्थ ॥ तत्र । तहि । तह । तत्थ ॥ कुत्र । कहि । कह । कत्थ ॥ अन्यत्र । अन्नहि । अन्नह । अन्नत्थ ॥१६१॥

**वैकाद्दः सि सिअं इआ ॥८।२।१६२॥**

एकशब्दात्परस्य दाप्रत्ययस्य सि सिअं इआ इत्यादेशा वा भवन्ति ॥ एकदा । एक्कसि । एक्कसिअं । एक्कइआ । पक्षे । एगया ॥१६२॥

**डिल्ल-डुल्लौ भवे ॥८।२।१६३॥**

भवे ऽ र्थे नाम्नः परौ इल्ल उल्ल इत्येतौ डितौ प्रत्ययौ भवतः ॥ गामिल्लिआ । पुरिल्ल । हेट्ठिल्लं । उवरिल्लं । अप्पुल्लं ॥ आल्वालावपीच्छन्त्यन्ये ॥१६३॥

**स्वार्थे कश्च वा ॥८।२।१६४॥**

स्वार्थे कश्चकारादिल्लोल्लौ डितौ प्रत्ययौ वा भवतः ॥ क । कुङ्कुमपिञ्जरयं । चन्दओ । गयणयम्मि । धरणीहर-पक्खुब्भन्तयं । दुहिअए राम-हिअयए । इहयं । आलेट्ठुअं । आश्लेष्टुमित्यर्थः द्विरपि भवति । बहुअयं ॥ ककारोच्चारण पैशाचिकभाषार्थम् । यथा । वतनके वतनकं समप्पेत्तून ॥ इल्ल । निज्जिआसोअ-पल्लविल्लेण । पुरिल्लो । पुरा पुरो वा ॥ उल्ल । मह पिउल्लओ । मुहुल्लं । हत्थुल्ला । पक्षे । चन्दो । गयण । इह । आलेट्ठुं । बहु । बहुअं । मुहं । हत्था ॥ कुत्सादिविशिष्टे तु संस्कृतवदेव कप् सिद्ध. ॥ यावादिलक्षणः कः प्रतिनियतविषय एवेति वचनम् ।१६४॥

**ल्लो नवैकाद्वा ॥८।२।१६५॥**

आभ्यां स्वार्थे सयुक्तो लो वा भवति ॥ नवल्लो । एकल्लो ॥ सेवादित्वात् कस्य द्वित्वे एक्कल्लो । पक्षे । नवो । एक्को । एओ ॥१६५॥

**उपरेः संव्याने ॥८।२।१६६॥**

संव्याने ऽ र्थे वर्तमानादुपरिशब्दात् स्वार्थे ल्लो भवति ॥ अवरिल्लो ॥ सव्यान इति किम् ? अवरि ॥१६६॥

**भ्रुवो मया डमया ॥८।२।१६७॥**

भ्रूशब्दात्स्वार्थे मया डमया इत्येतौ प्रत्ययौ भवतः ॥ भुमया । भमया ॥१६७॥

**शनैसो डिअम् ॥८।२।१६८॥**

शनैस्शब्दात्स्वार्थे डिअम् भवति ॥ सणिअमवगूढो ॥१६८॥

**मनाको न वा डयं च ॥८।२।१६९॥**

मनाक्शब्दात्स्वार्थे डयम् डिअम् च प्रत्ययो वा भवति ॥ मणयं । मणियं । पक्षे । मणा ॥१६९॥

**मिश्राड्डालिअः ॥८।२।१७०॥**

मिश्रशब्दात्स्वार्थे डालिअः प्रत्ययो वा भवति॥ मीसालिअं । पक्षे । मीसं ॥१७०॥

**रो दीर्घात् ॥८।२।१७१॥**

दीर्घशब्दात्परः स्वार्थे रो वा भवति ॥ दीहरं । दीह ॥१७१॥

**त्वादेः सः ॥८।२।१७२॥**

भावे त्व तल् [हे० ७. १] इत्यादिना विहितात्त्वादेः परः स्वार्थे स एव त्वादिर्वा भवति ॥ मृदुकत्वेन । मउअत्तयाइ ॥ आतिशायिकात्त्वातिशा-

यिकः संस्कृतवदेव सिद्ध । जिट्ठयरो । कणिट्ठयरो ॥१७२॥

**विद्युत्पत्र-पीतान्धाल्लः ॥८।२।१७३॥**

एभ्य. स्वार्थे लो वा भवति । विज्जुला । पत्तल । पीवल । पीअलं । अन्धलो । पक्षे । विज्जू । पत्तं । पीअं । अन्धो ॥ कथं जमलं । यमलमिति संस्कृतशब्दाद् भविष्यति ॥१७३॥

**गोणादयः ॥८।२।१७४॥**

गोणादयः शब्दा अनुक्तप्रकृतिप्रत्ययलोपागमवर्णविकारा बहुलं निपात्यन्ते ॥ गौः । गोणो । गावी ॥ गाव' । गांवीओ ॥ बलीवर्द' । बइल्लो ॥ आपः । आऊ ॥ पञ्चपञ्चाशत् । पञ्चावण्णा । पणपन्ना ॥ त्रिपञ्चाशत् । तेवण्णा । त्रिचत्वारिंशत् । तेआलीसा ॥ व्युत्सर्ग' । विउसग्गो ॥ व्युत्सर्जनम् । वोसिरणं ॥ बहिर्मैथुनं वा । बहिद्धा ॥ कार्यम् । णामुक्कसिअं ॥ क्वचित् । कत्थइ ॥ उद्वहति । मुव्वहइ ॥ अपस्मारः । वम्हलो ॥ उत्पलम् । कन्दुट्टं ॥ धिक्धिक् । छिछि । द्धिद्धि ॥ धिगस्तु । धिरत्थु ॥ ॥ प्रतिस्पर्धा । पडिसिद्धी । पाडिसिद्धी ॥ स्थासकः । चच्चिक्कं ॥ निलयः । निहेलणं ॥ मघवान् । मघोणो ॥ साक्षी । सक्खिणो ॥ जन्म । जम्मणं ॥ महान् । महन्तो ॥ भवान् । भवन्तो ॥ आशीः । आसीसा ॥ क्वचित् । हस्य ड्डभौ ॥ बृहत्तरम् । वड्डयरं ॥ हिमोरः । भिमोरो ॥ ल्लस्य ड्ड । क्षुल्लकः । खुड्डओ ॥ घोषणामग्रेतनो गायन. । घायणो ॥ वड । वढो ॥ ककुदम् । ककुध ॥ अकाण्डम् । अत्थक्कं ॥ लज्जावती । लज्जालुइणी ॥ कुतूहलम् । कुड्डं ॥ चूत' । मायन्दो । माकन्दशब्द' सस्कृतेपीत्यन्ये ॥ विष्णु' । भट्टिओ ॥ श्मशानम् । करसी ॥ असुराः । अगया ॥ खेलम् । खेड्डं ॥ पौष्पं रजः । तिङ्गिच्छि । दिनम् । अल्लं ॥ समर्थः । पक्कलो ॥ पण्डकः । णेलच्छो ॥ कर्पासः । पलही ॥ बली । उज्जलो ॥ ताम्बूलम् । झसुरं ॥ पुंश्चली । छिछई ॥ शाखा । साहुली इत्यादि ॥ वाधिकारात्पक्षे यथादर्शनं गउओ इत्याद्यपि भवति ॥ गोलागोआवरी इति तु गोलागोदावरीभ्यां सिद्धम् ॥ भाषाशब्दाश्च । आहित्थ । लल्लक्क । विड्डिर । पच्चड्डिअ । उप्पेहड । मडप्फर । पडिच्छिर । अट्टमट्ट । विहडप्फड । उज्जल्ल । हल्लप्फल इत्यादयो महाराष्ट्रविदर्भादिदेशप्रसिद्धा लोकतोऽवगन्तव्याः ॥ क्रियाशब्दाश्च । अवयासइ । फुम्फुल्लइ । उप्फालेइ । इत्यादयः । अतएव च कृष्ट-घृष्ट वाक्य-विद्वस्-वाचस्पति—विष्टरश्रवस—प्रचेतस्-प्रोक्तप्रोतादीनां क्विबादिप्रत्ययान्ताना च अग्निचित्सोमसुत्सुग्लसुम्लेत्यादीनां पूर्वै' कविभिरप्रयुक्तानां प्रतीतिवैषम्यपर' प्रयोगो न कर्तव्यः शब्दान्तरैरेव तु तदर्थोऽभिधेयः । यथा कृष्टः कुशलः । वाचस्पतिर्गुरुः । विष्टरश्रवा हरिरित्यादि ॥ घृष्टशब्दस्य तु सोपसर्गस्य प्रयोग इष्यत एव । मन्दर-यड-परिघट्टं । तद्दिअस-निहट्ठाणङ्ग इत्यादि ॥ आर्षे तु यथादर्शनं सर्वमविरुद्धम् । यथा । घट्ठा । मट्ठा । विउसा । सुअ-लक्खणाणुसारेण । वक्कन्तरेसु अ पुणो इत्यादि ॥१७४॥

**अव्ययम् ॥८।२।१७५॥**

अधिकारो ऽ यम् । इत' पर ये वक्ष्यन्ते आपादसमाप्तेस्ते ऽ व्ययसज्ञा ज्ञातव्या' ॥१७५॥

**तं वाक्योपन्यासे ॥८।२।१७६॥**

तमिति वाक्योपन्यासे प्रयोक्तव्यम् ॥ त

तिअस-वन्दि-मोक्खं ॥१७६॥

**आम अभ्युपगमे ॥८।२।१७७॥**

आमेत्यभ्युपगमे प्रयोक्तव्यम् ॥ आम बहला वणोली ॥१७७॥

**णवि वैपरीत्ये ॥८।२।१७८॥**

णवीति वैपरीत्ये प्रयोक्तव्यम् ॥ णवि हा वणे ॥१७८॥

**पुणरुत्तं कृतकरणे ॥८।२।१७९॥**

पुणरुत्तमिति कृतकरणे प्रयोक्तव्यम् ॥

अइ सुप्पइ पसुलि ॥ णीसहेहि अङ्गेहि पुणरुत्तं ॥१७९॥

**हन्दि विपाद-विकल्प-पश्चात्ताप-निश्चय सत्ये ॥८।२।१८०॥**

हन्दि इति विषादादिषु प्रयोक्तव्यम् ॥

हन्दि चलणे णओ सो, ण माणिओ हन्दि हुज्ज एत्ताहे।
हन्दि न होही भणिरी, सा सिज्जइ हन्दि तुह कज्जे॥

हन्दि । सत्यमित्यर्थः ॥१८०॥

**हन्द च गृहाणार्थे ।८।२।१८१॥**

हन्द हन्दि च गृहाणार्थे प्रयोक्तव्यम् ॥ हन्द पलोएसु इमं । हन्दि । गृहाणेत्यर्थः ॥१८१॥

**मिव पिव विव व्व व विअ इवार्थे वा ।८।२।१८२॥**

एते इवार्थे अव्ययसञ्ज्ञकाः प्राकृते वा प्रयुज्यन्ते ॥ कुमुअं मिव । चन्दण पिव । हंसो विव । साअरो व्व खीरोओ । सेसस्स व निम्मोओ । कमल विअ । पक्षे । नीलुप्पल-माला इव ॥ १८२॥

**जेण तेण लक्षणे ॥८।२।१८३॥**

जेण तेण इत्येतौ लक्षणे प्रयोक्तव्यं ॥ भमर-रुअं जेण कमल-वणं । भमर-रुअं तेण कमल-वण ॥१८३॥

**णइ चेअ चिअ च्च अवधारणे ।८।१।१८४॥**

एते ऽवधारणे प्रयोक्तव्याः ॥ गईए णइ । ज चेअ मउलणं लोअणाणं । अणुबद्धं तं चिअ कामिणीणं ॥ सेवादित्वाद् द्वित्वमपि । ते च्चिअ धन्ना । ते च्चेअ सुपुरिसा ॥ च्च । स च्च य रूवेण । स च्च सीलेण ॥ १८४॥

**वले निर्धारण-निश्चययोः ॥८।२।१८५॥**

वले इति निर्धारणे निश्चये च प्रयोक्तव्यम् ॥ निर्धारणे । वले पुरिसो धणंजओ खत्तिआणं ॥ निश्चये । वले सीहो । सिह एवायम् ॥१८५॥

**किरेर हिर किलार्थे वा ॥८।२॥१८६॥**

किर इर हिर इत्येते किलार्थे वा प्रयोक्तव्याः ॥ कल्लं किर खरहिअओ । तस्स इर । पिअ-वयंसो हिर ॥ एवं किल तेण सिविणए भणिआ ॥१८६॥

**णवर केवले ॥८।२।१८७॥**

केवलार्थे णवर इति प्रयोक्तव्यम् ॥ णवर पिआइं चिअ णिव्वडन्ति ॥१८७॥

**आनन्तर्ये णवरि ॥८।२।१८८॥**

आनन्तर्ये णवरीति प्रयोक्तव्यम् ॥ णवरि अ से रहु-वइणा ॥ केचित्तु केवलानन्तर्यार्थयोर्णवरणवरि इत्ये-कमेव सूत्रं कुर्वते तन्मते उभावप्युभयार्थौ ॥१८८॥

**अलाहि निवारणे ॥८।२।१८९॥**

अलाहीति निवारणे प्रयोक्तव्यम् ॥ अलाहि कि वाइएण लेहेण ॥१८९॥

**अण णाइं नञर्थे ॥८।२।१९०॥**

अण णाइ इत्येतौ नञो ऽर्थे प्रयोक्तव्यौ ॥ अणचिन्तिअममुणन्ती । णाइं करेमि रोस ॥१९०॥

**माइं मार्थे ॥८।२।१९१॥**

माइं इति मार्थे प्रयोक्तव्यम् ॥ माइ काहीअ रोस । मा कार्षीद् रोषम् ॥१९१॥

**हद्धी निर्वेदे॥८।२।१९२॥**

हद्धी इत्यव्ययमत एव निर्देशात् हाधिक्शब्दादेशो

वा निर्वेदे प्रयोक्तव्यम् ॥ हद्धी-हद्धी । हा धाह धाह ॥१९२॥

**वेव्वे भय-वारण-विषादे ॥८।२।१९३॥**

भयवारणविषादेषु वेव्वे इति प्रयोक्तव्यम् ॥
वेव्वेत्ति भये वेव्वेत्ति वारणे जूरणे अ वेव्वेत्ति ।
उल्लाविरीइ वि तुहं, वेव्वेत्ति मयच्छि किं णेअं ॥
कि उल्लावेन्तीए उअ जूरन्तीएँ कि तु भीआए ।
उव्वाडिरीएँ वेव्वेत्ति तीएँ भणिअं न विम्हरिमो ॥१९३॥

**वेव्व च आमन्त्रणे ॥८।२।१९४॥**

वेव्व वेव्वे च आमन्त्रणे प्रयोक्तव्ये ॥ वेव्वे गोले । वेव्वे मुरन्दले बहसि पाणिअं ॥१९४॥

**मामि हला हले सख्या वा ॥८।२।१९५॥**

एते सख्या आमन्त्रणे वा प्रयोक्तव्याः ॥ मामि सरिसक्खराण वि ॥ पणवह माणस्स हला । हले हयासस्स । पक्षे । सहि एरिसि च्चिअ गई ॥१९५॥

**दे संमुखीकरणे च ॥८।२।१९६॥**

समुखीकरणे सख्या आमन्त्रणे च दे इति प्रयोक्तव्यम् ॥ दे पसिअ ताव सुन्दरि ॥ दे आ पसिअ निअत्तसु ॥१९६॥

**हुं दान पृच्छा निवारणे ॥८।२।१९७॥**

हुं इति दानादिषु प्रयुज्यते ॥ दाने । हुं गेण्ह अप्पणो च्चिअ ॥ पृच्छायाम् । हुं साहसु सब्भावं ॥ निवारणे । हुं निल्लज्ज समोसर ॥१९७॥

**हु खु निश्चय–वितर्क–संभावन विस्मये ॥८।२।१९८।**

हु खु इत्येतौ निश्चयादिषु प्रयोक्तव्यौ ॥ निश्चये । तंपि हु अछिन्निसरी । तं खु सिरीए रहस्स ॥ वितर्कः ऊहः संशयो वा । ऊहे । न हु णवरं संगहिआ । एअं खु हसइ ॥ संशये । जलहरो खु धूमवडलो खु ॥ संभावने । तरीउं ण हु णवर इमं । एअं खु हसइ ॥ विस्मये । को खु एसो सहस्स सिरो । बहुलाधिकारादनुस्वारात्परो हुर्न प्रयोक्तव्यः ॥१९८॥

**ऊ गर्हाक्षेप–विस्मय सूचने ॥८।२।१९९॥**

ऊ इति गर्हादिषु प्रयोक्तव्यम् ॥ गर्हा । ऊ णिल्लज ॥ प्रक्रान्तस्य वाक्यस्य विपर्यासाशङ्काया विनिवर्तनलक्षण आक्षेपः ॥ ऊ किं मए भणिअं ॥ विस्मये । ऊ कह मुणिआ अहयं ॥ सूचने । ऊ केण न विण्णायं ॥१९९॥

**थू कुत्सायाम् ॥८।२।२००॥**

थू इति कुत्सायां प्रयोक्तव्यम् ॥ थू निल्लज्जो लोओ ॥२००॥

**रे अरे संभाषण-रतिकलहे ॥८।२।२०१॥**

अनयोरर्थयोर्यथासङ्ख्यमेतौ प्रयोक्तव्यौ ॥ रे संभाषणे । रे हिअय मडह-सरिआ ॥ अरे रतिकलहे । अरे मए समं मा करेसु उवहासं ॥२०१॥

**हरे क्षेपे च ।८।२।२०२॥**

क्षेपे संभाषणरतिकलहयोश्च हरे इति प्रयोक्तव्यम् ॥ क्षेपे । हरे णिल्लज्ज ॥ संभाषणे । हरे पुरिसा ॥ रतिकलहे । हरे बहु-वल्लह ॥२०२॥

**ओ सूचना–पश्चात्तापे ॥८।२।२०३॥**

ओ इति सूचनापश्चात्तापयो प्रयोक्तव्यम् ॥ सूचनायाम् । ओ अविणय-तत्तिल्ले ॥ पश्चात्तापे । ओ न मए छाय इत्तिआए ॥ विकल्पे तु उतादेशेनैवौकारेण सिद्धम् ॥ ओ विरएमि नहयले ॥२०३॥

**अव्वो सूचना दुःख–संभाषणापराध–विस्मयानन्दादर–भय–खेद–विषाद–पश्चात्तापे ॥८।२।२०४॥**

अव्वो इति सूचनादिषु प्रयोक्तव्यम् ॥ सूचना-

याम् । अव्वो दुक्करयारय ॥ दुःखे । अव्वो दलन्ति हिययं ॥ सभाषणे । अव्वो किमिणं किमिणं ॥ अपराधविस्मययोः ।

अव्वो हरन्ति हिअयं, तहवि न वेसा हवन्ति जुवईण ।
अव्वो किं पि रहस्सं, मुणन्ति धुत्ता जणब्भहिआ ॥१॥

आनन्दादरभयेषु ।

अव्वो सुपहायमिणं, अव्वो अज्जम्ह सप्फलं जीअं ।
अव्वो अइअम्मि तुमे, नवरं जइ सा न जूरिहिइ ॥२॥

खेदे । अव्वो न जामि छेत्तं ॥

विषादे ।

अव्वो नासेन्ति दिहिं, पुलयं वड्ढेन्ति देन्ति रणरणयं ।
एण्हि तस्सेअ गुणा, ते च्चिअ अव्वो कह णु एअं ॥

पश्चात्तापे ।

अव्वो तह तेण कया, अहयं जह कस्स साहेमि ॥२०४॥

**अइ संभावने ॥८।२।२०५॥**

सभावने अइ इति प्रयोक्तव्यम् ॥ अइ दिअर किं न पेच्छसि ॥२०५॥

**वणे निश्चय-विकल्पानुकम्प्ये च ॥८।२।२०६॥**

वणे इति निश्चयादौ संभावने च प्रयोक्तव्यम् ॥ वणे देमि । निश्चयं ददामि ॥ विकल्पे । होई वणे न होइ । भवति वा न भवति ॥ अनुकम्प्ये । दासो वणे न मुच्चइ । दासोऽनुकम्प्यो न त्यज्यते ॥ सभावने । नत्थि वणे जं न देइ विहि-परिणामो । सभाव्यते एतदित्यर्थः ॥२०६॥

**मणे विमर्शे ॥८।२।२०७॥**

मणे इति विमर्शे प्रयोक्तव्यम् ॥ मणे सूरो । किं स्वित्सूर्यः ॥ अन्ये मन्ये इत्यर्थमपीच्छन्ति ॥२०७॥

**अम्मो आश्चर्ये ॥८।२।२०८॥**

अम्मो इत्याश्चर्ये प्रयोक्तव्यम् ॥ अम्मो कह पारिज्जइ ॥२०८॥

**स्वयमोर्थे अप्पणो न वा ॥८।२।२०९॥**

स्वयमित्यस्यार्थे अप्पणो वा प्रयोक्तव्यम् ॥ विसयं विसअन्ति अप्पणो कमल-सरा । पक्षे । सयं चेअ मुणसि करणिज्जं ॥२०९॥

**प्रत्येकमः पाडिक्कं पाडिएक्कं ॥८।२।२१०॥**

प्रत्येकमित्यस्यार्थे पाडिक्क इति च प्रयोक्तव्यं । पाडिक्कं पाडिएक्कं । पक्षे । पत्तेअं ॥२१०॥

**उअ पश्य ॥८।२।२११॥**

उअ इति पश्येत्यस्यार्थे प्रयोक्तव्यं वा ॥

उअ निच्चल--निप्फंदा, भिसिणी--पत्तंमि रेहइ बलाआ ।
निम्मल--मरगय--भायण--परिट्ठिआ सङ्ख--सुत्ति व्व ॥

पक्षे पुलआदयः ॥२११॥

**इहरा इतरथा ॥८।२।२१२॥**

इहरा इति इतरथार्थे प्रयोक्तव्य वा ॥ इहरा नीसामन्नेहि । पक्षे । इअरहा ॥ २१२ ॥

**एक्कसरिअं झगिति संप्रति ॥८।२।२१३॥**

एक्कसरिअं झगित्यर्थे संप्रत्यर्थे च प्रयोक्तव्यम् ॥ एक्कसरिअं । झगिति सांप्रतं वा ॥२१३॥

**मोरउल्ला मुधा ॥८।२।२१४॥**

मोरउल्ला इति मुधार्थे प्रयोक्तव्यम् ॥ मोरउल्ला । मुधेत्यर्थः ॥२१४॥

**दराधाल्पे ॥८।२।२१५॥**

दर इत्यव्ययमर्धार्थे ईषदर्थे च प्रयोक्तव्यम् ॥ दर-विअसिअं । अर्धेनेषद्वा विकसितमित्यर्थः ॥२१५॥

**किणो प्रश्ने ॥८।२।२१६॥**

किणो इति प्रश्ने प्रयोक्तव्यम् ॥ किणो धुवसि ॥२१६॥

**इ-जे-राः पादपूरणे ॥८।२।२१७॥**

इ जे र इत्येते पादपूरणे प्रयोक्तव्याः ॥ न उणा इ अच्छीइ । अणुकूलं वोत्तुं जे । गेण्हइ र कलम-

गोवी ॥ अहो । हंहो । हेहो । हा । नाम । अहह । हीसि । अपि अहाह । अरिरिहो इत्यादयस्तु संस्कृतसमत्वेन सिद्धाः ॥२१७॥

**प्यादयः ॥८।२।२१८॥**

प्यादयो नियतार्थवृत्तयः प्राकृते प्रयोक्तव्या. ॥ पि वि अप्यर्थे ॥२१८॥

**इत्याचार्यश्रीहेमचन्द्रसूरिविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनवृत्तौ अष्टमस्याध्यायस्य द्वितीयः पादः ॥**

द्विषत्पुरक्षोदविनोदहेतो-र्भवादवामस्य भवद्भुजस्य । अयं विशेषो भुवनैकवीर ? परं न यत्काममपाकरोति ॥१॥

॥अर्हं॥

**वीप्स्यात्स्यादेर्वीप्स्ये स्वरे मो वा ॥८।३।१॥**

वीप्सार्थात्पदात्परस्य स्यादेः स्थाने स्वरादौ वीप्सार्थे पदे परे मो वा भवति । एकैकम् । एक्कमेक्कं । एक्कमेक्केण । अङ्गे अङ्गे । अङ्गमङ्गम्मि । पक्षे । एक्केक्कमित्यादि ॥१॥

**अतः सेर्डोः ॥८।३।२॥**

अकारान्तान्नाम्नः परस्य स्यादेः सेः स्थाने डो भवति ॥ वच्छो ॥२॥

**वैतत्तदः ॥८।३।३॥**

एतत्तदोकारात्परस्य स्यादेः सेर्डो वा भवति ॥ एसो एस । सो णरो । स णरो ॥३॥

**जस्-शसोर्लुक् ॥८।३।४॥**

अकारान्तान्नाम्नः परयोः स्यादिसवन्धिनोर्जस्-शसोर्लुग् भवति ॥ वच्छा एए । वच्छे पेच्छ ॥४॥

**अमोस्य ८।३।५।**

अतः परस्यामोकारस्य लुग् भवति ॥ वच्छं पेच्छ ॥५॥

**टा-आमोर्णः ॥८।३।६॥**

अतः परस्य टा इत्येतस्य षष्ठीबहुवचनस्य च आमो णो भवति ॥ वच्छेण । वच्छाण ॥६॥

**भिसो हि हिँ हिं ॥८।३।७॥**

अतः परस्य भिसः स्थाने केवलः सानुनासिकः सानुस्वारश्च हिर्भवति ॥ वच्छेहि । वच्छेहिँ । वच्छेहिं कया छाही ॥७॥

**ङसेस् त्तो-दो-दु-हि-हिन्तो-लुकः ॥८।३।८॥**

अतः परस्य ङसेः त्तो दो दु हि हिन्तो लुक् इत्येते षडादेशा भवन्ति ॥ वच्छत्तो । वच्छाओ । वच्छाउ । वच्छाहि । वच्छाहिन्तो । वच्छा ॥ दकारकरणं भाषान्तरार्थम् ॥८॥

**भ्यसस् त्तो दो दु हि हिन्तो सुन्तो ॥८।३।९॥**

अतः परस्य भ्यसः स्थाने त्तो दो दु हि हिन्तो सुन्तो इत्यादेशा भवन्ति ॥ वृक्षेभ्यः । वच्छत्तो । वच्छाओ । वच्छाउ । वच्छाहि । वच्छेहि । वच्छाहिन्तो । वच्छेहिन्तो । वच्छासुन्तो । वच्छेसुन्तो ॥९॥

**ङसः स्सः ॥८।३।१०॥**

अतः परस्य ङस' सयुक्त. सो भवति ॥ पियस्स । पेम्मस्स । उपकुम्भ शैत्यम् । उपकुम्भस्स सीअलत्तण ॥१०॥

**डे म्मि ङेः ॥८।३।११॥**

अतः परस्य डेर्डित् एकारः संयुक्तो मिश्च भवति ॥ वच्छे । वच्छम्मि ॥ देवम् । देवम्मि । तम् । तम्मि । अत्र द्वितीयातृतीययो सप्तमी [३.१३५] इत्यमो डि. ॥११॥

**जस्-शस्-ङसि-त्तो-दो-द्वामि दीर्घः ॥८।३।१२॥**

एषु अतो दीर्घो भवति ॥ जसि शसि च । वच्छा ॥ ङसि । वच्छाओ । वच्छाउ । वच्छाहि । वच्छाहिन्तो । वच्छा ॥ त्तोद्दोदुषु । वृक्षेभ्यः । वच्छत्तो । ह्रस्वः संयोगे [१.४] इति ह्रस्वः ॥ वच्छाओ । वच्छाउ ॥ आमि । वच्छाण ॥ ङसि-नैव सिद्धे त्तोदोदुग्रहणं भ्यसि एत्वबाधनार्थम् ॥१२॥

**भ्यसि वा ॥८।३।१३॥**

भ्यसादेशे परे अतो दीर्घो वा भवति ॥ वच्छाहिन्तो वच्छेहिन्तो । वच्छासुन्तो वच्छेसुन्तो । वच्छाहि वच्छेहि ॥१३॥

**टाण-शस्येत् ॥८।३।१४॥**

टादेशे णे शसि च परे अस्य एकारो भवति ॥ टाण । वच्छेण ॥ णेति किम् ? अप्पणा । अप्प-णिआ । अप्पणइआ । शस् । वच्छे पेच्छ ॥१४॥

**भिस्भ्यस्सुपि ॥८।३।१५॥**

एषु अत एर्भवति ॥ भिस् । वच्छेहि । वच्छेहिँ । वच्छेहिं ॥ भ्यस् । वच्छेहि । वच्छेहिन्तो । वच्छे-सुन्तो ॥ सुप् । वच्छेसु ॥१५॥

**इदुतो दीर्घः ॥८।३।१६॥**

इकारस्य उकारस्य च भिस्भ्यस्सुप्सु परेषु दीर्घो भवति ॥ भिस् । गिरीहि । बुद्धीहि । दहीहि । तरूहि । धेणूहि । महूहि कयं ॥ भ्यस् । गिरीओ । बुद्धीओ । दहीओ । तरूओ । धेणूओ । महूओ आगओ ॥ एवं गिरीहिन्तो । गिरीसुन्तो आगओ इत्याद्यपि ॥ सुप् । गिरीसु । बुद्धीसु । दहीसु । तरूसु । धेणूसु । महूसु ठिअं ॥ क्वचिन्न भवति । दिअ-भूमिसु दाण-जलोल्लिआइं ॥ इदुत इति किम् ? वच्छेहिं । वच्छेसुन्तो । वच्छेसु ॥ भिस्भ्यस्सुपीत्येव । गिरिं तरुं पेच्छ ॥१६॥

**चतुरो वा ॥८।३।१७॥**

चतुर उदन्तस्य भिस्भ्यस्सुप्सु परेषु दीर्घो वा भवति ॥ चऊहि चउहि । चऊओ चउओ । चऊसु चउसु ॥१७॥

**लुप्ते शसि ॥८।३।१८॥**

इदुतोः शसि लुप्ते दीर्घो भवति ॥ गिरी । बुद्धी । तरू । धेणू पेच्छ ॥ लुप्त इति किम् ? गिरिणो । तरुणो पेच्छ ॥ इदुत इत्येव । वच्छे पेच्छ ॥ जस्-शस् [३.१२] इत्यादिना शसि दीर्घस्य लक्ष्यानुरो-धार्थो योगः । लुप्त इति तु णवि प्रतिप्रसवार्थशङ्का-निवृत्त्यर्थम् ॥१८॥

**अक्लीवे सौ ॥८।३।१९॥**

इदुतोऽक्लीवे नपुंसकादन्यत्र सौ दीर्घो भवति ॥ गिरी । बुद्धी । तरू । धेणू ॥ अक्लीब इति किम् ? दहिं । महुं ॥ साविति किम् ? गिरिं । बुद्धिं । तरुं । धेणुं ॥ केचित्तु दीर्घत्वं विकल्प्य तदभावपक्षे सेर्मा-देशमपीच्छन्ति । अग्गिं । निहिं । वाउं । विहुं ॥१९॥

**पुंसि जसो डउ डओ वा ॥८।३।२०॥**

इदुत इतीह पञ्चम्यन्तं सबध्यते । इदुतः परस्य जसः पुंसि अउ अओ इत्यादेशौ डितौ वा भवतः ॥ अग्गउ अग्गओ । वायउ वायओ चिट्ठन्ति । पक्षे । अग्गिणो । वाउणो ॥ शेषे अदन्तवद्भावाद् अग्गी । वाऊ ॥ पुंसीति किम् ? बुद्धीओ । धेणूओ । दहीइं । महूइं ॥ जस इति किम् ? अग्गी । अग्गिणो । वाऊ । वाउणो पेच्छइ ॥ इदुत इत्येव । वच्छा ॥२०॥

**वोतो डवो ॥८।३।२१॥**

उदन्तात्परस्य जसः पुंसि डित् अवो इत्यादेशो वा भवति ॥ साहवो । पक्षे । साहओ । साहउ । साहू । साहुणो ॥ उत इति किम् ? वच्छा ॥ पुंसी-

त्येव। धेणू। महूइं। जस इत्येव। साहू। साहुणो पेच्छ ॥२१॥

### जस्-शसोर्णो वा ॥८।३।२२॥

इदुतः परयोर्ज -शसोः पुंसि णो इत्यादेशो वा भवति। गिरिणो। तरुणो रेहन्ति पेच्छ वा। पक्षे। गिरी। तरू॥ पुंसीत्येव। दहीइं। महूइं। ज$_{स्}$-शसोरिति किम्? गिरि। त ॥ इदुत इत्येव। वच्छा। वच्छे॥ जस्-शसोरिति द्वित्वमिदुत इत्यनेन यथासख्याभावार्थम्। एवमुत्तरसूत्रे ऽपि ॥२२॥

### ङसि-ङसोः पुं-क्लीबे वा ॥८।३।२३॥

पुंसि क्लीबे च वर्तमानादिदुतः परयोर्ङसिङसोर्णो वा भवति॥ गिरिणो। तरुणो। दहिणो। महुणो आगओ विआरो वा। पक्षे। ङसेः। गिरीओ। गिरीउ। गिरीहिन्तो। तरूओ। तरूउ। तरूहिन्तो॥ हिलुकौ निषेत्स्येते॥ ङसः। गिरिस्स। तरुस्स॥ ङसिङसोरिति किम्? गिरिणा। तरुणा कयं॥ पुंक्लीब इति किम्? बुद्धीअ। धेणूअ लद्धं समिद्धी वा॥ इदुत इत्येव। कमलाओ। कमलस्स ॥२३॥

### टो णा ॥८।३।२४॥

पुंक्लीबे वर्तमानादिदुतः परस्य टा इत्यस्य णा भवति॥ गिरिणा। गामणिणा। खलपुणा। तरुणा। दहिणा। महुणा॥ ट इति किम्? गिरी। तरू। दहि। महुं॥ -पुंक्लीब इत्येव। बुद्धीअ। धेणूअ कयं॥ इदुत इत्येव। कमलेण ॥२४॥

### क्लीबे स्वरान्म् सेः ॥८।३।२५॥

क्लीबे वर्तमानात्स्वरान्तान्नाम्नः सेः स्थाने म् भवति॥ वणं। पेम्मं। दहिं। महुं॥ दहि महु इति तु सिद्धापेक्षया॥ केचिदनुनासिकमपीच्छन्ति। दहिँ महुँ॥ क्लीब इति किम्? बालो। बाला। स्वरादिति इदुतो निवृत्त्यर्थम् ॥२५॥

### जस्-शस इँ-इं-णयः सप्राग्दीर्घाः ॥८।३।२६॥

क्लीबे वर्तमानान्नाम्नः परयोर्ज$_{स्}$-शसोः स्थाने सानुनासिकसानुस्वाराविकारौ णिश्चादेशा भवन्ति सप्राग्दीर्घाः। एषु सत्सु पूर्वस्वरस्य दीर्घत्वं विधीयते इत्यर्थः॥ इँ। जाइँ वयणाइँ अम्हे॥ इं। उम्मीलन्ति पङ्कयाइं पेच्छ वा चिट्ठन्ति। दहीइं जेम वा हुन्ति महूइं मुञ्च वा॥ णि। फुल्लन्ति पङ्कयाणि गेण्ह वा। हुन्ति दहीणि जेम वा। एवं महूणि॥ क्लीब इत्येव। वच्छा वच्छे॥ जस्-शस इति किम्? सुहं ॥२६॥

### स्त्रियामुदोतौ वा ॥८।३।२७॥

स्त्रियां वर्तमानान्नाम्नः परयोर्जस्-शसोः स्थाने प्रत्येकम् उत् ओत् इत्येतौ सप्राग्दीर्घौ वा भवतः॥ वचनभेदो यथासख्यनिवृत्त्यर्थः॥ मालाउ मालाओ। बुद्धीउ बुद्धीओ। सहीउ सहीओ। धेणूउ धेणूओ। वहूउ वहूओ। पक्षे। माला। बुद्धी। सही। धेणू। वहू॥ स्त्रियामिति किम्? वच्छा। ज -शस इत्येव। मालाए कयं ॥२७॥

### ईतः सेश्चा वा ॥८।३।२८॥

स्त्रियां वर्तमानादीकारान्तात् सेर्जस-शसोश्च स्थाने आकारो वा भवति॥ एसा हसन्तीआ। गोरीआ चिट्ठन्ति पेच्छ वा। पक्षे। हसन्ती। गोरीओ ॥२८॥

### टा-ङस्-ङेरदादिदेद्वा तु ङसेः ॥३।८।२९॥

स्त्रियां वर्तमानान्नाम्नः परेषां टाङस्ङीनां स्थाने प्रत्येकम् अत् आत् इत् एत् इत्येते चत्वार आदेशाः सप्राग्दीर्घा भवन्ति। ङसेः पुनरेते सप्राग्दीर्घा वा भवन्ति॥ मुद्धाअ। मुद्धाइ। मुद्धाए

कय मुहं ठिअं वा ॥ कप्रत्यये तु मुद्धिआअ। मुद्धिआइ। मुद्धिआए॥ कमलिआअ। कमलिआइ। कमलिआए॥ बुद्धीअ। बुद्धीआ। बुद्धीइ। बुद्धीए कय विहओ ठिअं वा ॥ सहीअ। सहीआ। सहीइ। सहीए कय वयण ठिअं वा ॥ धेणूअ। धेणूआ। धेणूइ। धेणूए कय दुद्ध ठिअं वा ॥ वहूअ। वहूआ। वहूइ। वहूए कयं भवणं ठिअं वा ॥ ङसे-स्तु वा। मुद्धाअ। मुद्धाइ। मुद्धाए। बुद्धीअ। बुद्धीआ। बुद्धीइ। बुद्धीए ॥ सहीअ। सहीआ। सहीइ। सहीए ॥ धेणूअ। धेणूआ। धेणूइ। धेणूए॥ वहूअ। वहूआ। वहूइ। वहूए आगओ। पक्षे॥ मुद्धाओ। मुद्धाउ। मुद्धाहिन्तो॥ रईओ। रईउ। रईहिन्तो॥ धेणूओ। धेणूउ। धेणूहिन्तो। इत्यादि ॥ शेषेदन्तवत् [३.१२४] अतिदेशात् जस् शस्-ङसित्तो-दो-द्वामि दीर्घः [३ १२] इति दीर्घत्वं पक्षे ऽपि भवति ॥ स्त्रियामित्येव। वच्छेण। वच्छस्स। वच्छम्मि। वच्छाओ ॥ टादीनामिति किम् ? मुद्धा। बुद्धी। सही। धेणू। वहू ॥२९॥

## नात आत् ॥८।३।३०॥

स्त्रियां वर्तमानादादन्तान्नाम्नः परेषां टाङस्-ङिङसीनामादादेशो न भवति ॥ मालाअ। मालाइ। मालाए कयं सुहं ठिअं आगओ वा ॥३०॥

## प्रत्यये ङीर्न वा ॥८।३।३१॥

अणादिसूत्रेण [हे० २.४.२०] प्रत्ययनिमित्तो यो ङीरुक्तः स स्त्रियां वर्तमानान्नाम्नो वा भवति ॥ साहणी। कुरुचरी। पक्षे। आत् [हे० २.४.१८] इत्याप्। साहणा। कुरुचरा ॥३१॥

## अजातेः पुंसः ॥८।३।३२॥

अजातिवाचिनः पुल्लिङ्गाद् स्त्रियां वर्तमानात् ङीर्वा भवति ॥ नीली नीला। काली काला। हसमाणी हसमाणा। सुप्पणही सुप्पणहा। इमीए इमाए। इमीणं इमाणं। एईए एआए। एईणं एआणं ॥ अजातेरिति किम् ? करिणी। अया। एलया अप्राप्ते विभाषेयम्। तेन गोरी कुमारी इत्यादौ संस्कृतवन्नित्यमेव ङीः ॥३२॥

## किं-यत्तदो ऽस्यमामि ॥८।३।३३॥

सिअम्आम्वर्जिते स्यादौ परे एभ्यः स्त्रियां ङीर्वा भवति ॥ कीओ। काओ। कीए। काए। कीसु। कासु। एवं। जीओ। जाओ। तीओ। ताओ। इत्यादि ॥ अस्यमामीति किम् ? का। जा। सा। कं। जं। तं। काण। जाण। ताण ॥३३॥

## छाया-हरिद्रयोः ॥८।३।३४॥

अनयोराप्प्रसङ्गे नाम्नः स्त्रियां ङीर्वा भवति ॥ छाही छाया। हलद्दी हलद्दा ॥३४॥

## स्वस्रादेर्डा ॥८।३।३५॥

स्वस्रादेः स्त्रियां वर्तमानात् डा प्रत्ययो भवति ॥ ससा। नणन्दा। दुहिआ। दुहिआहिं। दुहि-आसु। दुहिआ-सुओ। गउआ ॥३५॥

## ह्रस्वो ऽमि ॥८।३।३६॥

स्त्रीलिङ्गस्य नाम्नो ऽमि परे ह्रस्वो भवति ॥ मालं। नइं। वहुं। हसमाणि। हसमाणं पेच्छ ॥ अमीति किम् ? माला। सही। वहू ॥३६॥

## नामन्त्र्यात्सौ मः ॥८।३।३७॥

आमन्त्र्यार्थात्परे सौ सति क्लीबे स्वरान्म् सेः [३.२५]इति यो म् उक्तः स न भवति ॥ हे तण। हे दहि। हे महु ॥३७॥

## डो दीर्घो वा ॥८।३।३८॥

आमन्त्र्यार्थात्परे सौ सति अतः सेर्डोः [३.२] इति यो नित्यं डो. प्राप्तो यश्च अक्लीबे सौ [३.१९] इति इदुतोरकारान्तस्य च प्राप्तो दीर्घः स वा

भवति ॥ हे देव हे देवो ॥ हे खमा समण हे खमा-समणो । हे अज्ज हे अज्जो ॥ दीर्घः । हे हरी हे हरि । हे गुरू हे गुरु । जाइ-विसुद्धेण पहू । हे प्रभो इत्यर्थः । एवं दोण्णि पहू जिअ-लोए । पक्षे । हे पहु । एषु प्राप्ते विकल्पः ॥ इह त्वप्राप्ते हे गोअमा हे गोअम । हे कासवा हे कासव । रे रे चप्फलया । रे रे निग्घिणया ॥३८॥

## ऋतोद्वा ॥८।३।३९॥

ऋकारान्तस्यामन्त्रणे सौ परे अकारो ऽन्तादेशो वा भवति ॥ हे पितः । हे पिअ ॥ हे दातः । हे दाय । पक्षे । हे पिअरं । हे दायार ॥३९॥

## नाम्न्यरं वा ८।३।४०॥

ऋदन्तस्यामन्त्रणे सौ परे नाम्नि सञ्ज्ञायां विषये अरं इति अन्तादेशो वा भवति ॥ हे पितः । हे पिअरं । पक्षे । हे पिअ ॥ नाम्नीति किम् ? हे कर्तः । हे कत्तार ॥ ४० ॥

## वाप ए ॥८।३।४१॥

आमन्त्रणे सौ परे आप एत्वं वा भवति ॥ हे माले । हे महिले । अज्जिए । पज्जिए । पक्षे । हे माला । इत्यादि ॥ आप इति किम् ? हे पिउच्छा । हे माउच्छा ॥ बहुलाधिकारात् क्वचिदोत्वमपि । अम्मो भणामि भणिए ॥४१॥

## ईदूतोर्ह्रस्वः ॥८।३।४२॥

आमन्त्रणे सौ परे ईदूदन्तयोर्ह्रस्वो भवति ॥ हे नइ । हे गामणि । हे समणि । हे वहु । हे खलपु ॥४२॥

## क्विपः ॥८।३।४३॥

क्विबन्तस्येदूदन्तस्य ह्रस्वो भवति ॥ गामणिणा । खलपुणा । गामणिणो । खलपुणो ॥४३॥

## ऋतामुदस्यमौसु वा ॥८।३।४४॥

सिअम्औवर्जिते अर्थात् स्यादौ परे ऋदन्तानामुदन्तादेशो वा भवति ॥ जस् । भत्तू । भत्तुणो । भत्तउ । भत्तओ । पक्षे । भत्तारा ॥ शस । भत्तू । भत्तुणो । पक्षे भत्तारे ॥ टा । भत्तुणा । पक्षे । भत्तारेण ॥ भिस् । भत्तूहिं । पक्षे । भत्तारेहिं॥ ङसि । भत्तुणो । भत्तूओ । भत्तूउ । भत्तूहि । भत्तूहिन्तो । पक्षे । भत्ताराओ । भत्ताराउ । भत्ताराहि । भत्ताराहिन्तो। भत्तारा । ङस् । भत्तूणो । भत्तुस्स । पक्षे । भत्तारस्स । सुप् । भत्तुसु । पक्षे भत्तारेसु ॥ बहुवचनस्य व्याप्त्यर्थत्वात् यथादर्शनं नाम्न्यपि उद् वा भवति जस्शस्ङसिङस्सु । पिउणो । जामाउणो । भाउणो ॥ टायाम् । पिउणा ॥ भिसि । पिऊहि ॥ सुपि । पिऊसु । पक्षे । पिअरा । इत्यादि ॥ अस्यमौस्विति किम् ? सि । पिआ ॥ अम् । पिअरं ॥ औ । पिअरा ॥ ४४ ॥

## आरः स्यादौ ।८।३।४५।

स्यादौ परे ऋत आर इत्यादेशो भवति ॥ भत्तारो । भत्तारा । भत्तारं । भत्तारे । भत्तारेण । भत्तारेहि ॥ एवं ङस्यादिषूदाहार्यम् ॥ लुप्तस्याद्यपेक्षया । भत्तार-विहिअं ॥ ४५ ॥

## आ अरा मातुः ॥८ ३।४६॥

मातृसम्बन्धिन ऋतः स्यादौ परे आर इत्यादेशो भवतः ॥ माआ । माअरा । माआउ । माआओ । माअराउ । माअराओ । माअं । माअरं । इत्यादि । बाहुलकाज्जनन्यर्थस्य आ देवतार्थस्य तु अरा इत्यादेशः। माआए । कुच्छीए । नमो माअराण ॥ मातुरिद् वा [८.१.१३५] इतीत्त्वे माईण इति भवति ॥ ऋतामुद [३.४४]इत्यादिना उत्त्वे तु माऊए समन्निअं

वन्दे इति ॥ स्यादावित्येव । माइदेवो । माइ-गणो ॥४६॥

नाम्न्यरः ।।८।३।४७॥

ऋदन्तस्य नाम्नि सञ्ज्ञायां स्यादौ परे अर इत्यन्तादेशो भवति ॥ पिअरा । पिअरं । पिअरे। पिअरेण । पिअरेहि । जामायरा । जामायरं । जामायरे । जामायरेण । जामायरेहि । भायरा । भायरं । भायरे । भायरेण । भायरेहि ॥४७॥

आ सौ न वा । ८ । ३ । ४८ ॥

ऋदन्तस्य सौ परे आकारो वा भवति ॥ पिआ । जामाया । भाया । कत्ता । पक्षे । पिअरो । जामायरो । भायरो । कत्तारो ॥४८॥

राज्ञः । ८ । ३ । ४९ ॥

राज्ञो नलोपे ऽन्त्यस्य आत्वं वा भवति सौ परे ॥ राया । हे राया । पक्षे । आणादेशे । रायाणो । हे राया । हे रायं इति तु शौरसेन्याम् । एवं हे अप्प । हे अप्प ॥४९॥

जस्-शस्-ङसि-ङसां णो । ८ । ३ । ५० ॥

राजन्शब्दात्परेषामेषां णो इत्यादेशो वा भवति ॥ जस् । रायाणो चिट्ठन्ति। पक्षे । राया। शस् । रायाणो पेच्छ । पक्षे राया । राए॥ ङसि । राइणो रण्णो आगओ । पक्षे । रायाओ । रायाउ । रायाहि । रायाहिन्तो । राया ॥ ङस् । राइणो रण्णो धण । पक्षे । रायस्स ॥५०॥

टो णा । ८ । ३ । ५१ ॥

राजन्शब्दात्परस्य टा इत्यस्य णा इत्यादेशो वा भवति ॥ राइणा । रण्णा । पक्षे । रायेण कय ॥५१॥

इर्जस्य णो-णा-ङौ । ८ । ३ । ५२ ॥

राजन्शब्दसम्बन्धिनो जकारस्य स्थाने णोणा-ङिषु परेषु इकारो वा भवति ॥ राइणो चिट्ठन्ति पेच्छ आगओ धणं वा ॥ राइणा कयं । राइम्मि । पक्षे । रायाणो । रण्णो । रायणा । राएण । रायम्मि ॥

इणममामा । ८ । ३ ॥ ५३ ॥

राजन्शब्दसम्बन्धिनो जकारस्य अमाम्भ्या सहितस्य स्थाने इणम् इत्यादेशो वा भवति ॥ राइणं पेच्छ । राइणं धणं। पक्षे । रायं । राईणं ॥५३॥

ईद्भिस्भ्यसाम्सुपि । ८ । ३ । ५४ ॥

राजन्शब्दसम्बन्धिनो जकारस्य भिसादिषु परतो वा ईकारो भवति ॥ भिस् । राईहि ॥ भ्यस । राईहि । राईहिन्तो । राईसुन्तो ॥ आम् । राईणं ॥ सुप् । राईसु । पक्षे । रायाणेहि । इत्यादि ॥५४॥

आजस्य टा-ङसि-ङस्सु सणाणोष्वण् ।८।३।५५॥

राजन्शब्दसबन्धिन आज इत्यवयवस्य टाङसिङस्सु णा णो इत्यादेशापन्नेषु परेषु अण् वा भवति ॥ रण्णा राइणा कयं । रण्णो राइणो आगओ धण वा ॥ टाङसिङस्स्विति किम् ? रायाणो चिट्ठन्ति पेच्छ वा ॥ सणाणोष्विति किम् ? राएण । रायाओ । रायस्स ॥५५॥

पुंस्यन आणो राजवच्च । ८ । ३ । ५६ ॥

पुल्लिङ्गे वर्तमानस्यान्नन्तस्य स्थाने आण इत्यादेशो वा भवति । पक्षे । यथादर्शनं राजवत् कार्यं भवति ॥ आणादेशे च अतः सेर्डोः [ ३·२ ] इत्यादयः प्रवर्तन्ते । पक्षे तु राज्ञः जस्-शस्-ङसि-ङसां णो [ ३·५० ] टो णा [ ३·२४ ] इणममामा [ ३·५३ ] इति प्रवर्तन्ते ॥ अप्पाणो । अप्पाणा अप्पाण । अप्पाणे । अप्पाणेण । अप्पाणेहि । अप्पाणाओ । अप्पाणासुन्तो । अप्पाणस्स ।

अप्पाणाण । अप्पाणम्मि । अप्पाणेसु । अप्पाणकयं । पक्षे । राजवत् । अप्पा । अप्पो । हे अप्पा । हे अप्प । अप्पाणो चिट्ठन्ति । अप्पाणो पेच्छ ॥ अप्पणा । अप्पेहि । अप्पाणो । अप्पाओ । अप्पाउ । अप्पाहि । अप्पाहिन्तो । अप्पा । अप्पासुन्तो ॥ अप्पणो धणं । अप्पाणं । अप्पे । अप्पेसु ॥ रायाणो । रायाणा । रायाणं । रायाणे । रायाणेण । रायाणेहिं । रायाणाहिन्तो । रायाणस्स । रायाणाणं । रायाणम्मि । रायाणेसु । पक्षे । राया । इत्यादि । एवं जुवाणो । जुवाण-जुणो । जुआ ॥ बम्हाणो । बम्हा ॥ अद्धाणो । अद्धा ॥ उक्षन् । उच्छाणो । उच्छा ॥ गावाणो । गावा ॥ पूसाणो । पूसा ॥ तक्खाणो । तक्खा ॥ मुद्धाणो । मुद्धा ॥ श्वन् । साणो । सा ॥ सुकर्मण पश्य । सुकम्माणे पेच्छ । निएइ कह सो सुकम्माणे । पश्यति कथं स सुकर्मण इत्यर्थः ॥ पुंसीति किम् ? शर्म । सम्मं ॥५६॥

**आत्मनष्टो णिआ णइआ । ८ । ३ । ५७ ॥**

आत्मनः परस्याष्टायाः स्थाने णिआ णइआ इत्यादेशौ वा भवतः । अप्पणिआ पाउसे उवगयम्मि । अप्पणिआ य विअड्डि खाणिआ । अप्पणइआ । पक्षे । अप्पाणेण ॥५७॥

**अतः सर्वादेर्डेर्जसः । ८ । ३ । ५८ ॥**

सर्वादेरदन्तात्परस्य जसः डित् ए इत्यादेशो भवति ॥ सव्वे । अन्ने । जे । ते । के । एक्के । कयरे । इयरे । एए॥ अत इति किम् ? सव्वाओ रिद्धीओ ॥ जस इति किम् ? सव्वस्स ॥५८॥

**ङेः स्सि-म्मि-त्थाः । ८ । ३ । ५९ ॥**

सर्वादेरकारात्परस्य ङेः स्थाने स्सि म्मि त्थ एते आदेशा भवन्ति ॥ सव्वस्सि । सव्वम्मि । सव्वत्थ ॥ अन्नस्सिं । अन्नम्मि । अन्नत्थ ॥ एवं सर्वत्र ॥ अत इत्येव । अमुम्मि ॥५९॥

**न वानिदमेतदो हिं । ८ । ३ । ६० ॥**

इदम्एतद्वर्जितात्सर्वादेरदन्तात्परस्य ङेर्हिमादेशो वा भवति ॥ सव्वहिं । अन्नहिं । कहिं । जहिं । तहिं ॥ बहुलाधिकारात् कियत्तद्भ्यः स्त्रियामपि । काहि । जाहि ताहि ॥ बाहुलकादेव कियत्तदोस्यमामि [३. ३३] इति ङीर्नास्ति ॥ पक्षे । सव्वस्सि सव्वम्मि । सव्वत्थ । इत्यादि ॥ स्त्रियां तु पक्षे । काए । कीए । जाए । जीए । ताए । तीए ॥ इदमेतद्वर्जनं किम् ? इमस्सिं । एअस्सि ॥६०॥

**आमो डेसिं । ८ । ३ । ६१ ॥**

सर्वादेरकारान्तात्परस्यामो डेसिमित्यादेशो वा भवति ॥ सव्वेसिं । अन्नेसि । अवरेसि । इमेसिं । एएसि । जेसि । तेसि । केसि । पक्षे । सव्वाण । अन्नाण । अवराण । इमाण । एआण । जाण । ताण । काण ॥ बाहुलकात् स्त्रियामपि । सर्वासाम् । सव्वेसि ॥ एवम् अन्नेसि । तेसि ॥६१॥

**किंतद्भ्यां डासः । ८ । ३ । ६२ ॥**

किंतद्भ्यां परस्यामः स्थाने डास इत्यादेशो वा भवति ॥ कास । तास । पक्षे । केसि । तेसि ॥६२॥

**किंयत्तद्भ्यो ङसः । ८ । ३ । ६३ ॥**

एभ्यः परस्य ङसः स्थाने डास इत्यादेशो वा भवति । ङसः स्सः [३. १०] इत्यस्यापवादः । पक्षे सोऽपि भवति ॥ कास । कस्स । जास । जस्स । तास । तस्स ॥ बहुलाधिकारात् किंतद्भ्यामाकारान्ताभ्यामपि डासादेशो वा । कस्या धनम् । कास धणं ॥ तस्या धनम् । तास धण । पक्षे । काए । ताए ॥६३॥

**ईद्भ्यः स्सा से । ८ । ३ । ६४ ॥**

किमादिभ्य ईदन्तेभ्यः परस्य ङसः स्थाने स्सा से इत्यादेशौ वा भवतः । टा-ङस्-ङेरदादिदेद्वा तु ङसेः [३.२९] इत्यस्यापवादः । पक्षे अदादयो ऽपि ॥ किस्सा । कीसे । कीअ । कीआ । कीइ । कीए ॥ जिस्सा । जीसे । जीअ । जीआ । जीइ । जीए ॥ तिस्सा । तीसे । तीअ । तीआ । तीइ । तीए ॥६४॥

**ङेर्डाहे डाला इआ काले ॥८।३।६५॥**

कियत्तद्भ्यः काले ऽभिधेये ङेः स्थाने आहे आला इति डितौ इआ इति च आदेशा वा भवन्ति । हिंस्सिम्मित्थानामपवादः । पक्षे ते ऽपि भवन्ति ॥ काहे । काला । कइआ ॥ जाहे । जाला । जइआ । ताहे । ताला । तइआ ॥६५॥

ताला जाअन्ति गुणा जाला ते सहिअएहिं घेप्पन्ति ॥

पक्षे । कहिं । कस्सि । कम्मि । कत्थ ॥६५॥

**ङसेर्म्हा ।८।३।६६॥**

कियत्तद्भ्यः परस्य ङसेः स्थाने म्हा इत्यादेशो वा भवति ॥ कम्हा । जम्हा । तम्हा । पक्षे । काओ । जाओ । ताओ ॥६६॥

**तदो डोः ।८।३।६७॥**

तदः परस्य ङसेर्डो इत्यादेशो वा भवति ॥ तो । तम्हा ॥६७॥

**किमो डिणो-डीसौ ।८।३।६८॥**

किमः परस्य ङसेर्डिणो डीस इत्यादेशौ वा भवतः ॥ किणो । कीस । कम्हा ॥६८॥

**इदमेतत्कि-यत्तद्भ्यष्टो डिणा ।८।३।६९॥**

एभ्य सर्वादिभ्यो ऽकारान्तेभ्य. परस्याष्टायाः स्थाने डित् इणा इत्यादेशो वा भवति ॥ इमिणा । इमेण ॥ एदिणा । एदेण ॥ किणा । केण ॥ जिणा । जेण ॥ तिणा तेण ॥६९॥

**तदो णः स्यादौ क्वचित् ।८।३।७०॥**

तदः स्थाने स्यादौ परे ण आदेशो भवति क्वचित् लक्ष्यानुसारेण ॥ णं पेच्छ । तं पश्येत्यर्थः ॥ सोअइ अ णं रहुवई । तमित्यर्थः ॥ स्त्रियामपि । हत्थुन्नामिअ-मुही णं तिअडा । तां त्रिजटेत्यर्थः ॥ णेण भणिअं । तेन भणितमित्यर्थः ॥ तो णेण कर-यल-ट्ठिआ । तेनेत्यर्थः ॥ भणिअं च णाए । तये-त्यर्थः ॥ णेहि कयं । तैः कृतमित्यर्थः ॥ णाहिं कयं । ताभिः कृतमित्यर्थः ॥७०॥

**किमः कस्त्र-तसोश्च ।८।३।७१॥**

किमः को भवति स्यादौ त्रतसोश्च परयोः ॥ को । के । कं । के । केण ॥ त्र । कत्थ ॥ तस् । कओ । कत्तो । कदो ॥७१॥

**इदम इमः ।८।३।७२॥**

इदमः स्यादौ परे इम आदेशो भवति ॥ इमो । इमे । इमं । इमे । इमेण ॥ स्त्रियामपि । इमा ॥७२॥

**पुं-स्त्रियोर्न वायमिमिआ सौ ।८।३।७३॥**

इदम्शब्दस्य सौ परे अयमिति पुल्लिङ्गे इमिआ इति स्त्रीलिङ्गे आदेशौ वा भवतः ॥ अहवायं कय-कज्जो । इमिआ वाणिअ-धूआ । पक्षे । इमो इमा ॥७३॥

**स्सि-स्सयोरत् ।८।३।७४॥**

इदमः स्सि स्स इत्येतयोः परयोरद् भवति वा ॥ अस्सि । अस्स । पक्षे इमादेशोपि । इमस्सि । इमस्स ॥ बहुलादिकारादन्यत्रापि भवति । एहि । एसु । आहि । एभिः एषु आभिरित्यर्थः ॥७४॥

### ङेर्मेन हः ।८।३।७५॥

इदमः कृतेमादेशात् परस्य ङेः स्थाने मेन सह ह आदेशो वा भवति ॥ इह । पक्षे । इमस्सिं । इमम्मि ॥७५॥

### न त्थः ।८।३।७६॥

इदमः परस्य ङेः स्सि-म्मि-त्थाः [३.५९.] इति प्राप्तः त्थो न भवति ॥ इह । इमस्सि । इमम्मि ॥७६॥

### णोऽम्-शस्टा-भिसि ।८।३।७७॥

इदमः स्थाने अम्शस्टाभिस्सु परेषु ण आदेशो वा भवति ॥ णं पेच्छ । णे पेच्छ । णेण । णेहि कयं । पक्षे । इमं । इमे । इमेण । इमेहि ॥७७॥

### अमेणम् ।८।३।७८॥

इदमोमा सहितस्य स्थाने इणम् इत्यादेशो वा भवति ॥ इणं पेच्छ । पक्षे । इमं ॥७८॥

### क्लीबे स्यमेदमिणमो च ।८।३।७९॥

नपुंसकलिङ्गे वर्तमानस्येदमः स्यम्भ्यां सहितस्य इदम् इणमो इणम् च नित्यमादेशा भवन्ति ॥ इदं इणमो इणं धणं चिट्ठइ पेच्छ वा ॥७९॥

### किमः किं ।८।३।८०॥

किमः क्लीबे वर्तमानस्य स्यम्भ्यां सह किं भवति ॥ किं कुलं तुह । कि कि ते पडिहाइ ॥८०॥

### वेदं-तदेतदो ङसाम्भ्यां से-सिमौ ।८।३।८१॥

इदम् तद् एतद् इत्येतेषां स्थाने ङस् आम् इत्येताभ्यां सह यथासंख्यं से, सिम् इत्यादेशौ वा भवतः ॥ इदम् । से सीलम् । से गुणा । अस्य शीलं गुणा वेत्यर्थः ॥ सिं उच्छाहो । एषाम् उत्साह इत्यर्थः ॥ तद् । से सीलं । तस्य तस्या वेत्यर्थः ॥ सिं गुणा । तेषां तासां वेत्यर्थः ॥ एतत् । से अहिअं । एतस्याहितमित्यर्थः ॥ सिं गुणा । सि सीलं । एतेषां गुणाः शीलं वेत्यर्थः । पक्षे । इमस्स । इमेसि । इमाण ॥ तस्स । तेसि । ताण ॥ एअस्स । एएसि । एआण । इदंतदोरामापि सेआदेशं कश्चिदिच्छति ॥८१॥

### वैतदो ङसेस्त्तो त्ताहे ।८।३।८२॥

एतदः परस्य ङसेः स्थाने त्तो त्ताहे इत्येतावादेशौ वा भवतः ॥ एत्तो । एत्ताहे । पक्षे । एआओ । एआउ । एआहि । एआहिन्तो । एआ ॥८२॥

### त्थे च तस्य लुक् ।८।३।८३॥

एतदस्त्थे परे चकारात् त्तो त्ताहे इत्येतयोश्च परयोस्तस्य लुग् भवति ॥ एत्थ । एत्तो । एत्ताहे ॥८३॥

### एरदीतौ म्मौ वा ।८।३।८४॥

एतद एकारस्य ङ्यादेशे म्मौ परे अदीतौ वा भवतः ॥ अयम्मि । ईयम्मि । पक्षे । एअम्मि ॥८४॥

### वैसेणमिणमो सिना ।८।३।८५॥

एतदः सिना सह एस इणम् इणमो इत्यादेशा वा भवन्ति ॥ सव्वस्स वि एस गई ॥ सव्वाण वि पत्थिवाण एस मही ॥ एस सहाओ च्चिअ ससहरस्स ॥ एस सिरं । इणं । इणमो । पक्षे । एअं । एसा । एसो ॥८५॥

### तदश्च तः सोऽक्लीबे ।८।३।८६॥

तद एतदश्च तकारस्य सौ परे अक्लीबे सो भवति ॥ सो पुरिसो । सा महिला । एसो पिओ । एसा मुद्धा ॥ सावित्येव । ते एए धन्ना । ताओ एआओ महिलाओ ॥ अक्लीब इति किम् ? तं एअं वणं ॥८६॥

**वादसो दस्य होनोदाम् ।८।३।८७॥**

अदसो दकारस्य सौ परे ह आदेशो वा भवति तस्मिश्च कृते 'अत' सेर्डोः' [३.२] इत्योत्वं शेषं सस्कृतवत् [४-४४८] इत्यतिदेशाद् 'आत्' [हे० २ ४.१८] इत्याप् 'क्लीवे स्वरान्म् से' [३.२५] इति मश्च न भवति ॥ अह पुरिसो । अह महिला । अह वण । अह मोहो पर-गुण-लहुअयाइ । अह णे हिअएण हसइ मारुय-तणओ । असावस्मान् हसतीत्यर्थ. । अह कमल-मुही । पक्षे । उत्तरेण मुरादेश' । अमू पुरिसो । अमू महिला । अमुं वणं ॥८७॥

**मुः स्यादौ ।८।३।८८॥**

अदसो दस्य स्यादौ परे मुरादेशो भवति ॥ अमू पुरिसो । अमुणो पुरिसा । अमुं वणं । अमूइ वणाइ । अमूणि वणाणि । अमू माला । अमूउ अमूओ मालाओ । अमुणा । अमूहि ॥ ङसि । अमूओ । अमूउ । अमूहिन्तो ॥ भ्यस् । अमूहिन्तो । अमूसुन्तो ॥ ङस् । अमुणो । अमुस्स । आम् । अमूण ॥ ङि । अमुम्मि ॥ सुप् । अमूसु ॥८८॥

**म्मावयेओ वा ।८।३।८९॥**

अदसोऽन्त्यव्यञ्जनलुकि दकारान्तस्य स्थाने ङ्यादेशे म्मौ परतः अय इअ इत्यादेशौ वा भवतः॥ अयम्मि । इअम्मि । पक्षे । अमुम्मि ॥८९॥

**युष्मदस्त तुं तुवं तुह तुमं सिना ।८।३।९०॥**

युष्मद' सिना सह तं तु तुव तुह तुम इत्येते पञ्चादेशा भवन्ति॥ त तु तुवं तुह तुमं दिट्ठो ॥९०॥

**भे तुब्भे तुज्झ तुम्ह तुय्हे उय्हे जसा ।८।३।९१॥**

युष्मदो जसा सह भे तुब्भे तुज्झ तुम्ह तुय्हे उय्हे इत्येते षडादेशा भवन्ति ॥ भे तुब्भे तुज्झ तुम्ह तुय्हे उय्हे चिट्ठह । 'ब्भो म्हज्झौ वा' [३.१०४] इति वचनात् तुम्हे । तुज्झे । एवं चाष्टरूप्यम् ॥९१॥

**तं तुं तुमं तुव तुह तुमे तुए अमा ।८।३।९२॥**

युष्मदोऽमा सह एते सप्तादेशा भवन्ति ॥ त तु तुमं तुवं तुह तुमे तुए वन्दामि ॥९२॥

**वो तुज्झ तुब्भे तुय्हे उय्हे भे शसा ।८।३।९३॥**

युष्मद' शसा सह एते षडादेशा भवन्ति ॥ वो तुज्झ तुब्भे ।'ब्भो म्हज्झौ वा' इति वचनात् तुम्हे तुज्झे तुय्हे उय्हे भे पेच्छामि ॥९३॥

**भे दि दे ते तइ तए तुमं तुमइ तुमए तुमे तुमाइ टा ।८।३।९४॥**

युष्मदष्टा इत्यनेन सह एते एकादशादेशा भवन्ति ॥ भे दि दे ते तइ तए तुम तुमइ तुमए तुमे तुमाइ जम्पिअ ॥९४॥

**भे तुब्भेहिं उज्झेहिं उम्हेहि तुय्हेहि उय्हेहिं भिसा ।८।३।९५॥**

युष्मदो भिसा सह एते षडादेशा भवन्ति ॥ भे । तुब्भेहिं । 'ब्भो म्ह-ज्झौ वा' इति वचनात् तुम्हेहि तुज्झेहि उज्झेहिं उम्हेहि तुय्हेहि उय्हेहि भुत्त । एवं चाष्टरूप्यम् ॥९५॥

**तइ-तुव-तुम-तुह-तुब्भा ङसौ ।८।३।९६॥**

युष्मदो ङसौ पञ्चम्येकवचने परत एते पञ्चादेशा भवन्ति। ङसेस्तु त्तोदोदुहिहिन्तोलुको यथाप्राप्तमेव ॥तइत्तो। तुवत्तो । तुमत्तो॥ तुहत्तो। तुब्भत्तो। 'ब्भो म्ह-ज्झौ वा' इति वचनात् तुम्हत्तो । तुज्झत्तो ॥ एवं दोदुहिहिन्तोलुक्ष्वप्युदाहार्यम् ॥ तत्तो इति तु त्वत्त इत्यस्य वलोपे सति ॥९६॥

**तुय्ह तुब्भ तहिन्तो ङसिना ।८।३।९७॥**

युष्मदो ङसिना सहितस्य एते त्रय आदेशा भवन्ति ॥ तुय्ह तुब्भ तहिन्तो आगओ । ब्भो म्ह-ज्झौ वेति वचनात् तुम्ह । तुज्झ । एवं च पञ्च रूपाणि ॥९७॥

**तुब्भ-तुय्होय्होम्हा भ्यसि ।८।३।९८॥**

युष्मदो भ्यसि परत एते चत्वार आदेशा भवन्ति ॥ भ्यसस्तु यथाप्राप्तमेव ॥ तुब्भत्तो । तुय्हत्तो । उय्हत्तो ब्भो म्ह-ज्झौ वेति वचनात् तुम्हत्तो । तुज्झत्तो ॥ एवं दोदुहिहिन्तोप्वप्युदाहार्यम् ॥९८॥

**तइ-तु-ते-तुम्हं-तुह-तुहं-तुव-तुम-तुमे-तुमो-तुमाइ-दि-दे-इ-ए-तुब्भोब्भोय्हा ङसा ।८।३।९९॥**

युष्मदो ङसा षष्ठ्येकवचनेन सहितस्य एते अष्टादशादेशा भवन्ति ॥ तइ । तु । ते । तुम्हं । तुह । तुहं । तुव । तुम । तुमे । तुमो । तुमाइ । दि । दे । इ । ए । तुब्भ । उब्भ । उय्ह धणं । 'ब्भो म्ह-ज्झौ वेति वचनात् तुम्ह । तुज्झ । उम्ह । उज्झ । एवं च द्वाविंशती रूपाणि ॥९९॥

**तु वो भे तुब्भ तुब्भं तुब्भाण तुवाण तुमाण तुहाण उम्हाण आमा ।८।३।१००॥**

युष्मद आमा सहितस्य एते दशादेशा भवन्ति । तु । वो । भे । तुब्भ । तुब्भं । तुब्भाण । तुवाण । तुमाण । तुहाण । उम्हाण । 'क्त्वा स्यादेर्णस्वोर्वा' । [१.२७] इत्यनुस्वारे तुब्भाणं । तुवाणं । तुमाणं । तुहाणं । उम्हाणं ॥ ब्भो म्ह ज्झौ वेति वचनात् तुम्ह । तुज्झ तुम्हं । तुज्झं । तुम्हाण । तुम्हाणं । तुज्झाण । तुज्झाणं । धणं । एवं च त्रयोविंशती रूपाणि ॥१००॥

**तुमे तुमए तुमाइ तइ तए ङिना ।८।३।१०१।**

युष्मदो ङिना सप्तम्येकवचनेन सहितस्य एते पञ्चादेशा भवन्ति ॥ तुमे तुमए तुमाइ तइ तए ठिअं ॥१०१॥

**तु-तुव-तुम-तुह-तुब्भा ङौ ।८।३।१०२॥**

युष्मदो ङौ परत एते पञ्चादेशा भवन्ति । ङेस्तु यथाप्राप्तमेव ॥ तुम्मि । तुवम्मि । तुमम्मि । तुहम्मि । तुब्भमि । 'ब्भो म्ह-ज्झौ वेति वचनात् तुम्हम्मि ।' तुज्झम्मि । इत्यादि ॥१०२॥

**सुपि ।८।३।१०३॥**

युष्मदः सुपि परतः तु-तुव-तुम-तुह-तुब्भा भवन्ति ॥ तुसु । तुवेसु । तुमेसु । तुहेसु । तुब्भेसु ॥ 'ब्भो म्ह-ज्झौ वा' इति वचनात् तुम्हेसु । तुज्झेसु ॥ केचित्तु सुप्येत्वविकल्पमिच्छन्ति । तन्मते तुवसु । तुमसु । तुहसु । तुब्भसु । तुम्हसु । तुज्झसु ॥ तुब्भस्यात्वमपीच्छत्यन्यः । तुब्भासु । तुम्हासु । तुज्झासु ॥१०३॥

**ब्भो म्ह-ज्झौ वा ।८।३।१०४॥**

युष्मदादेशेषु यो द्विरुक्तो भस्तस्य म्ह ज्झ इत्येतावादेशौ वा भवतः ॥ पक्षे स एवास्ते । तथैव चोदाहृतम् ॥१०४॥

**अस्मदो म्मि अम्मि अम्हि हं अहं अहयं सिना ।८।३।१०५॥**

अस्मदः सिना सह एते षडादेशा भवन्ति ॥ अज्ज म्मि हासिआ मामि तेण ॥ उन्नम न अम्मि कुविआ । अम्हि करेमि । जेण हं विद्धा । कि पम्हुट्ठम्मि अह । अहयं कय-प्पणामो ॥१०५॥

**अम्ह अम्हे अम्हो मो वयं भे जसा ।८।३।१०६॥**

अस्मदो जसा सह एते षडादेशा भवन्ति ॥ अम्ह अम्हे अम्हो मो वयं भे भणामो ॥१०६॥

**णे णं मि अम्मि अम्ह मम्ह मं ममं मिमं अहं अमा ।८।३।१०७॥**

अस्मदो ऽमा सह एते दशादेशा भवन्ति ॥ णे ण मि अम्मि अम्ह मम्ह मं ममं मिमं अहं पेच्छ ॥१०७॥

**अम्हे अम्हो अम्ह णे शसा ।८।३।१०८॥**

अस्मदः शसा सह एते चत्वार आदेशा भवन्ति ॥ अम्हे अम्हो अम्ह णे पेच्छ ॥१०८॥

**मि मे ममं ममए ममाइ मइ मए मयाइ णे टा ।८।३।१०९॥**

अस्मदष्टा सह एते नवादेशा भवन्ति ॥ मि मे ममं ममए ममाइ मइ मए मयाइ णे कय ॥ १०९ ॥

**अम्हेहि अम्हाहि अम्ह अम्हे णे भिसा ।८।३।११०॥**

अस्मदो भिसा सह एते पञ्चादेशा भवन्ति ॥ अम्हेहि अम्हाहि अम्ह अम्हे णे कयं ॥११०॥

**मइ-मम-मह-मज्झा ङसौ ।८।३।१११॥**

अस्मदो ङसौ पञ्चम्येकवचने परत एते चत्वार आदेशा भवन्ति । ङसेस्तु यथाप्राप्तमेव ॥ मइत्तो ममत्तो महत्तो मज्झत्तो आगओ ॥ मत्तो इति तु मत्त इत्यस्य ॥ एवं दो-दु-हि-हिन्तो-लुक्ष्वप्युदाहार्यम् ॥१११॥

**ममाम्हौ भ्यसि ।८।३।११२॥**

अस्मदो भ्यसि परतो मम अम्ह इत्यादेशौ भवत । भ्यसस्तु यथाप्राप्तम् ॥ ममत्तो । अम्हत्तो । ममाहिन्तो । अम्हाहिन्तो । ममासुन्तो । अम्हासुन्तो । ममेसुन्तो । अम्हेसुन्तो ॥११२॥

**मे मइ मम मह महं मज्झ मज्झं अम्ह अम्हं ङसा ।८।३।११३॥**

अस्मदो ङसा षष्ठ्येकवचनेन सहितस्य एते नवादेशा भवन्ति ॥ मे मइ मम मह महं मज्झ मज्झं अम्ह अम्हं धणं ॥११३॥

**णे णो मज्झ अम्ह अम्हं अम्हे अम्हो अम्हाण ममाण महाण मज्झाण आमा ।८।३।११४॥**

अस्मद आमा सहितस्य एते एकादशादेशा भवन्ति ॥ णे णो मज्झ अम्ह अम्हं अम्हे अम्हो अम्हाण ममाण महाण मज्झाण धणं ॥ क्त्वा स्यादेर्ण-स्वोर्वा [१.२७] इत्यनुस्वारे । अम्हाणं । ममाण । महाणं। मज्झाणं एवं च पञ्चदश रुपाणि ॥११४॥

**मि मइ ममाइ मए मे ङिना ।८।३।११५॥**

अस्मदो ङिना सहितस्य एते पञ्चादेशा भवन्ति ॥ मि मइ ममाइ मए मे ठिअं ॥११५॥

**अम्ह-मम-मह-मज्झा ङौ ।८।३।११६॥**

अस्मदो ङौ परत एते चत्वार आदेशा भवन्ति। ङेस्तु यथाप्राप्तम्॥ अम्हम्मि ममम्मि महम्मि मज्झम्मि ठिअं ॥११६॥

**सुपि ।८।३।११७॥**

अस्मदः सुपि परे अम्हादयश्चत्वार आदेशा भवन्ति ॥ अम्हेसु । ममेसु । महेसु । मज्झेसु। एत्वविकल्पमते तु । अम्हसु । ममसु । महसु । मज्झसु ॥ अम्हस्यात्वमपीच्छत्यन्यः अम्हासु ॥११७॥

**त्रेस्ती तृतीयादौ ।८।३।११८॥**

त्रेः स्थाने ती इत्यादेशो भवति तृतीयादौ ॥ तीहिं कयं। तीहिन्तो आगओ। तिण्ह धणं । तीसु ठिअं ॥११८॥

**द्वेर्दो वे ।८।३।११९॥**

द्विशब्दस्य तृतीयादौ दो वे इत्यादेशौ भवतः॥ दोहि वेहि कयं । दोहिन्तो वेहिन्तो आगओ।

दोण्हं वेण्हं धणं । दोसु वेसु ठिअं ॥११९॥

**दुवे दोण्णि वेण्णि च जस्-शसा ।८।३।१२०॥**

जस्-शस्भ्यां सहितस्य द्वेः स्थाने दुवे दोण्णि वेण्णि इत्येते दो वे इत्येतौ च आदेशा भवन्ति ॥ दुवे दोण्णि वेण्णि दो वे ठिआ पेच्छ वा । ह्रस्वः सयोगे [१.८४] इति ह्रस्वत्वे दुण्णि विण्णि ॥१२०॥

**त्रेस्तिण्णिः ॥८।३।१२१॥**

जस्-शस्भ्यां सहितस्य त्रेः स्थाने तिण्णि इत्यादेशो भवति ॥ तिण्णि ठिआ पेच्छ वा ॥१२१॥

**चतुरश्चत्तारो चउरो चत्तारि ॥८।३।१२२॥**

चतुर्शब्दस्य जस्-शस्भ्यां सह चत्तारो चउरो चत्तारि इत्येते आदेशा भवन्ति ॥ चत्तारो । चउरो । चत्तारि चिट्ठन्ति पेच्छ वा ॥१२२॥

**संख्याया आमो ण्ह ण्हं ॥८।३।१२३॥**

सख्याशब्दात्परस्यामो ण्ह ण्हं इत्यादेशौ भवत ॥ दोण्ह । तिण्ह । चउण्ह । पञ्चण्ह । छण्ह । सत्तण्ह । अट्ठण्ह ॥ एव दोण्हं । तिण्हं । चउण्ह । पञ्चण्हं । छण्हं । सत्तण्हं । अट्ठण्हं । नवण्हं । दसण्ह । पण्णरसण्हं दिवसाणं । अट्ठारसण्ह समण-साहस्सीणं ॥ कतीनाम् । कइण्हं ॥ वहुलाधिकाराद् विंशत्यादेर्न भवति ॥१२३॥

**शेषेऽदन्तवत् ॥८।३।१२४॥**

उपयुक्तादन्य शेषस्तत्र स्यादिविधिरदन्तवदतिदिश्यते । येष्वाकाराद्यन्तेषु पूर्वं कार्याणि नोक्तानि तेषु जस्-शसोर्लुक् [३.४] इत्यादीनि अदन्ताधिकारविहितानि कार्याणि भवन्तीत्यर्थः ॥ तत्र जस्-शसोर्लुक् इत्येतत्कार्यातिदेश । माला गिरी गुरू सही वहू रेहन्ति पेच्छ वा ॥ अमोस्य [३.५] इत्येतत्कार्यातिदेश. । गिरिं गुरुं सहिं वहुं गामणिं खलपुं पेच्छ ॥ टा-आमोर्णः [३.६] इत्येतत्कार्यातिदेशः । हाहाण कयं । मालाण गिरीण गुरूण सहीण वहूण धणं । टायास्तु । टो णा [३.२४] । टा-ङस्-ङेरदादिदेद्वा तु ङसेः [३.२९] इति विधिरुक्तः ॥ भिसो हि हिँ हिं [३.७] इत्येतत्कार्यातिदेशः । मालाहि गिरीहि गुरूहि सहीहि वहूहि कयं । एवं सानुनासिकानुस्वारयोरपि ॥ ङसेस् त्तो-दो-दु-हि-हिन्तो लुकः [३.८] इत्येतत्कार्यातिदेशः । मालाओ । मालाउ । मालाहिन्तो ॥ बुद्धीओ । बुद्धीउ । बुद्धीहिन्तो ॥ धेणूओ । धेणूउ । धेणूहिन्तो आगओ । हिलुकौ तु प्रतिषेत्स्येते [३.१२७.१२६] । भ्यसस् त्तो दो दु हि हिन्तो सुन्तो [३.९] इत्येतत्कार्यातिदेशः । मालाहिन्तो । मालासुन्तो । हिस्तु निषेत्स्यते [३.१२७] । एवं गिरीहिन्तो इत्यादि ॥ ङसः स्सः [३.१०] इत्येतत्कार्यातिदेशः । गिरिस्स । गुरुस्स । दहिस्स । महुस्स ॥ स्त्रियां तु टा-ङस्-ङेः [३.२९] इत्याद्युक्तम् ॥ ङे म्मि ङेः [३.११] इत्येतत्कार्यातिदेशः । गिरिम्मि । गुरुम्मि । दहिम्मि । महुम्मि । ङेस्तु निपेत्स्यते [३.१२८] । स्त्रियां तु टा ङस्-ङेः [३.२९] इत्याद्युक्तम् ॥ जस-शस्-ङसि-त्तो-दो-द्वामि-दीर्घ. [३.१२.] इत्येतत्कार्यातिदेशः । गिरी गुरू चिट्ठन्ति । गिरीओ गुरूओ आगओ । गिरीण गुरूण धण ॥ भ्यसि वा [३.१३] इत्येतत्कार्यातिदेशो न प्रवर्तते । इदुतो दीर्घः [३.१६] इति नित्यं विधानात् ॥ टाण-शस्येत् [३.१४] भिस्भ्यस्सुपि [३.१५] इत्येतत्कार्यातिदेशस्तु निषेत्स्यते [३.१२९] ॥१२४॥

**न दीर्घो णो ॥८।३।१२५॥**

इदुदन्तयोरर्थाज्जस्-शस्ङस्यादेशे णो इत्यस्मिन्

परतो दीर्घो न भवति ॥ अग्गिणो । वाउणो ॥ णो इति किम् ? अग्गी । अग्गीओ ॥१२५॥

### ङसेर्लुक् ॥८।३।१२६॥

आकारान्तादिभ्यो ऽदन्तवत्प्राप्तो ङसेर्लुग् न भवति ॥ मालत्तो । मालाओ । मालाउ । मालाहिन्तो आगओ ॥ एव अग्गीओ । वाऊओ । इत्यादि ॥ ॥१२६॥

### भ्यसश्च हिः ॥८।३।१२७॥

आकारान्तादिभ्यो ऽदन्तवत्प्राप्तो भ्यसो ङसेश्च हिर्न भवति ॥ मालाहिन्तो । मालासुन्तो । एवं अग्गीहिन्तो । इत्यादि ॥ मालाओ । मालाउ । माला-हिन्तो ॥ एवम् अग्गीओ । इत्यादि ॥१२७॥

### ङेर्डेः ॥८।३।१२८॥

आकारान्तादिभ्यो ऽदन्तवत्प्राप्तो ङेर्डे न भवति । अग्गिम्मि । वाउम्मि । दहिम्मि । महुम्मि ॥१२८॥

### एत् ॥८।३।१२९॥

आकारान्तादीनामर्थात् टाशस्भिस्भ्यस्सुप्सु परतो ऽदन्तवद् एत्व न भवति ॥ हाहाण कयं ॥ मालाओ पेच्छ ॥ मालाहि कयं ॥ मालाहिन्तो । मालासुन्तो आगओ ॥ मालासु ठिअं ॥ एवं अग्गिणो । वाउणो । इत्यादि ॥१२९॥

### द्विवचनस्य बहुवचनम् ॥८।३।१३०॥

सर्वासां विभक्तीनां स्यादीनां त्यादीनां च द्विव-चनस्य स्थाने बहुवचन भवति ॥ दोण्णि कुणन्ति । दुवे कुणन्ति । दोहि । दोहिन्तो । दोसुन्तो । दोसु । हत्था । पाया । थणया । नयणा ॥१३०॥

### चतुर्थ्याः षष्ठी ॥८।३।१३१॥

चतुर्थ्या स्थाने षष्ठी भवति ॥ मुणिस्स । मुणीण देइ ॥ नमो देवस्स । देवाण ॥१३१॥

### तादर्थ्यङेर्वा ॥८।३।१३२॥

तादर्थ्यविहितस्य ङेश्चतुर्थ्येकवचनस्य स्थाने षष्ठी वा भवति ॥ देवस्स देवाय । देवार्थमित्यर्थः ॥ ङेरिति किम् ? देवाण ॥१३२॥

### वधाड्डाइश्च वा ॥८।३।१३३॥

वधशब्दात्परस्य तादर्थ्यङेर्डिद् आइः षष्ठी च वा भवति ॥ वहाइ वहस्स वहाय । वधार्थमित्यर्थः ॥१३३॥

### क्वचिद् द्वितीयादेः ॥८।३।१३४॥

द्वितीयादीनां विभक्तीनां स्थाने षष्ठी भवति क्वचित् ॥ सीमाधरस्स वन्दे । तिस्सा मुहस्स भरिमो । अत्र द्वितीयायाः षष्ठी ॥ धणस्स लद्धो । धनेन लब्ध इत्यर्थः । चिरस्स मुक्का । चिरेण मुक्ते-त्यर्थः । तेसिमेअमणाइण्ण । तैरेतदनाचरितम् । अत्र तृतीयायाः ॥ चोरस्स बीहइ । चोराद्बिभेती-त्यर्थः । इअराइ जाण लहुअक्खराइं पायन्तिमिल्ल-सहिआण । पादान्तेन सहितेभ्य इतराणीति । अत्र पञ्चम्याः ॥ पिट्ठीएँ केस-भारो । अत्र सप्तम्याः ॥१३४॥

### द्वितीया-तृतीययोः सप्तमी ॥८।३।१३५॥

द्वितीयातृतीययोः स्थाने क्वचित् सप्तमी भवति ॥ गामे वसामि । नयरे न जामि । अत्र द्वितीयायाः ॥ मइ वेविरीए मलिआइं ॥ तिसु तेसु अलंकिआ पुहवी । अत्र तृतीयायाः ॥१३५॥

### पञ्चम्यास्तृतीया च ॥८।३।१३६॥

पञ्चम्या स्थाने क्वचित् तृतीयासप्तम्यौ भवतः ॥ चोरेण बीहइ । चोराद्बिभेतीत्यर्थः ॥ अन्तेउरे रमिउमागओ राया । अन्तःपुराद् रन्त्वागत इत्यर्थः ॥१३६॥

### सप्तम्या द्वितीया ॥८।३।१३७॥

सप्तम्याः स्थाने क्वचिद् द्वितीया भवति ॥ विज्जुज्जोयं भरइ रत्ति ॥ आर्षे तृतीयापि दृश्यते । तेणं कालेणं । तेणं समएणं । तस्मिन् काले तस्मिन् समये इत्यर्थः ॥ प्रथमाया अपि द्वितीया दृश्यते। चउवीसं पि जिणवरा । चतुर्विंशतिरपि जिनवरा इत्यर्थः ॥१३७॥

### क्यङोर्यलुक् ॥८।३।१३८॥

क्यङन्तस्य क्यषन्तस्य वा सवन्धिनो यस्य लुग् भवति ॥ गरुआइ । गरुआअइ। अगुरुर्गुरुर्भवति गुरुरिवाचरति वेत्यर्थः । क्यङ्ष् । दमदमाइ । दमदमाअइ ॥ लोहिआइ । लोहिआअइ ॥१३८॥

### त्यादीनामाद्यत्रयस्याद्यस्येचेचौ ॥८।३।१३९॥

त्यादीनां विभक्तीनां परस्मैपदानामात्मनेपदानां च संवन्धिनः प्रथमत्रयस्य यदाद्यं वचनं तस्य स्थाने इच् एच् इत्येतावादेशौ भवतः ॥ हसइ । हसए। वेवइ । वेवए । चकारौ इचेच. (४. ३१८) इत्यत्र विशेषणार्थौ ॥१३९॥

### द्वितीयस्य सि से ॥८।३।१४०॥

त्यादीनां परस्मैपदानामात्मनेपदानां च द्वितीयस्य त्रयस्य सवन्धिन आद्यवचनस्य स्थाने सि से इत्येतावादेशौ भवतः ॥ हससि । हससे । वेवसि । वेवसे ॥१४०॥

### तृतीयस्य मिः ॥८।३।१४१॥

त्यादीना परस्मैपदानामात्मनेपदाना च तृतीयस्य त्रयस्याद्यस्य वचनस्य स्थाने मिरादेशो भवति ॥ हसामि । वेवामि ॥ बहुलाधिकाराद् मिवे स्थानीयस्य मेरिकारलोपश्च ॥ वहु-जाणय रूसिउ सक्क । शक्नोमीत्यर्थः ॥ न मरं । न म्रिये इत्यर्थः ॥१४१॥

### वहुष्वाद्यस्य न्ति न्ते इरे ॥८।३।१४२॥

त्यादीनां परस्मैपदात्मनेपदानामाद्यत्रयसबन्धिनो वहुषु वर्तमानस्य वचनस्य स्थाने न्ति न्ते इरे इत्यादेशा भवन्ति ॥ हसन्ति । वेवन्ति । हसिज्जन्ति । रमिज्जन्ति गज्जन्ते खे मेहा ॥ बीहन्ते रक्खसाणं च ॥ उप्पज्जन्ते कइ हिअय-सायरे कव्व-रयणाइं ॥ दोण्णि वि न पहुप्पिरे बाहु । न प्रभवत इत्यर्थः ॥ विच्छुहिरे । विक्षुभ्यन्तीत्यर्थः ॥ क्वचिद् इरे एकत्वे ऽपि । सूसइरे गाम-चिक्खल्लो । शुष्यतीत्यर्थः ॥१४२॥

### मध्यमस्येत्था-हचौ ॥८।३।१४३॥

त्यादीनां परस्मैपदात्मनेपदानां मध्यमस्य त्रयस्य बहुषु वर्तमानस्य स्थाने इत्था हच् इत्येतावादेशौ भवतः ॥ हसित्था । हसह । वेवित्था । वेवह । बाहुलकादित्थान्यत्रापि । यद्यत्ते रोचते । जंजंते । रोइत्था । हच् इति चकारः इह हचोर्हस्य (४. २६८) इत्यत्र विशेषणार्थः ॥१४३॥

### तृतीयस्य मो-मु-मा ॥८।३।१४४॥

त्यादीनां परस्मैपदात्मनेपदानां तृतीयस्य त्रयस्य सबन्धिनो बहुषु वर्तमानस्य वचनस्य स्थाने मो मु म इत्येते आदेशा भवन्ति ॥ हसामो । हसामु । हसाम । तुवरामो । तुवरामु । तुवराम ॥१४४॥

### अत एवैच् से ॥८।३।१४५॥

त्यादेः स्थाने यौ एच् से इत्येतावादेशावुक्तौ तावकारान्तादेव भवतो नान्यस्मात् ॥ हसए । हससे ॥ तुवरए । तुवरसे ॥ करए । करसे ॥ अत इति किम् ? ठाइ । ठासि ॥ वसुआइ । वसुआसि । होइ । होसि ॥ एवकारोकारान्ताद् एच् से एव भवत इति विपरीतावधारणनिषेधार्थः । तेनाकारान्ताद् इच् सि इत्येतावपि सिद्धौ ॥ हसइ । हससि ॥ वेवइ । वेवसि ॥१४५॥

**सिनास्तेः सिः ॥८।३।१४६॥**

सिना द्वितीयत्रिकादेशेन सह अस्तेः सिरादेशो भवति ॥ निट्ठुरो ज सि ॥ सिनेति किम् ? से आदेशे सति अत्थि तुमं ॥१४६॥

**मि-मो-मैर्म्हि-म्हो म्हा वा ॥८।३।१४७॥**

अस्तेर्धातोः स्थाने मि मो म इत्यादेशैः सह यथासङ्ख्यं म्हि म्हो म्ह इत्यादेशा वा भवन्ति ॥ एस म्हि । एषोस्मीत्यर्थः॥ गय म्हो । गय म्ह । मुकारस्याग्रहणादप्रयोग एव तस्येत्यवसीयते । पक्षे अत्थि अहं । अत्थि अम्हे । अत्थि अम्हो ॥ ननु च सिद्धावस्थायां पक्ष्म-श्म-ष्म-स्म ह्मां म्हः (२. ७४) इत्यनेन म्हादेशे म्हो इति सिध्यति । सत्यम् । किं तु विभक्तिविधौ प्रायः साध्यमानावस्थाङ्गीक्रियते अन्यथा वच्छेण । वच्छेसु । सव्वे । जे । ते । के इत्याद्यर्थं सूत्राण्यनारम्भणीयानि स्युः ॥१४७॥

**अत्थिस्त्यादिना ॥८।३।१४८॥**

अस्तेः स्थाने त्यादिभिः सह अत्थि इत्यादेशो भवति ॥ अत्थि सो । अत्थि ते । अत्थि तुमं अत्थि तुम्हे अत्थि अहं । अत्थि अम्हे ॥१४८॥

**णेरदेदावावे ॥८।३।१४९॥**

णेः स्थाने अत् एत् आव आवे एते चत्वार आदेशा भवन्ति ॥ दरिसइ । कारेइ । करावइ । करावेइ । हासेइ । हसावइ । हसावेइ ॥ उवसामेइ । उवसमावइ । उवसमावेइ । बहुलाधिकारात् क्वचिदेन्नास्ति । जाणावेइ ॥ क्वचिद् आवे नास्ति । पाएइ । भावेइ ॥१४९॥

**गुर्वादेरविर्वा ॥८।३।१५०॥**

गुर्वादेर्णेः स्थाने अवि इत्यादेशो वा भवति ॥ शोषितम् । सोसविअं । सोसिअं ॥ तोषितम् । तोसविअं । तोसिअं ॥१५०॥

**भ्रमेराडो वा ॥८।३।१५१॥**

भ्रमेः परस्य णेराड आदेशो वा भवति । भमाडइ । भमाडेइ । पक्षे । भामेइ । भमावइ । भमावेइ ॥१५१॥

**लुगावी क्त-भाव-कर्मसु ॥८।३।१५२॥**

णेः स्थाने लुक् आवि इत्यादेशौ भवतः क्ते भावकर्मविहिते च प्रत्यये परतः ॥ कारिअं । कराविअं ॥ हासिअं । हसाविअं ॥ खामिअं । खमाविअं । भावकर्मणोः । कारीअइ । करावीअइ । कारिज्जइ । कराविज्जइ । हासीअइ । हसावीअइ । हासिज्जइ । हसाविज्जइ ॥१५२॥

**अदेल्लुक्यादेरत आः ॥८।३।१५३॥**

णेरदेल्लोपेषु कृतेषु आदेरकारस्य आ भवति ॥ अति । पाडइ । मारइ ॥ एति । कारेइ । खामेइ ॥ लुकि । कारिअं । खामिअं । कारीअइ । खामीअइ । कारिज्जइ । खामिज्जइ । अदेल्लुकीति किम् ? कराविअं । करावीअइ । कराविज्जइ ॥ आदेरिति किम् ? संगामेइ । इह व्यवहितस्य मा भूत् ॥ करिअ । इहान्त्यस्य मा भूत् ॥ अत इति किम् ? दूसेइ ॥ केचित्तु आवेआव्यादेशयोरप्यादेरत आत्वमिच्छन्ति । कारावेइ । हासाविओ जणो सामलीए ॥१५३॥

**मौ वा ॥८।३।१५४॥**

अत आ इति वर्तते । आदन्ताद्धातोर्मौ परे अत आत्वं वा भवति ॥ हसामि हसमि । जाणामि जाणमि लिहामि लिहमि ॥ अत इत्येव । होमि ॥१५४॥

**इच्च मो-मु-मे वा ॥८।३।१५५॥**

अकारान्ताद्धातोः परेषु मोमुमेषु अत इत्वं चकाराद् आत्वं च वा भवतः ॥ भणिमो भणामो । भणिमु भणामु । भणिम भणाम । पक्षे । भणमो ।

भणमु । भणम ॥ वर्तमाना—पञ्चमी—शतृषु वा [३ १५८] इत्येत्वे तु भणेमो । भणेमु । भणेम ॥ अत इत्येव । ठामो । होमो ॥१५५॥

### क्ते ॥८।३।१५६॥

क्ते परतोऽत इत्वं भवति ॥ हसिअं । पढिअं । नविअं । हासिअ । पाढिअ ॥ गय नयमित्यादि तु सिद्धावस्थापेक्षणात् ॥ अत इत्येव । झायं । लुअ । हूअं ॥१५६॥

### एच्च क्त्वा-तुम्-तव्य-भविष्यत्सु ॥८।३।१५७॥

क्त्वातुम्तव्येषु भविष्यत्कालविहिते च प्रत्यये परतो ऽत एकारश्चकारादिकारश्च भवति ॥ क्त्वा । हसेऊण । हसिऊण ॥ तुम् । हसेउं । हसिउं ॥ तव्य । हसेअव्व । हसिअव्वं ॥ भविष्यत् । हसेहिइ । हसिहिइ ॥ अत इत्येव । काऊण ॥१५७॥

### वर्तमाना-पञ्चमी-शतृषु वा ॥८।३।१५८॥

वर्तमानापञ्चमीशतृषु परत अकारस्य स्थाने एकारो वा भवति ॥ वर्तमाना । हसेइ हसइ । हसेम हसिम । हसेमु हसिमु ॥ पञ्चमी । हसेउ हसउ । सुणेउ सुणउ ॥ शतृ । हसेन्तो हसन्तो ॥ कचिन्न भवति । जयइ ॥ क्वचिदात्वमपि । सुणाउ ॥१५८॥

### ज्जा-ज्जे ॥८।३।१५९॥

ज्जा ज्ज इत्यादेशयोः परयोरकारस्य एकारो भवति ॥ हसेज्जा । हसेज्ज ॥ अत इत्येव । होज्जा । होज्ज ॥१५९॥

### ईअ-इज्जौ क्यस्य ॥८।३।१६०॥

चिजिप्रभृतीनां भावकर्मविधि वक्ष्याम' । येषा तु न वक्ष्यते तेषां संस्कृतातिदेशात्प्राप्तस्य क्यस्य स्थाने ईअ इज्ज इत्येतावादेशौ भवत' ॥ हसीअइ । हसिज्जइ । हसीअन्तो । हसिज्जन्तो । हसीअमाणो। हसिज्जमाणो । पढीअइ । पढिज्जइ । होईअइ । होइज्जइ ॥ बहुलाधिकारात् कचित् क्योपि विकल्पेन भवति । मए नवेज्ज । मए नविज्जेज्ज । तेण लहेज्ज । तेण लहिज्जेज्ज । तेण अच्छेज्ज । तेण अच्छिज्जेज्ज । तेण अच्छीअइ ॥१६०॥

### दृशि-वचेर्डीस-डुच्चं ॥८।३।१६१॥

दृशेर्वचेश्च परस्य क्यस्य स्थाने यथासख्य डीस डुच्च इत्यादेशौ भवतः ॥ ईअइज्जापवादः ॥ दीसइ । वुच्चइ ॥१६१॥

### सी ही हीअ भूतार्थस्य ॥८।३।१६२॥

भूतेर्थे विहितोद्यतन्यादि प्रत्ययो भूतार्थ तस्य स्थाने सी ही हीअ इत्यादेशा भवन्ति ॥ उत्तरत्र व्यञ्जनादीअविधानात् स्वरान्तादेवाय विधिः ॥ कासी। काही । काहीअ । अकार्षीत् । अकरोत् । चकार वेत्यर्थ' । एवं ठासी ठाही । ठाहीअ ॥ आर्षे । देविन्दो इणमब्बवी इत्यादौ सिद्धावस्थाश्रयणात् ह्यस्तन्या. प्रयोगः॥१६२॥

### व्यञ्जनादीअः ॥८।३।१६३॥

व्यञ्जनान्ताद्धातोः परस्य भूतार्थस्याद्यतन्यादिप्रत्ययस्य ईअ इत्यादेशो भवति ॥ हुवीअ । अभूत् । अभवत् । बभूवेत्यर्थ' ॥ एवं अच्छीअ । आसिष्ट। आस्त । आसांचक्रे वा ॥ गेण्हीअ । अग्रहीत् । अगृह्णात् । जग्राह वा ॥१६३॥

### तेनास्तेरास्यहेसी ॥८।३।१६४॥

अस्तेर्धातोस्तेन भूतार्थेन प्रत्ययेन सह आसि अहेसि इत्यादेशौ भवतः ॥ आसि सो तुम अह वा । जे आसि । ये आसन्नित्यर्थ' । एव अहेसि ॥१६४॥

### ज्जात्सप्तम्या इर्वा ॥८।३।१६५॥

सप्तम्यादेशात् ज्जात्पर इर्वा प्रयोक्तव्य' ॥ भवेत् । होज्जइ होज्ज ॥ १६५॥

### भविष्यति हिरादिः ॥८।३।१६६॥

भविष्यदर्थे विहिते प्रत्यये परे तस्यैवादिर्हिः प्रयोक्तव्यः॥ होहिइ भविष्यति भविता वेत्यर्थः ॥ एवं होहिन्ति । होहिसि । होहित्था । हसिहिइ । काहिइ ॥१६६॥

### मि-मो-मु-मे-स्सा-हा न वा ॥८।३।१६७॥

भविष्यत्यर्थे मिमोमुमेषु तृतीयत्रिकादेशेषु परेषु तेषामेवादी स्सा हा इत्येतौ वा प्रयोक्तव्यौ । हेरपवादौ ॥ पक्षे हिरपि ॥ होस्सामि होहामि । होस्सामो होहामो । होस्सामु होहामु । होस्साम होहाम ॥ पक्षे ।। होहिमि । होहिमु । होहिम ॥ क्वचित्तु हा न भवति । हसिस्सामो । हसिहिमो ॥ १६७॥

### मो-मु-मनां हिस्सा हित्था ॥८।३।१६८॥

धातो' परौ भविष्यति काले मोमुमानां स्थाने हिस्सा हित्था इत्येतौ वा प्रयोक्तव्यौ ॥ होहिस्सा । होहित्था । हसिहिस्सा । हसिहित्था । पक्षे । होहिमो । होस्सामो । होहामो । इत्यादि ॥१६८॥

### मेः स्सं ॥८।३।१६९॥

धातो' परो भविष्यति काले म्यादेशस्य स्थाने स्सं वा प्रयोक्तव्य ॥ होस्सं । हसिस्सं । कित्तइस्सं । पक्षे । होहिमि । होस्सामि । होहामि । कित्तइहिमि ॥१६९॥

### कृ-दो हं ॥८।३।१७०॥

करोतेर्ददातेश्च परो भविष्यति विहितस्य म्यादेशस्य स्थाने हं वा प्रयोक्तव्य ॥ काहं । दाहं । करिष्यामि दास्यामीत्यर्थ ॥ पक्षे । काहिमि । दाहिमि । इत्यादि ॥१७०॥

### श्रु-गमि-रुदि-विदि-दृशि-मुचि-वचि-छिदि-भिदि-भुजां सोच्छं गच्छं रोच्छं वेच्छं दच्छं मोच्छं वोच्छं छेच्छं भेच्छं भोच्छं ॥८।३।१७१॥

श्वादीनां धातूना भविष्यद्विहितम्यन्तानां स्थाने सोच्छमित्यादयो निपात्यन्ते ॥ सोच्छं । श्रोष्यामि ॥ गच्छं । गमिष्यामि ॥ संगच्छं । संगंस्ये ॥ रोच्छं । रोदिष्यामि ॥ विद ज्ञाने । वेच्छं । वेदिष्यामि ॥ दच्छं । द्रक्ष्यामि ॥ मोच्छं । मोक्ष्यामि । वोच्छं । वक्ष्यामि ॥ छेच्छं । छेत्स्यामि ॥ भेच्छं । भेत्स्यामि। भोच्छं । भोक्ष्ये ॥१७१॥

### सोच्छादय इजादिषु हिलुक् च वा ।८।३।१७२॥

श्वादीनां स्थाने इजादिषु भविष्यदादादेशेषु यथासख्यं सोच्छादयो भवन्ति । ते एवादेशा अन्त्यस्वराद्यवयववर्जा इत्यर्थ । हिलुक् च वा भवति ॥ सोच्छिइ । पक्षे । सोच्छिहिइ । एव सोच्छिन्ति । सोच्छिहिन्ति । सोच्छिसि । सोच्छिहिसि । सोच्छित्था । सोच्छिहित्था। सोच्छिह । सोच्छिहिह । सोच्छिमि । सोच्छिहिमि । सोच्छिस्सामि । सोच्छिहामि । सोच्छिस्सं । सोच्छं । सोच्छिमो । सोच्छिहिमो । सोच्छिस्सामो । सोच्छिहामो । सोच्छिहिस्सा । सोच्छिहित्था । एव मुमयोरपि ॥ गच्छिइ । गच्छिहिइ । गच्छिन्ति । गच्छिहिन्ति । गच्छिसि । गच्छिहिसि । गच्छित्था । गच्छिहित्था । गच्छिह । गच्छिहिह । गच्छिमि । गच्छिहिमि । गच्छिस्सामि । गच्छिहामि । गच्छिस्सं । गच्छं । गच्छिमो । गच्छिहिमो । गच्छिस्सामो ।

गच्छिहामो । गच्छिहिस्सा । गच्छिहित्था । एवं मुमयोरपि ॥ एवं रुदादीनामप्युदाहार्यम् ॥१७२॥

## दु सु मु विध्यादिष्वेकस्मिंस्त्रयाणाम् ॥८।३।१७३॥

विध्यादिष्वर्थेषूत्पन्नानामेकत्वेऽर्थे वर्तमानानां त्रयाणामपि त्रिकाणां स्थाने यथासंख्यं दु सु मु इत्येते आदेशा भवन्ति ॥ हसउ सा । हससु तुमं । हसामु अहं ॥ पेच्छउ । पेच्छसु । पेच्छामु ॥ दकारोच्चारणं भाषान्तरार्थम् ॥१७३॥

## सोर्हिर्वा ॥८।३।१७४॥

पूर्वसूत्रविहितस्य सोः स्थाने हिरादेशो वा भवति ॥ देहि देसु ॥१७४॥

## अत इज्जस्विज्जहीज्जे-लुको वा ॥८।३।१७५॥

अकारात्परस्य सोः इज्जसु इज्जहि इज्जे इत्येते लुक् च आदेशा वा भवन्ति ॥ हसेज्जसु । हसेज्जहि । हसेज्जे । हस । पक्षे । हससु ॥ अत इति किम् ? होसु । ठाहि ॥१७५॥

## बहुषु न्तु ह मो ॥८।३।१७६॥

विध्यादिषूत्पन्नना बहुष्वर्थेषु वर्तमानानां त्रयाणां त्रिकाणां स्थाने यथासंख्य न्तु ह मो इत्येते आदेशा भवन्ति ॥ न्तु । हसन्तु । हसन्तु हसेयुर्वा ॥ ह । हसह । हसत । हसेत वा ॥ मो । हसामो । हसाम । हसेम वा ॥ एव तुवरन्तु । तुवरह । तुवरामा ॥१७६॥

## वर्तमाना-भविष्यन्त्योश्च ज्ज ज्जा वा ॥८।३।१७७॥

वर्तमानाया भविष्यन्त्याश्च विध्यादिषु च विहितस्य प्रत्ययस्य स्थाने ज्ज ज्जा । इत्येतावादेशौ वा भवतः ॥ पक्षे यथाप्राप्तम् ॥ वर्तमाना । हसेज्ज । हसेज्जा । पढेज्ज । पढेज्जा । सुणेज्ज । सुणेज्जा ॥ पक्षे । हसइ । पढइ । सुणइ ॥ भविष्यन्ती । पढेज्ज । पढेज्जा । पक्षे । पढिहिइ ॥ विध्यादिषु । हसेज्ज । हसिज्जा । हसतु । हसेद्वा इत्यर्थः । पक्षे । हसउ ॥ एवं सर्वत्र । यथा तृतीयत्रये । अइवाएज्जा । अइवायावेज्जा । न समणुजाणामि । न समणुजाणेज्जा वा ॥ अन्ये त्वन्यासामपीच्छन्ति । होज्ज । भवति । भवेत् । भवतु । अभवत् । अभूत् । बभूव । भूयात् । भविता । भविष्यति । अभविष्यद्वेत्यर्थः ॥१७७॥

## मध्ये च स्वरान्ताद्वा ॥८।३।१७८॥

स्वरान्ताद्धातोः प्रकृतिप्रत्यययोर्मध्ये चकारात्प्रत्ययानां च स्थाने ज्ज ज्जा इत्येतौ वा भवतः वर्तमानाभविष्यन्त्योर्विध्यादिषु च ॥ वर्तमाना । होज्जइ । होज्जाइ । होज्ज । होज्जा । पक्षे । होइ ॥ एव होज्जसि । होज्जासि । होज्ज । होज्जा । पक्षे । होहिइ ॥ एव होज्जहिसि । होज्जाहिसि । होज्ज । होज्जा । होहिसि । होज्जहिमि । होज्जाहिमि । होज्जस्सामि । होज्जहामि । होज्जस्स । होज्ज । होज्जा । इत्यादि ॥ विध्यादिषु । होज्जउ । होज्जाउ । होज्ज । होज्जा । भवतु भवेद्वेत्यर्थः । पक्षे ॥ होउ । स्वरान्तादिति किम् ? हसेज्ज । हसेज्जा । तुवरेज्ज । तुवरेज्जा ॥१७८॥

## क्रियातिपत्तेः ॥८।३।१७९॥

क्रियातिपत्तेः स्थाने ज्जज्जावादेशौ भवतः ॥ होज्ज । होज्जा । अभविष्यदित्यर्थः । जइ होज्ज वण्णणिज्जो ॥१७९॥

## न्त-माणौ ॥८।३।१८०॥

क्रियातिपत्तेः स्थाने न्तमाणौ आदेशौ भवत. ॥ होन्तो । होमाणो । अभविष्यदित्यर्थः ॥१८०॥

हरिण-ट्ठाणे हरिणङ्क, जइ सि हरिणाहिवं निवेसन्तो । न सहन्तो च्चिअ तो राहुपरिहवं से जिअन्तस्स ॥

**शत्रानशः ॥८।३।१८१॥**

शतृ आनश् इत्येतयोः प्रत्येकं न्त माण इत्येतावादेशौ भवतः ॥ शतृ । हसन्तो हसमाणो ॥ आनश् । वेवन्तो वेवमाणो ॥१८१॥

**ई च स्त्रियाम् ॥८।३।१८२॥**

स्त्रियां वर्तमानयोः शत्रानशोः स्थाने ई चकारात् न्तमाणौ च भवन्ति ॥ हसई । हसन्ती । हसमाणी । वेवई । वेवन्ती । वेवमाणी ॥१८२॥

**इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनवृत्तौ अष्टमस्याध्यायस्य तृतीयः पादः ॥३॥**

ऊर्ध्वं स्वर्गनिकेतनादपि तले पातालमूलादपि, त्वत्कीर्तिर्भ्रमति क्षितीश्वरमणे ! पारे पयोधेरपि ।
तेनास्याः प्रमदास्वभावसुलभैरुच्चावचैश्चापलै–स्ते वाचंयमवृत्तयोऽपि मुनयो मौनव्रतं त्याजिता ॥१॥

**॥ अर्हं ॥**

**इदितो वा ॥८।४।१॥**

सूत्रे ये इदितो धातवो वक्ष्यन्ते तेषां ये आदेशास्ते विकल्पेन भवन्तीति वेदितव्यम् । तत्रैव चोदाहरिष्यते ॥१॥

**कथेर्वज्जर पज्जरोप्पाल पिसुण संघ-बोल्ल चव जम्प-सीससाहाः ॥८।४।२॥**

कथेर्धातोर्वज्जरादयो दशादेशा वा भवन्ति ॥ वज्जरइ । पज्जरइ । उप्पालइ । पिसुणइ । संघइ । बोल्लइ । चवइ । जम्पइ । सीसइ । साहइ ॥ उब्बुक्कइ इति तूत्पूर्वस्य बुक्क भाषणे इत्यस्य । पक्षे । कहइ ॥ एते चान्यैर्देशीषु पठिता अपि अस्माभिर्धात्वादेशीकृता विविधेषु प्रत्ययेषु प्रतिष्ठन्तामिति ॥ तथा च । वज्जरिओ कथितः । वज्जरिऊण कथयित्वा । वज्जरणं कथनम् । वज्जरन्तो कथयन् । वज्जरिअव्वं कथयितव्यमिति रूपसहस्राणि सिध्यन्ति । संस्कृतधातुवच्च प्रत्ययलोपागमादिविधिः ॥२॥

**दुःखे णिव्वरः ॥८।४।३॥**

दुःखविषयस्य कथेर्णिव्वर इत्यादेशो वा भवति ॥ णिव्वरइ । दुःखं कथयतीत्यर्थः ॥३॥

**जुगुप्सेर्झुण-दुगुच्छ-दुगुञ्छाः ॥८।४।४॥**

जुगुप्सेरेते त्रय आदेशा वा भवन्ति ॥ झुणइ । दुगुच्छइ । दुगुञ्छइ । पक्षे । जुगुच्छइ ॥ गलोपे । दुउच्छइ । दुउञ्छइ । जुउच्छइ ॥४॥

**बुभुक्षि-वीज्योर्णीरव वोज्जौ ॥८।४।५॥**

बुभुक्षेराचारक्विबन्तस्य च वीजेर्यथासंख्यमेतावादेशौ वा भवतः ॥ णीरवइ । बुहुक्खइ । वोज्जइ । वीजइ ॥५॥

**ध्या-गोर्झा गौ ॥८।४।६॥**

अनयोर्यथासंख्यं झा गा इत्यादेशौ भवतः ॥ झाइ । झाअइ । णिज्झाइ । णिज्झाअइ । निपूर्वो दर्शनार्थः । गाइ । गायइ । झाणं । गाणं ॥६॥

**ज्ञो जाण मुणौ ॥८।४।७॥**

जानातेर्जाण मुण इत्यादेशौ भवतः ॥ जाणइ । मुणइ । बहुलाधिकारात्क्वचिद्विकल्पः । जाणिअं । णायं । जाणिऊण । णाऊण । जाणणं । णाणं । मणइ इति तु मन्यते ॥७॥

**उदो ध्मो धुमा ॥८।४।८॥**

उदः परस्य ध्मो धातोर्धुमा इत्यादेशो भवति ॥ उद्धुमाइ ॥८॥

श्रदो धो दहः ॥८।४।९॥

श्रदः परस्य दधातेर्दह इत्यादेशो भवति ॥ सद्दहइ । सद्दहमाणो जीवो ॥९॥

पिबेः पिज्ज डल्ल पट्ट घोट्टाः ॥८।४।१०॥

पिबतेरेते चत्वार आदेशा वा भवन्ति ॥ पिज्जइ । डल्लइ । पट्टइ । घोट्टइ । पिअइ ॥१०॥

उद्वातेरोरुम्मा वसुआ ॥८।४।११॥

उत्पूर्वस्य वातेः ओरुम्मा वसुआ इत्येतावादेशौ वा भवतः ॥ ओरुम्माइ । वसुआइ । उव्वाइ ॥११॥

निद्रातेरोहीरोङ्घौ ॥८।४।१२॥

निपूर्वस्य द्रातेः ओहीर उङ्घ इत्यादेशौ वा भवतः ॥ ओहीरइ । उङ्घइ । निद्दाइ ॥१२॥

आघ्रेराइग्घः ॥८।४।१३॥

आजिघ्रतेराइग्घ इत्यादेशो वा भवति । आइग्घइ । अग्घाइ ॥१३॥

स्नातेरब्भुत्तः ॥८।४।१४॥

स्नातेरब्भुत्त इत्यादेशो वा भवति ॥ अब्भुत्तइ । ण्हाइ ॥१४॥

समः स्त्यः खाः ॥८।४।१५॥

संपूर्वस्य स्त्यायतेः खा इत्यादेशो भवति ॥ संखाइ । संखाय ॥१५॥

स्थष्ठा-थक्क-चिट्ठ-निरप्पाः ॥८।४।१६॥

तिष्ठतेरेते चत्वार आदेशा भवन्ति ॥ ठाइ । ठाअइ । ठाणं । पट्ठिओ । उट्ठिओ । पट्ठाविओ । उट्ठाविओ । थक्कइ । चिट्ठइ । चिट्ठिऊण । निरप्पइ ॥ बहुलाधिकारात्क्वचिन्न भवति । थिअं । थाणं । पत्थिओ । उत्थिओ । थाऊण ॥१६॥

उदष्ठ-कुक्कुरौ ॥८।४।१७॥

उदः परस्य तिष्ठतेः ठ कुक्कुर इत्यादेशौ भवतः ॥ उट्ठइ । उक्कुक्कुरइ ॥१७॥

म्लेर्वा-पव्वायौ ॥८।४।१८॥

म्लायतेर्वा पव्वाय इत्यादेशौ वा भवतः ॥ वाइ । पव्वायइ । मिलाइ ॥१८॥

निर्मो निम्माण-निम्मवौ ॥८।४।१९॥

निर्पूर्वस्य मिमीतेरेतावादेशौ भवतः ॥ निम्माणइ । निम्मवइ ॥१९॥

क्षेर्णिज्झरो वा ॥८।४।२०॥

क्षयतेर्णिज्झर इत्यादेशो वा भवति ॥ णिज्झरइ । पक्षे । झिज्जइ ॥२०॥

छदेर्णेर्णुम-नूम-सन्नुम-ढक्कौम्वाल-पव्वालाः ॥८।४।२१॥

छदेर्ण्यन्तस्य एते षडादेशा वा भवन्ति ॥ णुमइ । नूमइ । णत्वे णूमइ । सन्नुमइ । ढक्कइ । ओम्वालइ । पव्वालइ । छायइ ॥२१॥

निविपत्योर्णिहोडः ॥८।४।२२॥

निवृगः पतेश्च ण्यन्तस्य णिहोड इत्यादेशो वा भवति ॥ णिहोडइ । पक्षे । निवारेइ । पाडेइ ॥२२॥

दूङो दूमः ॥८।४।२३॥

दूङो ण्यन्तस्य दूम इत्यादेशो भवति ॥ दूमेइ मज्झ हिअयं ॥२३॥

धवलेर्दुमः ॥८।४।२४॥

धवलयतेर्ण्यन्तस्य दुमादेशो वा भवति ॥ दुमइ। धवलइ ॥ स्वराणां स्वरा (बहुलम्) [४.२३८] इति दीर्घत्वमपि । दूमिअं । धवलितमित्यर्थः ॥२४॥

तुलेरोहामः ॥८।४।२५॥

तुलेर्ण्यन्तस्य ओहाम इत्यादेशो वा भवति ॥ ओहामइ । तुलइ ॥२५॥

विरिचेरोलुण्डोल्लुण्ड-पल्हत्थाः ॥८।४।२६॥

विरेचयतेर्ण्यन्तस्य ओलुण्डादयस्त्रय आदेशा

वा भवन्ति ॥ ओलुण्डइ । उल्लण्डइ । पल्हत्थइ । विरेअइ ॥२६॥

**तडेराहोड-विहोडौ ॥८।४।२७॥**

तडेर्ण्यन्तस्य एतावादेशौ वा भवतः ॥ आहोडइ । विहोडइ । पक्षे । ताडेइ ॥२७॥

**मिश्रेर्वीसाल-मेलवौ ॥८।४।२८॥**

मिश्रयतेर्ण्यन्तस्य वीसाल मेलव इत्यादेशौ वा भवतः ॥ वीसालइ । मेलवइ । मिस्सइ ॥२८॥

**उद्धूलेर्गुण्ठः ॥८।४।२९॥**

उद्धूलेर्ण्यन्तस्य गुण्ठ इत्यादेशो वा भवति ॥ गुण्ठइ । पक्षे । उद्धूलेइ ॥२९॥

**भ्रमेस्तालिअण्ट-तमाडौ ॥८।४।३०॥**

भ्रमयतेर्ण्यन्तस्य तालिअण्ट तमाड इत्यादेशौ वा भवतः ॥ तालिअण्टइ । तमाडइ । भामेइ । भमाडेइ । भमावेइ ॥३०॥

**नशेर्विउड-नासव-हारव-विप्पगाल-पलावाः ॥८।४।३१॥**

नशेर्ण्यन्तस्य एते पञ्चादेशा वा भवन्ति। विउडइ । नासवइ । हारवइ । विप्पगालइ । पलावइ । पक्षे । नासइ ॥३१॥

**दृशेर्दाव-दंस-दक्खवाः ॥८।४।३२॥**

दृशेर्ण्यन्तस्य एते त्रय आदेशा वा भवन्ति ॥ दावइ । दंसइ । दक्खवइ । दरिसइ ॥३२॥

**उद्घटेरुग्गः ॥८।४।३३॥**

उत्पूर्वस्य घटेर्ण्यन्तस्य उग्ग इत्यादेशो वा भवति ॥ उग्गइ । उग्घाडइ ॥३३॥

**स्पृहः सिहः ॥८।४।३४॥**

स्पृहो ण्यन्तस्य सिह इत्यादेशो वा भवति ॥ सिहइ ॥३४॥

**संभावेरासंघः ॥८।४।३५॥**

सभावयतेरासङ्घ इत्यादेशो भवति ॥ आसङ्घइ । सभावइ ॥३५॥

**उन्नमेरुत्थंघोल्लाल-गुलुगुञ्छोप्पेलाः ॥८।४।३६॥**

उत्पूर्वस्य नमेर्ण्यन्तस्य एते चत्वार आदेशा वा भवन्ति ॥ उत्थङ्घइ । उल्लालइ । गुलुगुञ्छइ । उप्पेलइ । उन्नामइ ॥३६॥

**प्रस्थापेः पट्ठव-पेण्डवौ ॥८।४।३७॥**

प्रपूर्वस्य तिष्ठतेर्ण्यन्तस्य पट्ठव पेण्डव इत्यादेशौ वा भवतः ॥ पट्ठवइ । पेण्डवइ । पट्ठावइ ॥३७॥

**विज्ञपेर्वोक्कावुक्कौ ॥८।४।३८॥**

विपूर्वस्य जानातेर्ण्यन्तस्य वोक्क अवुक्क इत्यादेशौ वा भवतः ॥ वोक्कइ । अवुक्कइ । विण्णवइ ॥३८॥

**अर्पेरल्लिव-चच्चुप्प-पणामाः ॥८।४।३९॥**

अर्पेर्ण्यन्तस्य एते त्रय आदेशा वा भवन्ति ॥ अल्लिवइ चच्चुप्पइ । पणामइ । पक्षे । अप्पेइ ॥३९॥

**यापेर्जवः ॥८।४।४०॥**

यातेर्ण्यन्तस्य जव इत्यादेशो वा भवति ॥ जवइ जावेइ ॥४०॥

**प्लावेरोम्वाल-पव्वालौ ॥८।४।४१॥**

प्लवतेर्ण्यन्तस्य एतावादेशौ वा भवतः ॥ ओम्वालइ । पव्वालइ पावेइ ॥४१॥

**विकोशेः पक्खोडः ॥८।४।४२॥**

विकोशयतेर्नामधातोर्ण्यन्तस्य पक्खोड इत्यादेशो वा भवति । पक्खोडइ । विकोसइ ॥४२॥

**रोमन्थेरोग्गाल-वग्गोलौ ॥८।४।४३॥**

रोमन्थेर्नामधातोर्ण्यन्तस्य एतावादेशौ वा भवत ॥ ओग्गालइ । वग्गोलइ । रोमन्थइ ॥४३॥

### कमेर्णिहुवः ॥८।४।४४॥

कमेः स्वार्थण्यन्तस्य णिहुव इत्यादेशो वा भवति । णिहुवइ । कामेइ ॥४४॥

### प्रकाशेर्णुव्वः ॥८।४।४५॥

प्रकाशेर्ण्यन्तस्य णुव्व इत्यादेशो वा भवति ॥ णुव्वइ । पयासेइ ॥४५॥

### कम्पेर्विच्छोलः ॥८।४।४६॥

कम्पेर्ण्यन्तस्य विच्छोल इत्यादेशो वा भवति ॥ विच्छोलइ । कम्पेइ ॥४६॥

### आरोपेर्वलः ॥८।४।४७॥

आरुहेर्ण्यन्तस्य वल इत्यादेशो वा भवति ॥ वलइ । आरोवेइ ॥४७॥

### दोले रङ्खोलः ॥८।४।४८॥

दुले स्वार्थे ण्यन्तस्य रङ्खोल इत्यादेशो वा भवति ॥ रङ्खोलइ । दोलइ ॥४८॥

### रञ्जे रावः ॥८।४।४९॥

रञ्जेर्ण्यन्तस्य राव इत्यादेशो वा भवति ॥ रावेइ । रञ्जेइ ॥४९॥

### घटेः परिवाडः ॥८।४।५०॥

घटेर्ण्यन्तस्य परिवाड इत्यादेशो वा भवति ॥ परिवाडेइ । घडेइ ॥५०॥

### वेष्टेः परिआलः ॥८।४।५१॥

वेष्टेर्ण्यन्तस्य परिआल इत्यादेशो वा भवति ॥ परिआलेइ । वेढेइ ॥५१॥

### क्रियः किणो वेस्तु क्के च ॥८।४।५२॥

णेरिति निवृत्तम् । क्रीणाते किण इत्यादेशो भवति । वेः परस्य तु द्विरुक्तः केश्चकारात्किणश्च भवति ॥ किणइ । विक्केइ । विक्किणइ ॥५२॥

### भियो भा-बीहौ ॥८।४।५३॥

बिभेतेरेतावादेशौ भवतः ॥ भाइ । भाइअं । बीहइ । बीहिअं ॥ बहुलाधिकाराद् भीओ ॥५३॥

### आलीङोल्ली ॥८।४।५४॥

आलीयतेः अल्ली इत्यादेशो भवति ॥ अल्लियइ । अल्लीणो ॥५४॥

### निलीङेर्णिलीअ-णिलुक्क-णिरिग्घ लुक्क-लिक्क ल्हिक्काः ॥८।४।५५॥

निलीङ एते षडादेशा वा भवन्ति ॥ णिलीअइ । णिलुक्कइ । णिरिग्घइ । लुक्कइ । लिक्कइ । ल्हिक्कइ । निलिज्जइ ॥५५॥

### विलीङेर्विरा ॥८।४।५६॥

विलीङेर्विरा इत्यादेशो वा भवति ॥ विराइ । विलिज्जइ ॥५६॥

### रुते रुञ्ज-रुण्टौ ॥८।४।५७॥

रौतेरेतावादेशौ वा भवतः ॥ रुञ्जइ । रुण्टइ । रवइ ॥५७॥

### श्रुटेर्हणः ॥८।४।५८॥

शृणोतेर्हण इत्यादेशो वा भवति ॥ हणइ । सुणइ ॥५८॥

### धूगेर्धुवः ॥८।४।५९॥

धुनातेर्धुव इत्यादेशो वा भवति ॥ धुवइ । धुणइ ॥६०॥

### भुवेर्हो-हुव-हवाः ॥८।४।६०॥

भुवो धातोर्हो हुव हव इत्येते आदेशा वा भवन्ति ॥ होइ । होन्ति । हुवइ । हुवन्ति । हवइ । हवन्ति ॥ पक्षे । भवइ । परिहीण विहवो । भविउं । पभवइ । परिभवइ । संभवइ ॥ क्वचिदन्यदपि । उब्भुअइ । भत्तं ॥६०॥

अविति हुः ॥८।४।६१॥

विद्वर्जे प्रत्यये भुवो हु इत्यादेशो वा भवति ॥ हुन्ति । भवन् । हुन्तो । अवितीति किम् ? होइ ॥६१॥

पृथक्-स्पष्टे णिव्वडः ॥८।४।६२॥

पृथक्भूते स्पष्टे च कर्तरि भुवो णिव्वड इत्यादेशो भवति । णिव्वडइ । पृथक् स्पष्टो वा भवतीत्यर्थः ॥६२॥

प्रभौ हुप्पो वा ॥८।४।६३॥

प्रभुकर्तृकस्य भुवो हुप्प इत्यादेशो वा भवति ॥ प्रभुत्वं च प्रपूर्वस्यैवार्थः । अङ्गे च्चिअ न पहुप्पइ । पक्षे । पभवेइ ॥६३॥

क्ते हूः ॥८।४।६४॥

भुवः क्तप्रत्यये हूरादेशो भवति ॥ हूअं । अणुहूअं । पहूअं ॥६४॥

कृगेः कुणः ॥८।४।६५॥

कृगः कुण इत्यादेशो भवति ॥ कुणइ । करइ ॥६५॥

काणेक्षिते णिआरः ॥८।४।६६॥

काणेक्षितविषयस्य कृगो णिआर इत्यादेशो वा भवति ॥ णिआरइ । काणेक्षितं करोति ॥६६॥

निष्टम्भावष्टम्भे णिट्ठुह-संदाणं ॥८।४।६७॥

निष्टम्भविषयस्यावष्टम्भविषयस्य च कृगो यथासङ्ख्यं णिट्ठुह सदाण इत्यादेशौ वा भवतः ॥ णिट्ठुहइ । निष्टम्भं करोति ॥ सदाणइ । अवष्टम्भं करोति ॥६७॥

श्रमे वावम्फः ॥८।४।६८॥

श्रमविषयस्य कृगो वावम्फ इत्यादेशो वा भवति ॥ वावम्फइ । श्रमं करोति ॥६८॥

मन्युनौष्ठमालिन्ये णिव्वोलः ॥८।४।६९॥

मन्युना करणेन यदोष्ठमालिन्यं तद्विषयस्य कृगो णिव्वोल इत्यादेशो वा भवति ॥ णिव्वोलइ । मन्युना ओष्ठं मलिनं करोति ॥६९॥

शैथिल्य-लम्बने पयल्लः ॥८।४।७०॥

शैथिल्यविषयस्य च कृगः पयल्ल इत्यादेशो वा भवति ॥ पयल्लइ । शिथिलीभवति लम्बते वा ॥७०॥

निष्पाताच्छोटे णीलुञ्छः ॥८।४।७१॥

निष्पतनविषयस्य आच्छोटनविषयस्य च कृगो णीलुञ्छ इत्यादेशो भवति वा ॥ णीलुञ्छइ । निष्पतति । आच्छोटयति वा ॥७१॥

क्षुरे कम्मः ॥८।४।७२॥

क्षुरविषयस्य कृगः कम्म इत्यादेशो वा भवति ॥ कम्मइ । क्षुरं करोतीत्यर्थः ॥७२॥

चाटौ गुललः ॥८।४।७३॥

चाटुविषयस्य कृगो गुलल इत्यादेशो वा भवति ॥ गुललइ । चाटु करोतीत्यर्थः ॥७३॥

स्मरेर्झर-झूर-भर-भल-लढ-विम्हर-सुमर-पयर-पम्हुहाः ॥८।४।७४॥

स्मरेरेते नवादेशा वा भवन्ति ॥ झरइ । झूरइ । भरइ । भलइ । लढइ । विम्हरइ । सुमरइ । पम्हुहइ । सरइ ॥७४॥

विस्मुः पम्हुस-विम्हर-वीसराः ॥८।४।७५॥

विस्मरतेरेते आदेशा भवन्ति ॥ पम्हुसइ । विम्हरइ । वीसरइ ॥७५॥

व्याहगेः कोक्क-पोक्कौ ॥८।४।७६॥

व्याहरतेरेतावादेशौ वा भवतः ॥ कोक्कइ । ह्रस्वत्वे तु कुक्कइ । पोक्कइ । पक्षे । वाहरइ ॥७६॥

**प्रसरेः पयल्लोवेल्लौ ॥८।४।७७॥**

प्रसरतेः पयल्ल उवेल्ल इत्येतावादेशौ वा भवतः ॥ पयल्लइ । उवेल्लइ । पसरइ ॥७७॥

**महमहो गन्धे ॥८।४।७८॥**

प्रसरतेर्गन्धविषये महमह इत्यादेशो वा भवति ॥ महमहइ मालई । मालई गन्धो पसरइ ॥ गन्ध इति किम् ? पसरइ ॥७८॥

**निस्सरेर्णीहर-नील-धाड वरहाडाः ॥८।४।७९॥**

निस्सरतेरेते चत्वार आदेशा वा भवन्ति । णीहरइ । नीलइ । धाडइ । वरहाडइ । नीसरइ ॥७९॥

**जाग्रेर्जग्गः ॥८।४।८०॥**

जागर्तेर्जग्ग इत्यादेशो वा भवति ॥ जग्गइ । पक्षे । जागरइ ॥८०॥

**व्याप्रेराअड्डः ॥८।४।८१॥**

व्याप्रियतेराअड्ड इत्यादेशो वा भवति ॥ आअड्डेइ । वावरेइ ॥८१॥

**संवृगेः साहर-साहट्टौ ॥८।४।८२॥**

सवृणोते' साहर साहट्ट इत्यादेशौ वा भवतः ॥ साहरइ । साहट्टइ । संवरइ ॥८२॥

**आदृङेः सन्नामः ॥८।४।८३॥**

आद्रियतेः सन्नाम इत्यादेशो वा भवति ॥ सन्नामइ । आदरइ ॥८३॥

**प्रहृगेः सारः ॥८।४।८४॥**

प्रहरतेः सार इत्यादेशो वा भवति ॥ सारइ । पहरइ ॥८४॥

**अवतरेरोह ओरसौ ॥८।४।८५॥**

अवतरते' ओह ओरस इत्यादेशौ वा भवतः ॥ ओहइ । ओरसइ । ओअरइ ॥८५॥

**शकेश्चय-तर-तीर-पाराः ॥८।४।८६॥**

शक्नोतेरेते चत्वार आदेशा वा भवन्ति ॥ चयइ । तरइ । तीरइ । पारइ । सक्कइ ॥ त्यजतेरपि चयइ । हानिं करोति ॥ तरतेरपि तरइ ॥ तीरयतेरपि तीरइ ॥ पारयतेरपि पारेइ । कर्म समाप्नोति ॥८६॥

**फक्कस्थक्कः ॥८।४।८७॥**

फक्कतेस्थक्क इत्यादेशो भवति ॥ थक्कइ ॥८७॥

**श्लाघः सलहः ॥८।४।८८॥**

श्लाघते' सलह इत्यादेशो भवति ॥ सलहइ ॥

**खचेर्वेअडः ॥८।४।८९॥**

खचतेर्वेअड इत्यादेशो वा भवति ॥ वेअडइ । खचइ ॥८९॥

**पचेः सोल्ल-पउलौ ॥८।४।९०॥**

पचतेः सोल्ल पउल इत्यादेशौ वा भवत ॥ सोल्लइ । पउलइ । पयइ ॥९०॥

**मुचेरुछड्डावहेड-मेल्लोस्सिक्क-रेअव-णिल्लुञ्छ-धंसाडाः ॥८।४।९१॥**

मुञ्चतेरेते सप्तादेशा वा भवन्ति ॥ छड्डइ । अवहेडइ । मेल्लइ । उस्सिक्कइ । रेअवइ । णिल्लुञ्छइ । धंसाडइ । पक्षे । मुअइ ॥

**दुःखे णिव्वलः ॥८।४।९२॥**

दुःखविषयस्य मुचेः णिव्वल इत्यादेशो वा भवति ॥ णिव्वलेइ । दु'खं मुञ्चतीत्यर्थः ॥९२॥

**वञ्चेर्वेहव-वेलव-जूरवोमच्छाः ॥८।४।९३॥**

वञ्चतेरेते चत्वार आदेशा वा भवन्ति ॥ वेहवइ । वेलवइ । जूरवइ । उमच्छइ । वञ्चइ ॥९३॥

**रचेरुग्गहावह-विडविड्डाः ॥८।४।९४॥**

रचेर्धातोरेते त्रय आदेशा वा भवन्ति ॥ उग्गहइ । अवहइ । विडविड्डइ । रयइ ॥९४॥

**समारचेरुवहत्थ-सारव-समार-केलायाः ॥८।४।९५॥**

समारचेरेते चत्वार आदेशा वा भवन्ति ॥ उवहत्थइ । सारवइ । समारइ । केलायइ । समारयइ ॥९५॥

**सिचेः सिञ्च-सिम्पौ ॥८।४।९६॥**

सिञ्चतेरेतावादेशौ वा भवत. ॥ सिञ्चइ । सिम्पइ । सेअइ ॥९६॥

**प्रच्छः पुच्छः ॥८।४।९७॥**

पृच्छेः पुच्छादेशो भवति ॥ पुच्छइ ॥९७॥

**गर्जेर्बुक्कः ॥८।४।९८॥**

गर्जतेर्बुक्क इत्यादेशो वा भवति ॥ बुक्कइ । गज्जइ ॥९८॥

**वृषे ढिक्कः ॥८।४।९९॥**

वृषकर्तृकस्य गर्जेर्ढिक्क इत्यादेशो वा भवति ॥ ढिक्कइ । वृषभो गर्जति ॥९९॥

**राजेरग्घ-छज्ज-सह-रीर-रेहाः ॥८।४।१००॥**

राजेरेते पञ्चादेशा वा भवन्ति ॥ अग्घइ । छज्जइ । सहइ । रीरइ । रेहइ । रायइ ॥१००॥

**मस्जेराउड्ड-णिउड्ड-बुड्ड-खुप्पाः ॥८।४।१०१॥**

मज्जतेरेते चत्वार आदेशा वा भवन्ति ॥ आउड्डइ । णिउड्डइ । बुड्डइ । खुप्पइ । मज्जइ ॥१०१॥

**पुञ्जेरारोल-वमालौ ॥८।४।१०२॥**

पुञ्जेरेतावादेशौ वा भवत· ॥ आरोलइ । वमालइ । पुञ्जइ ॥१०२॥

**लस्जेर्जीहः ॥८।४।१०३॥**

लज्जतेर्जीह इत्यादेशो वा भवति ॥ जीहइ । लज्जइ ॥१०३॥

**तिजेरोसुक्कः ॥८।४।१०४॥**

तिजेरोसुक्क इत्यादेशो वा भवति ॥ ओसुक्कइ । तेअणं ॥१०४॥

**मृजेरुग्घुस-लुञ्छ-पुञ्छ-पुंस-फुस-पुस-लुह-हुल-रोसाणाः ॥८।४।१०५॥**

मृजेरेते नवादेशा वा भवन्ति ॥ उग्घुसइ । लुञ्छइ । पुञ्छइ । पुंसइ । फुसइ । पुसइ । लुहइ । हुलइ । रोसाणइ । पक्षे । मज्जइ ॥१०५॥

**भञ्जेर्वेमय-मुसुमूर-मूर-सूर-सूड-विर-पविरञ्ज-करञ्ज-नीरञ्जाः ॥८।४।१०६॥**

भञ्जेरेते नवादेशा वा भवन्ति ॥ वेमयइ । मुसुमूरइ । मूरइ । सूरइ । सूडइ । विरइ । पविरञ्जइ । करञ्जइ । नीरञ्जइ । भञ्जइ ॥१०६॥

**अनुव्रजेः पडिअग्गः ॥८।४।१०७॥**

अनुव्रजे· पडिअग्ग इत्यादेशो वा भवति । पडिअग्गइ । अणुवच्चइ ॥१०७॥

**अर्जेर्विढवः ॥८।४।१०८॥**

अर्जेर्विढव इत्यादेशो वा भवति ॥ विढवइ । अज्जइ ॥१०८॥

**युजो जुञ्ज-जुज्ज-जुप्पाः ॥८।४।१०९॥**

युजो जुञ्ज जुज्ज जुप्प इत्यादेशा भवन्ति ॥ जुञ्जइ । जुज्जइ । जुप्पइ ॥१०९॥

**भुजो भुञ्ज-जिम-जेम-कम्माण्ह-चमढ-समाण-चड्डाः ॥८।४।११०॥**

भुज एते ऽष्टादेशा भवन्ति ॥ भुञ्जइ । जिमइ । जेमइ । कम्मेइ । अण्हइ । समाणइ । चमढइ । चड्डइ ॥११०॥

**वोपेन कम्मवः ॥८।४।१११॥**

उपेन युक्तस्य भुजेः कम्मव इत्यादेशो वा भवति ॥ कम्मवइ । उवहुञ्जइ ॥ १११ ॥

घटेर्गढः ॥८।४।११२॥

घटतेर्गढ इत्यादेशो वा भवति ॥ गढइ । घडइ ॥११२॥

समो गलः ॥८।४।११३॥

सम्पूर्वस्य घटतेर्गल इत्यादेशो वा भवति ॥ संगलइ । संघडइ ॥११३॥

हासेन स्फुटेर्मुरः ॥८।४।११४॥

हासेन करणेन यः स्फुटिस्तस्य मुरादेशो वा भवति ॥ मुरइ । हासेन स्फुटति ॥११४॥

मण्डेश्चिञ्च-चिञ्चअ-चिञ्चिल्ल-रीड-टिविडिक्काः ॥८।४।११५॥

मण्डेरेते पञ्चादेशा वा भवन्ति ॥ चिञ्चइ । चिञ्चअइ । चिञ्चिल्लइ । रीडइ । टिविडिक्कइ । मण्डइ ॥११५॥

तुडेस्तोड-तुट्ट-खुट्ट-खुडोक्खुडोल्लुक्क-णिलुक्क-लुक्कोल्लूराः ॥८।४।११६॥

तुडेरेते नवादेशा वा भवन्ति ॥ तोडइ । तुट्टइ । खुट्टइ । खुडइ । उक्खुडइ । उल्लुक्कइ । णिलुक्कइ । लुक्कइ । उल्लूरइ । तुडइ ॥११६॥

घूर्णो घुल-घोल-घुम्म-पहल्लाः ॥८।४।११७॥

घूर्णेरेते चत्वार आदेशा भवन्ति ॥ घुलइ घोलइ । घुम्मइ । पहल्लइ ॥११७॥

विवृतेर्ढंसः ॥८।४।११८॥

विवृतेर्ढंस इत्यादेशो वा भवति ॥ ढंसइ । विवट्टइ ॥११८॥

क्वथेरट्टः ॥८।४।११९॥

क्वथेरट्ट इत्यादेशो वा भवति ॥ अट्टइ । कढइ ॥११९॥

ग्रन्थो गण्ठः ॥८।४।१२०॥

ग्रन्थेर्गण्ठ इत्यादेशो भवति ॥ गण्ठइ । गण्ठी ॥१२०॥

मन्थेर्घुसल-विरोलौ ॥८।४।१२१॥

मन्थेर्घुसल विरोल इत्यादेशौ वा भवतः ॥ घुसलइ । विरोलइ । मन्थइ ॥१२१॥

ह्लादेरवअच्छः ॥८।४।१२२॥

ह्लादतेर्ण्यन्तस्याण्यन्तस्य च अवअच्छ इत्यादेशो भवति ॥ अवअच्छइ । ह्लादते । ह्लादयति वा ॥ इकारो ण्यन्तस्यापि परिग्रहार्थः ॥१२२॥

नेः सदो मज्जः ॥८।४।१२३॥

निपूर्वस्य सदो मज्ज इत्यादेशो भवति ॥ अत्ता एत्थ णुमज्जइ ॥१२३॥

छिदेर्दुहाव-णिच्छल्ल-णिज्झोड-णिव्वर-णिल्लूर-लूराः ॥८।४।१२४॥

छिदेरेते षडादेशा वा भवन्ति ॥ दुहावइ । णिच्छल्लइ । णिज्झोडइ । णिव्वरइ । णिल्लूरइ । लूरइ । पक्षे । छिन्दइ ॥१२४॥

आङा ओअन्दोद्दालौ ॥८।४।१२५॥

आङा युक्तस्य छिदेरोअन्द उद्दाल इत्यादेशौ वा भवतः । ओअन्दइ । उद्दालइ । अच्छिन्दइ ॥१२५॥

मृदो मल-मढ-परिहट्ट-खड्ड-चड्ड-मड्ड-पन्नाडाः ॥८।४।१२६॥

मृद्नातेरेते सप्तादेशा भवन्ति ॥ मलइ । मढइ । परिहट्टइ । खड्डइ । चड्डइ । मड्डइ । पन्नाडइ ॥१२६॥

स्पन्देश्चुलुचुलः ॥८।४।१२७॥

स्पन्देश्चुलुचुल इत्यादेशो वा भवति ॥ चुलुचुलइ । फन्दइ ॥१२७॥

**निरः पदेर्वलः ॥८।४।१२८॥**

निर्पूर्वस्य पदेर्वल इत्यादेशो वा भवति ॥ निव्वलइ । निप्पज्जइ ॥१२८॥

**विसंवदेर्विअट्ट-विलोट्ट-फंसाः ॥८।४।१२९॥**

विसंपूर्वस्य वदेरेते त्रय आदेशा वा भवन्ति ॥ विअट्टइ । विलोट्टइ । फंसइ । विसंवयइ ॥१२९॥

**शदो झड-पक्खोडौ ॥८।४।१३०॥**

शीयतेरेतावादेशो वा भवतः ॥ झडइ । पक्खोडइ ॥१३०॥

**आक्रन्देर्णीहरः ॥८।४।१३१॥**

आक्रन्देर्णीहर इत्यादेशो वा भवति ॥ णीहरइ । अक्कन्दइ ॥१३१॥

**खिदेर्जूर-विसूरौ ॥८।४।१३२॥**

खिदेरेतावादेशौ भवतः ॥ जूरइ । विसूरई । खिज्जइ ॥१३२॥

**रुधेरुत्थङ्घः ॥८।४।१३३॥**

रुधेरुत्थङ्घ इत्यादेशो वा भवति ॥ उत्थङ्घइ । रुन्धइ ॥ ३३॥

**निषेधेर्हक्कः ॥८।४।१३४॥**

निषेधतेर्हक्क इत्यादेशो वा भवति ॥हक्कइ । निसेहइ ॥१३४॥

**क्रुधेर्जूरः ॥८।४॥१३५॥**

क्रुधेर्जूर इत्यादेशो भवति ॥ जूरइ । कुज्झई ॥१३५॥

**जनो जा-जंमौ ॥८।४।१३६॥**

जायतेर्जा जम्म इत्यादेशौ भवतः ॥ जाअइ । जम्मइ ॥१३५॥

**तनेस्तड-तड्ड-तड्डव-विरल्लाः ॥८।४।१३७॥**

तनेरेते चत्वार आदेशा वा भवन्ति ॥ तडइ। तड्डइ । तड्डवइ । विरल्लइ । तणइ ॥१३७॥

**तृपस्थिप्पः ॥८॥४।१३८॥**

तृप्यतेस्थिप्प इत्यादेशो भवति ॥ थिप्पइ ॥१३८॥

**उपसर्पेरल्लिअः ॥८।४।१३९॥**

उपपूर्वस्य सृपेः कृतगुणस्य अल्लिअ इत्यादेशो वा भवति ॥ अल्लिअइ । उवसप्पइ ॥१३९॥

**संतपेर्झङ्खः ॥८।४।१४०॥**

संतपेर्झङ्ख इत्यादेशो वा भवति ॥ झङ्खइ । पक्षे । सतप्पइ ॥१४०॥

**व्यापेरोअग्गः ॥८।४।१४१॥**

व्याप्नोतेः ओअग्ग इत्यादेशो वा भवति ॥ ओअग्गइ । वावेइ ॥१४१॥

**समापेः समाणः ॥८।४।१४२॥**

समाप्नोतेः समाण इत्यादेशो वा भवति ॥ समाणइ । समावेइ ॥१४२॥

**क्षिपेर्गलत्थाड्डक्ख-सोल्ल-पेल्ल-णोल्ल छुह-हुल-परी घत्ताः ॥८।४।१४३॥**

क्षिपेरेते नवादेशा वा भवन्ति ॥ गलत्थइ । अड्डक्खइ । सोल्लइ । पेल्लइ । णोल्लइ । ह्रस्वत्वे तु णुल्लइ । छुहइ । हुलइ । परीइ । घत्तइ खिवइ ॥१४३॥

**उत्क्षिपेर्गुलगुञ्छोत्थंघाल्लत्थोब्भुत्तोस्सिक्क-हक्खुवाः ॥८।४॥१४४॥**

उत्पूर्वस्य क्षिपेरेते षडादेशा वा भवन्ति ॥ गुलगुञ्छइ । उत्थङ्घइ । अल्लत्थइ । उब्भुत्तइ । उस्सिक्कइ । हक्खुवइ । उक्खिवइ ॥१४४॥

**आक्षिपेर्णीरवः ॥८।४।१४५॥**

आङ्पूर्वस्य क्षिपेर्णीरव इत्यादेशो वा भवति ॥ णीरवइ । अक्खिवइ ॥१४५॥

**स्वपेः कमवस-लिस-लोट्टाः ॥८।४।१४६॥**

स्वपेरेते त्रय आदेशा वा भवन्ति ॥ कमवसइ । लिसइ । लोट्टइ । सुअइ ॥१४६॥

**वेपेरायम्बायज्झौ ॥८।४।१४७॥**

वेपेरायम्ब आयज्झ इत्यादेशौ वा भवतः ॥ आयम्बइ । आयज्झइ ॥ वेवइ ॥१४७॥

**विलपेर्झङ्ख-वडवडौ ॥८।४।१४८॥**

विलपेर्झङ्ख वडवड इत्यादेशौ वा भवतः ॥ झङ्खइ । वडवडइ । विलवइ ॥१४८॥

**लिपो लिम्पः ॥८।४।१४९॥**

लिम्पतेर्लिम्प इत्यादेशो वा भवति ॥ लिम्पइ ॥१४९॥

**गुप्येर्विर-णडौ ॥८।४।१५०॥**

गुप्यतेरेतावादेशौ वा भवतः ॥ विरइ । णडइ । पक्षे । गुप्पइ ॥१५०॥

**क्रपोवहो णिः ॥८।४।१५१॥**

क्रपेः अवह इत्यादेशो ण्यन्तो भवति ॥ अवहावेइ । कृपां करोतीत्यर्थः ॥१५१॥

**प्रदीपेस्तेअव-सन्दुम-सन्धुक्काब्भुत्ताः ॥८।४।१५२॥**

प्रदीप्यतेरेते चत्वार आदेशा वा भवन्ति ॥ तेअवइ । सन्दुमइ । सन्धुक्कइ । अब्भुत्तइ । पलीवइ ॥१५२॥

**लुभेः संभावः ॥८।४।१५३॥**

लुभ्यते सभाव इत्यादेशो वा भवति ॥ सभावइ । लुब्भइ ॥१५३॥

**क्षुभेः खउर-पड्डुहौ ॥८।४।१५४॥**

क्षुभेः खउर पड्डुह इत्यादेशौ वा भवतः ॥ खउरइ । पड्डुहइ । खुब्भइ ॥१५४॥

**आङो रभे रम्भ-ढवौ ॥८।४।१५५॥**

आङः परस्य रभे रम्भ-ढव इत्यादेशौ वा भवतः ॥ आरम्भइ । आढवइ । आरभइ ॥१५५॥

**उपालम्भेर्झङ्ख-पच्चार-वेलवाः ॥८।४।१५६॥**

उपालम्भेरेते त्रय आदेशा वा भवन्ति ॥ झङ्खइ । पच्चारइ । वेलवइ । उवालम्भइ ॥१५६॥

**अवेर्जृम्भो जम्भा ॥८।४।१५७॥**

जृम्भेर्जम्भा इत्यादेशो भवति वेस्तु न भवति ॥ जम्भाइ । जम्भाअइ ॥ अवेरिति किम् ? केलि-पसरो विअम्भइ ॥१५७॥

**भाराक्रान्ते नमेर्णिसुढः ॥८।४।१५८॥**

भाराक्रान्ते कर्तरि नमेर्णिसुढ इत्यादेशो भवति ॥ णिसुढइ । पक्षे । णवइ । भाराक्रान्तो नमतीत्यर्थः ॥ ॥१५८॥

**विश्रमेर्णिव्वा ॥८।४।१५९॥**

विश्राम्यतेर्णिव्वा इत्यादेशो वा भवति ॥ णिव्वाइ । वीसमइ ॥१५९॥

**आक्रमेरोहावोत्थारच्छुन्दाः ॥८।४।१६०॥**

आक्रमतेरेते त्रय आदेशा वा भवन्ति ॥ ओहावइ । उत्थारइ । छुन्दइ । अक्कमइ ॥१६०॥

**भ्रमेष्टिरिटिल्ल-ढुण्ढुल्ल-ढण्ढल्ल-चक्कम्म-भम्मड भमड-भमाड-तलअण्ट-झण्ट-झम्प-भुम-गुम-फुम-फुस-ढुम-ढुस-परी-पराः ॥८।४।१६१॥**

भ्रमेरेतेष्टादशादेशा वा भवन्ति ॥ टिरिटिल्लइ । ढुण्ढुल्लइ । ढण्ढल्लइ । चक्कम्मइ । भम्मडइ । भमडइ । भमाडइ । तलअण्टइ । झण्टइ । झम्पइ । भुमइ । गुमइ । फुमइ । फुसइ । ढुमइ । ढुसइ । परीइ । परइ । भमइ ॥१६१॥

गमेरई-अइच्छाणुवज्जावज्जसोवकुसावकुस-पच्चड्ड-पच्छन्द-णिम्मह-णी-णीण-णीलुक्क-पदअ-रम्भ-परिअल्ल-वोल-परिअल-णिरिणास-णिवहाव-सेहावहराः ॥ ८ । ४ । १६२ ॥

गमेरेते एकविंशतिरादेशा वा भवन्ति । अईइ । अइच्छइ । अणुवज्जइ । अवज्जसइ । उक्कुसइ । अक्कुसइ । पच्चड्डइ । पच्छन्दइ । णिम्महइ । णीइ । णीणइ । णीलुक्कइ । पदअइ । रम्भइ । परिअल्लइ । वोलइ । परिअलइ । णिरिणासइ । णिवहइ । अवसेहइ । अवहरइ । । पक्षे गच्छइ ॥ हम्मइ । णिहम्मइ । णीहम्मइ । आहम्मइ । पहम्मइ इत्येते तु हम्म गतावित्यस्यैव भविष्यन्ति ॥१६२॥

आङा अहिपच्चुअः ॥ ८ । ४ । १६३ ॥

आङा सहितस्य गमेः अहिपच्चुअ इत्यादेशो वा भवति । अहिपच्चुअइ । पक्षे । आगच्छइ ॥ ॥ १६३ ॥

समा अब्भिडः ॥ ८ । ४ । १६४ ॥

समा युक्तस्य गमेः अब्भिड इत्यादेशो वा भवति ॥ अब्भिडइ । संगच्छइ ॥ १६४ ॥

अभ्याङोम्मत्थः ॥ ८ । ४ । १६५ ॥

अभ्याङ्भ्यां युक्तस्य गमेः उम्मत्थ इत्यादेशो वा भवति ॥ उम्मत्थइ । अब्भागच्छइ । अभिमुखमागच्छतीत्यर्थः ॥ १६५ ॥

प्रत्याङा पलोट्टः ॥८।४।१६६॥

प्रत्याङ्भ्यां युक्तस्य गमेः पलोट्ट इत्यादेशो वा भवति ॥ पलोट्टइ । पच्चागच्छइ ॥ १६६ ॥

शमेः पडिसा-परिसामौ ॥ ८ । ४ ।१६७॥

शमेरेतावादेशौ वा भवतः ॥ पडिसाइ । परिसामइ । समइ ॥ १६७ ॥

रमेः संखुड्ड-खेड्डोब्भाव-किलिकिञ्च-कोट्टुम-मोट्टाय-णीसर-वेल्लाः ॥ ८ । ४ । १६८ ॥

रमतेरेतेऽष्टादेशा वा भवन्ति ॥ संखुड्डइ । खेड्डइ । उब्भावइ । किलिकिञ्चइ । कोट्टुमइ । मोट्टायइ । णीसरइ । वेल्लइ । रमइ ॥ १६८ ॥

पूरेरग्घाडाग्घवोद्धुमाङ्गुमाहिरेमाः ॥८।४।१६९॥

पूरेरेते पञ्चादेशा वा भवन्ति ॥ अग्घाडइ ॥ अग्घवइ । उद्धुमाइ । अङ्गुमइ । अहिरेमइ । पूरइ ॥१६९॥

त्वरस्तुवर-जअडौ ॥८।४।१७०॥

त्वरतेरेतावादेशौ भवतः ॥ तुवरइ ॥ जअडइ । तुवरन्तो । जअडन्तो ॥१७०॥

त्यादिशत्रोस्तूरः ॥८।४।१७१॥

त्वरतेस्त्यादौ शतरि च तूर इत्यादेशो भवति ॥ तूरइ । तूरन्तो ॥१७१॥

तुरोत्यादौ ॥८।४।१७२॥

त्वरोत्यादौ तुर आदेशो भवति ॥ तुरिओ । तुरन्तो ॥१७२॥

क्षरः खिर-झर-पज्झर पच्चड-णिच्चल-णिट्टुआः ॥८।४।१७३॥

क्षरेरेते षड् आदेशा भवन्ति ॥ खिरइ । झरइ । पज्झरइ । पच्चडइ । णिच्चलइ । णिट्टुअइ ॥१७३॥

उच्छल उत्थल्लः ॥८।४।१७४॥

उच्छलतेरुत्थल्ल इत्यादेशो भवति । उत्थल्लइ ॥१७४॥

विगलेस्थिप्प-णिट्टुहा ॥८।४।१७५॥

विगलतेरेतावादेशौ वा भवतः । थिप्पइ । णिट्टुहइ । विगलइ ॥१७५॥

**दलि-वल्योर्विसट्ट-वम्फौ ॥८।४।१७६॥**

दलेर्वलेश्च यथासंख्यं विसट्ट वम्फ इत्यादेशौ वा भवतः॥ विसट्टइ। वम्फइ। पक्षे दलइ। वलइ॥१७६॥

**भ्रंशेः फिड-फिट्ट-फुड-फुट्ट-चुक्क-भुल्लाः ॥८।४।१७७॥**

भ्रंशेरेते षडादेशा वा भवन्ति॥ फिडइ। फिट्टइ। फुडइ। फुट्टइ। चुक्कइ। भुल्लइ। पक्षे। भंसइ॥१७७॥

**नशेर्णिरणास-णिवहावसेह-पडिसा-सेहावहराः ॥८।४।१७८॥**

नशेरेते षडादेशा वा भवन्ति॥ णिरणासइ। णिवहइ। अवसेहइ। पडिसाइ। सेहइ। अवहरइ। पक्षे। नस्सइ॥१७८॥

**अवात्काशो वासः ॥८।४।१७९॥**

अवात्परस्य काशो वास इत्यादेशो भवति॥ ओवासइ॥१७९॥

**संदिशेरप्पाहः ॥८।४।१८०॥**

संदिशतेरप्पाह इत्यादेशो वा भवति। अप्पाहइ। सदिसइ॥१८०॥

**दृशो निअच्छ-पेच्छावयच्छावयज्झ-वज्ज-सव्वव-देक्खौअक्खा-वक्खावअक्ख-पुलोअ-पुलअ-निआवआस-पासाः ॥८।४।१८१॥**

दृशेरेते पञ्चदशादेशा भवन्ति॥ निअच्छइ। पेच्छइ। अवयच्छइ। अवयज्झइ। वज्जइ। सव्ववइ। देक्खइ। ओअक्खइ। अवक्खइ। अवअक्खइ। पुलोएइ। पुलएइ। निअइ। अवआसइ। पासइ॥ निज्झाअइ इति तु निध्यायते' स्वरादत्यन्ते भविष्यति॥१८१॥

**स्पृशः फास-फंस फरिस-छिव-छिहालुङ्खालिहाः ॥८।४।१८२॥**

स्पृशतेरेते सप्त आदेशा भवन्ति॥ फासइ। फंसइ। फरिसइ। छिवइ। छिहइ। आलुङ्खइ। आलिहइ॥१८२॥

**प्रविशे रिअः ॥८।४।१८३॥**

प्रविशेः रिअ इत्यादेशो वा भवति॥ रिअइ। पविसइ॥१८३॥

**प्रान्मृश-मुषोर्म्हुसः ॥८।४।१८४॥**

प्रात्परयोर्मृशतिमुष्णात्योर्म्हुस इत्यादेशो भवति॥ पम्हुसइ। प्रमृशति। प्रमुष्णाति वा॥१८४॥

**पिषेर्णिवह-णिरिणास-णिरिणज्ज-रोश्च-चड्डाः ॥८।४।१८५॥**

पिषेरते पञ्चादेशा भवन्ति वा। णिवहइ। णिरिणासइ। णिरिणज्जइ। रोञ्चइ। चड्डइ। पक्षे पीसइ॥१८५॥

**भषेर्भुक्कः ॥८।४।१८६॥**

भषेर्भुक्क इत्यादेशो वा भवति। भुक्कइ। भसइ॥१८६॥

**कृषेः कड्ढ–साअड्ढाञ्चाणच्छायञ्छा इञ्छाः ॥८।४।१८७॥**

कृषेरेते षडादेशा वा भवन्ति॥ कड्ढइ। साअड्ढइ। अञ्चइ। अणच्छइ। अयञ्छइ। आइञ्छइ। पक्षे। करिसइ॥१८७॥

**असावक्खोडः ॥८।४।१८८॥**

असिविषयस्य कृषेरक्खोड इत्यादेशो भवति॥ अक्खोडेइ। असि कोशात्कर्षतीत्यर्थः॥१८८॥

**गवेषेर्ढुण्ढुल्ल-ढण्ढोल-गमेस-घत्ताः ॥८।४।१८९॥**

गवेषेरते चत्वार आदेशा वा भवन्ति॥ ढुण्ढुल्लइ। ढण्ढोलइ। गमेसइ। घत्तइ। गवेसइ॥१८९॥

**श्लिषेः सामग्गावयास-परिअन्ताः ॥८।४।१९०॥**

श्लिष्यतेरेते त्रय आदेशा वा भवन्ति ॥ सामग्गइ । अवयासइ । परिअन्तइ । सिलेसइ ॥१९०॥

**म्रक्षेश्चोप्पडः ॥८।४।१९१॥**

म्रक्षेश्चोप्पड इत्यादेशो वा भवति ॥ चोप्पडइ । मक्खइ ॥१९१॥

**काङ्क्षेराहाहिलङ्घाहिलङ्ख-वच्च-वम्फ-मह-सिह-विलुम्पाः ॥८।४।१९२॥**

काङ्क्षतेरेतेष्टादेशा वा भवन्ति ॥ आहइ । अहिलङ्घइ । अहिलङ्खइ । वच्चइ । वम्फइ । महइ । सिहइ । विलुम्पइ । कङ्खइ ॥१९२॥

**प्रतीक्षेः सामय-विहीर-वीरमालाः ॥८।४।१९३॥**

प्रतीक्षेरेते त्रय आदेशा वा भवन्ति ॥ सामयइ । विहीरइ । विरमालइ । पाडिक्खइ ॥१९३॥

**तक्षेस्तच्छ-चच्छ-रम्प-रम्फाः ॥८।४।१९४॥**

तक्षेरेते चत्वार आदेशा वा भवन्ति ॥ तच्छइ । चच्छइ । रम्पइ । रम्फइ । तक्खइ ॥१९४॥

**विकसेः कोआस-वोसट्टौ ॥८।४।१९५॥**

विकसेरेतावादेशौ वा भवतः ॥ कोआसइ । वोसट्टइ । विअसइ ॥१९५॥

**हसेर्गुञ्जः ॥८।४।१९६॥**

हसेर्गुञ्ज इत्यादेशो वा भवति ॥ गुञ्जइ । हसइ ॥१९६॥

**स्रंसेर्ल्हस-डिम्भौ ॥८।४।१९७॥**

स्रंसेरेतावादेशौ वा भवत' ॥ ल्हसइ । परिल्हसइ सलिल-वसणं । डिम्भइ । ससइ ॥१९७॥

**त्रसेर्डर-वोज्ज-वज्जाः ॥८।४।१९८॥**

त्रसेरेते त्रय आदेशा वा भवन्ति ॥ डरइ । वोज्जइ । वज्जइ । तसइ ॥१९८॥

**न्यसो णिम-णुमौ ॥८।४।१९९॥**

न्यस्यतेरेतावादेशौ भवतः ॥ णिमइ । णुमइ ॥१९९॥

**पर्यसः पलोट्ट-पल्लट्ट-पल्हत्थाः ॥८।४।२००॥**

पर्यस्यतेरेते त्रय आदेशा भवन्ति ॥ पलोट्टइ । पल्लट्टइ । पल्हत्थइ ॥२००॥

**निःश्वसेर्झङ्खः ॥८।४।२०१॥**

निःश्वसेर्झङ्ख इत्यादेशो वा भवति ॥ झङ्खइ । नीससइ ॥२०१॥

**उल्लसेरूसलोसुम्भ-णिल्लस-पुलआअ-गुञ्जोल्लारोआः ॥८।४।२०२॥**

उल्लसेरेते षडादेशा वा भवन्ति ॥ ऊसलइ । ऊसुम्भइ । णिल्लसइ । पुलआअइ । गुञ्जोल्लइ । ह्रस्वत्वे तु । गुञ्जुल्लइ । आरोअइ । उल्लसइ ॥२०२॥

**भासेर्भिसः ॥८।४।२०३॥**

भासेर्भिस इत्यादेशो वा भवति ॥ भिसइ । भासइ ॥२०३॥

**ग्रसेर्घिसः ॥८।४।२०४॥**

ग्रसेर्घिस इत्यादेशो वा भवति ॥ घिसइ । गसइ ॥२०४॥

**अवाद्गाहेर्वाहः ॥८।४।२०५॥**

अवात्परस्य गाहेर्वाह इत्यादेशो वा भवति ॥ ओवाहइ । ओगाहइ ॥२०५॥

**आरुहेश्चड-वलग्गौ ॥८।४।२०६॥**

आरुहेरेतावादेशौ वा भवतः ॥ चडइ । वलग्गइ । आरुहइ ॥२०६॥

**मुहेर्गुम्म-गुम्मडौ ॥८।४।२०७॥**

मुहेरेतावादेशौ वा भवतः ॥ गुम्मइ । गुम्मडइ । मुज्झइ ॥२०७॥

**दहेरहिऊलालुङ्खौ ॥८।४।२०८॥**

दहेरेतावादेशौ वा भवतः ॥ अहिऊलइ । आलुङ्खइ । डहइ ॥२०८॥

**ग्रहो-वल-गेण्ह हर-पङ्ग-निरुवाराहिपच्चुआः ॥८।४।२०९॥**

ग्रहेरेते षडादेशा भवन्ति ॥ वलइ । गेण्हइ । हरइ । पङ्गइ । निरुवारइ । अहिपच्चुअइ ॥२०९॥

**क्त्वा-तुम्-तव्येषु घेत् ॥८।४।२१०॥**

ग्रहः क्त्वातुम्तव्येषु घेत् इत्यादेशो भवति ॥ क्त्वा । घेत्तूण । घेत्तुआण ॥ क्वचिन्न भवति । गेण्हिअ ॥ तुम् । घेत्तुं ॥ तव्य । घेत्तव्वं ॥२१०॥

**वचो वोत् ॥८।४।२११॥**

वक्तेर्वोत् इत्यादेशो भवति क्त्वातुम्तव्येषु ॥ वोत्तूण । वोत्तुं । वोत्तव्वं ॥२११॥

**रुद-भुज-मुचां तोन्त्यस्य ॥८।४।२१२॥**

एषामन्त्यस्य क्त्वातुम्तव्येषु तो भवति ॥ रोत्तूण । रोत्तुं । रोत्तव्वं ॥ भोत्तूण । भोत्तुं भोत्तव्वं ॥ मोत्तूण । मोत्तुं । मोत्तव्वं ॥२१२॥

**दृशस्तेन ट्ठः ॥८।४।२१३॥**

दृशोन्त्यस्य तकारेण सह द्विरुक्तष्ठकारो भवति । दट्ठूण । दट्ठुं । दट्ठव्वं ॥२१३॥

**आ कृगो भूत-भविष्यतोश्च ॥८।४।२१४॥**

कृगोन्त्यस्य आ इत्यादेशो भवति भूतभविष्यत्कालयोश्चकारात् क्त्वातुम्तव्येषु च ॥ काहीआ । अकार्षीत् । अकरोत् । चकार वा ॥ काहिइ । करिष्यति । कर्त्ता वा ॥ क्त्वा । काऊण ॥ तुम् । काउं ॥ तव्य । कायव्वं ॥२१४॥

**गमिष्यमासां छः ॥८।४।२१५॥**

एषामन्त्यस्य छो भवति ॥ गच्छइ । इच्छइ । जच्छइ । अच्छइ ॥ २१५॥

**छिदि-भिदो न्दः ॥८।४।२१६॥**

अनयोरन्त्यस्य नकाराक्रान्तो दकारो भवति ॥ छिन्दइ । भिन्दइ ॥२१६॥

**युध-बुध-गृध-क्रुध-सिध मुहां ज्झः ॥८।४।२१७॥**

एषामन्त्यस्य द्विरुक्तो झो भवति ॥ जुज्झइ । बुज्झइ । गिज्झइ । कुज्झइ । सिज्झइ । मुज्झइ ॥२१७॥

**रुधो न्ध-म्भौ च ॥८।४।२१८॥**

रुधोन्त्यस्य न्ध म्भ इत्येतौ चकारात् ज्झश्च भवति ॥ रुन्धइ । रुम्भइ । रुज्झइ ॥२१८॥

**सद-पतोर्डः ॥८।४।२१९॥**

अनयोरन्त्यस्य डो भवति । सडइ । पडइ ॥२१९॥

**क्वथ-वर्धां ढः ॥८।४।२२०॥**

अनयोरन्त्यस्य ढो भवति ॥ कढइ । वड्ढइ पवयकलयलो । परिअड्ढइ लायण्णं ॥ बहुवचनाद् वृधेः कृतगुणस्य वर्धेश्चाविशेषेण ग्रहणम् ॥२२०॥

**वेष्टः ॥८।४।२२१॥**

वेष्ट वेष्टने इत्यस्य धातोः कगटड इत्यादिना [२.७७] षलोपे ऽन्त्यस्य ढो भवति ॥ वेढइ । वेढिज्जइ ॥२२१॥

**समो ल्लः ॥८।४।२२२॥**

सपूर्वस्य वेष्टतेरन्त्यस्य द्विरुक्तो लो भवति ॥ सवेल्लइ ॥२२२॥

**वोदः ॥८।४।२२३॥**

उदः परस्य वेष्टतेरन्त्यस्य ल्लो वा भवति ॥ उव्वेल्लइ उव्वेढइ ॥२२३॥

## स्विदां ज्जः ॥८।४।२२४॥

स्विदिप्रकाराणामन्त्यस्य द्विरुक्तो जो भवति ॥ सव्वङ्ग-सिज्जिरीए । सपज्जइ ॥ खिज्जइ ॥ वहुवचन प्रयोगानुसरणार्थम् ॥२२४॥

## व्रज-नृत-मदां च्चः ॥८।४।२२५॥

एषामन्त्यस्य द्विरुक्तश्चो भवति ॥ वच्चइ । नच्चइ । मच्चइ ॥२२५॥

## रुद-नमोर्वः ॥८।४।२२६॥

अनयोरन्त्यस्य वो भवति ॥ रुवइ । रोवइ । नवइ ॥२२६॥

## उद्विजः ॥८।४।२२७॥

उद्विजतेरन्त्यस्य वो भवति॥ उव्विवइ । उव्वेवो ॥२२७॥

## खाद धावोर्लुक् ॥८।४।२२८॥

अनयोरन्त्यस्य लुग् भवति ॥ खाइ खाअइ । खाहिइ । खाउ । धाइ । धाहिइ । धाउ ॥ वहुलाधिकाराद्वर्तमानाभविष्यद्विध्याद्येकवचन एव भवति । तेनेह न भवति । खादन्ति । धावन्ति ॥ क्वचिन्न भवति । धावइ पुरओ ॥२२८॥

## सृजो रः ॥८।४।२२९॥

सृजो धातोरन्त्यस्य रो भवति ॥ निसिरइ । वोसिरइ । वोसिरामि ॥२२९॥

## शकादीनां द्वित्वम् ॥८।४।२३०॥

शकादीनामन्त्यस्य द्वित्वं भवति ।' शक् । सक्कइ ॥ जिम । जिम्मइ ॥ लग् । लग्गइ । मग् । मग्गइ । कुप् । कुप्पइ ॥ नश् । नस्सइ ॥ अट् । परिअट्टइ ॥ लुट् । पलोट्टइ ॥ तुट् । तुट्टइ ॥ नट् । नट्टइ ॥ सिव् । सिव्वइ । इत्यादि ॥२३०॥

## स्फुटि-चलेः ॥८।४।२३१॥

अनयोरन्त्यस्य द्वित्वं वा भवति ॥ फुट्टइ फुडइ । चल्लइ चलइ ॥२३१॥

## प्रादेर्मीलेः ॥८।४।२३२॥

प्रादेः परस्य मीलेरन्त्यस्य द्वित्व वा भवति ॥ पमिल्लइ पमीलइ । निमिल्लइ निमीलइ । समिल्लइ समीलइ । उम्मिल्लइ उम्मीलइ ॥ प्रादेरिति किम् ? मीलइ ॥२३२॥

## उवर्णस्यावः ॥८।४।२३३॥

धातोरन्त्यस्योवर्णस्य अवादेशो भवति ॥ न्हुङ् । निण्हवइ ॥ हु । निहवइ ॥च्युङ् । चवइ ॥ रु । रवइ ॥ कु । कवइ ॥ सू । सवइ । पसवइ ॥२३३॥

## ऋवर्णस्यारः ॥८।४।२३४॥

धातोरन्त्यस्य ऋवर्णस्य अरादेशो भवति ॥ करइ । धरइ । मरइ । वरइ । सरइ । हरइ । तरइ । जरइ ॥२३४॥

## वृषादीनामरिः ॥८।४।२३५॥

वृष इत्येवप्रकाराणा धातूनाम् ऋवर्णस्य अरिः इत्यादेशो भवति ॥ वृष् । वरिसइ ॥ कृष् । करिसइ ॥ मृष् । मरिसइ ॥ हृष् । हरिसइ ॥ येषामरिरादेशो दृश्यते ते वृषादयः ॥२३५॥

## रुषादीनां दीर्घः ॥८।४।२३६॥

रुष इत्येवंप्रकाराणां धातूना स्वरस्य दीर्घो भवति ॥ रूसइ । तूसइ । सूसइ । दूसइ । पूसइ । सीसइ । इत्यादि ॥२३६॥

## युवर्णस्य गुणः ॥८।४।२३७॥

धातोरिवर्णस्य च क्ङित्यपि गुणो भवति ॥ जेऊण । नेऊण । नेइ । नेन्ति । उड्डेइ । उड्डेन्ति ।

मोत्तूण । सोऊण ॥ क्वचिन्न भवति । नीओ । उड्डीणो ॥ २३७॥

### स्वराणां स्वराः ॥८।४।२३८॥

धातुषु स्वराणां स्थाने स्वरा बहुलं भवन्ति ॥ हवइ । हिवइ ॥ चिणइ । चुणइ ॥ सद्दहणं । सद्दहाणं॥ धावइ । धुवइ ॥ रुवइ । रोवइ ॥ क्वचिन्नित्यम् । देइ । लेइ । विहेइ । नासइ ॥ आर्षे । वेमि ॥२३८॥

### व्यञ्जनाददन्ते ॥८।४।२३९॥

व्यञ्जनान्ताद्धातोरन्ते अकारो भवति ॥ भमइ । हसइ । कुणइ । चुम्बइ । भणइ । उवसमइ । पावइ । सिञ्चइ । रुन्धइ । मुसइ । हरइ । करइ ॥ शबादीनां च प्रायः प्रयोगो नास्ति ॥२३९॥

### स्वरादनतो वा ॥८।४।२४०॥

अकारान्तवर्जितात्स्वरान्ताद्धातोरन्ते अकारागमो वा भवति ॥ पाइ पाअइ । धाइ धाअइ । जाइ जाअइ । झाइ झाअइ । जम्भाइ जम्भाअइ । उव्वाइ उव्वाअइ । मिलाइ मिलाअइ । विक्केइ विक्केअइ । होऊण होइऊण ॥ अनत इति किम् ? चिइच्छइ । दुगुच्छइ ॥२४०॥

### चि-जि-श्रु-हु-स्तु-लू-पू-धूगां णो ह्रस्वश्च ॥८।४।२४१॥

च्यादीनां धातूनामन्ते णकारागमो भवति एषां स्वरस्य च ह्रस्वो भवति ॥ चि । चिणइ ॥ जि । जिणइ ॥ श्रु । सुणइ ॥ हु । हुणइ ॥ स्तु । थुणइ ॥ लू । लुणइ ॥ पू । पुणइ ॥ धूग् । धुणइ ॥ बहुलाधिकारात्क्वचिद्विकल्प । उच्चिणइ । उच्चेइ ॥ जेऊण । जिणिऊण ॥ जयइ । जिणइ ॥ सोऊण । सुणिऊण ॥२४१॥

### न वा कर्म-भावे व्वः क्यस्य च लुक् ॥८।४।२४२॥

च्यादीनां कर्मणि भावे च वर्तमानानामन्ते द्विरुक्तो वकारागमो वा भवति तत्संनियोगे च क्यस्य लुक् ॥ चिव्वइ चिणिज्जइ । जिव्वइ जिणिज्जइ । सुव्वइ सुणिज्जइ । हुव्वइ हुणिज्जइ । थुव्वइ थुणिज्जइ । लुव्वइ लुणिज्जइ । पुव्वइ पुणिज्जइ । धुव्वइ धुणिज्जइ ॥ एवं भविष्यति । चिव्विहिइ । इत्यादि ॥२४२॥

### म्मश्चेः ॥८।४।२४३॥

चिगः कर्मणि भावे च अन्ते सयुक्तो मो वा भवति तत्सनियोगे क्यस्य च लुक् ॥ चिम्मइ । चिव्वइ । चिणिज्जइ ॥ भविष्यति । चिम्मिहिइ । चिव्विहिइ । चिणिहिइ ॥२४३॥

### हन्खनोन्त्यस्य ॥८।४।२४४॥

अनयोः कर्मभावेन्त्यस्य द्विरुक्तो मो वा भवति तत्सनियोगे क्यस्य च लुक् ॥ हम्मइ हणिज्जइ । खम्मइ खणिज्जइ । भविष्यति । हम्मिहिइ हणिहिइ । खम्मिहिइ खणिहिइ ॥ बहुलाधिकाराद्धन्तेः कर्तर्यपि ॥ हम्मइ । हन्तीत्यर्थः ॥ क्वचिन्न भवति ॥ हन्तव्वं । हन्तूण । हओ ॥२४४॥

### ब्भो दुह-लिह-वह-रुधामुच्चातः ॥८।४।२४५॥

दुहादीनामन्त्यस्य कर्मभावे द्विरुक्तो भो वा भवति तत्संनियोगे क्यस्य च लुक् वहेरकारस्य च उकार ॥ दुब्भइ दुहिज्जइ । लिब्भइ लिहिज्जइ । वुब्भइ वहिज्जइ । रुब्भइ रुन्धिज्जइ । भविष्यति । दुब्भिहिइ दुहिहिइ । इत्यादि ॥२४५॥

### दहो ज्झः ॥८।४।२४६॥

दहोन्त्यस्य कर्मभावे द्विरुक्तो झो वा भवति

तत्संनियोगे क्यस्य च लुक् ॥ डज्झइ । डहिज्जइ । भविष्यति । डज्झिहिइ । डहिहिइ ॥२४६॥

**बन्धो न्धः ॥८।४।२४७॥**

बन्धेर्धातोरन्त्यस्य न्ध इत्यवयवस्य कर्मभावे ज्झो वा भवति तत्संनियोगे क्यस्य च लुक् ॥ बज्झइ । बन्धिज्जइ ॥ भविष्यति । बज्झिहिइ । बन्धिहिइ ॥ ॥२४७॥

**समनूपाद्रुधेः ॥८।४।२४८॥**

समनूपेभ्यः परस्य रुधेरन्त्यस्य कर्मभावे ज्झो वा भवति तत्सनियोगे क्यस्य च लुक् ॥ सरुज्झइ । अणुरुज्झइ । उवरुज्झइ । पक्षे । सरुन्धिज्जइ । अणुरुन्धिज्जइ । उवरुन्धिज्जइ ॥ भविष्यति । सरुज्झिहिइ । सरुन्धिहिइ । इत्यादि ॥२४८॥

**गमादीनां द्वित्वम् ॥८।४।२४९॥**

गमादीनामन्त्यस्य कर्मभावे द्वित्व वा भवति तत्सनियोगे क्यस्य च लुक् ॥ गम् । गम्मइ । गमिज्जइ ॥ हस् । हस्सइ । हसिज्जइ ॥ भण् । भण्णइ । भणिज्जइ ॥ छुप् । छुप्पइ । छुविज्जइ ॥ रुद-नमोर्वः [४.२२६] इति कृतवकारादेशो रुदिरत्र पठ्यते । रुव् । रुव्वइ । रुविज्जइ ॥ लभ् । लब्भइ । लहिज्जइ । कथ् । कत्थइ । कहिज्जइ । भुज् । भुज्जइ ॥ भुञ्जिज्जइ ॥ भविष्यति । गम्मिहिइ । गमिहिइ । इत्यादि ॥२४९॥

**ह-कृ-तृ-ज्रामीरः ॥८।४।२५०॥**

एषामन्त्यस्य ईर इत्यादेशो वा भवति तत्सनियोगे च क्यलुक् ॥ हीरइ हरिज्जइ । कीरइ करिज्जइ । तीरइ तरिज्जइ । जीरइ जरिज्जइ ॥२५०॥

**अर्जेर्विढप्पः ॥८।४।२५१॥**

अन्त्यस्येति निवृत्तम् । अर्जेर्विढप्प इत्यादेशो वा भवति तत्सनियोगे क्यस्य च लुक् ॥ विढप्पइ । पक्षे । विढविज्जइ । अज्जिज्जइ ॥२५१॥

**ज्ञो णव्व-णज्जौ ॥८।४।२५२॥**

जानातेः कर्मभावे णव्व णज्ज इत्यादेशौ वा भवतः तत्सनियोगे क्यस्य च लुक् ॥ णव्वइ णज्जइ । पक्षे । जाणिज्जइ । मुणिज्जइ ॥ म्न-ज्ञोर्णः [२.४२] इति णादेशे तु । णाइज्जइ ॥ नञ्पूर्वकस्य । अणाइज्जइ ॥२५२॥

**व्याहृगेर्वाहिप्पः ॥८।४।२५३॥**

व्याहरतेः कर्मभावे वाहिप्प इत्यादेशो वा भवति तत्संनियोगे क्यस्य च लुक् ॥ वाहिप्पइ । वाहरिज्जइ ॥ २५३ ॥

**आरभेराढप्पः ॥८।४।२५४॥**

आङ्पूर्वस्य रम्भेः कर्मभावे आढप्प इत्यादेशो वा भवति क्यस्य च लुक् ॥ आढप्पइ । पक्षे आढवीअइ ॥२५४॥

**स्निह-सिचोः सिप्पः ॥८।४।२५५॥**

अनयोः कर्मभावे सिप्प इत्यादेशो भवति क्यस्य च लुक् ॥ सिप्पइ । स्निह्यते । सिच्यते वा ॥२५५॥

**ग्रहेर्घेप्पः ॥८।४।२५६॥**

ग्रहेः कर्मभावे घेप्प इत्यादेशो वा भवति क्यस्य च लुक् ॥ घेप्पइ । गिण्हिज्जइ ॥२५६॥

**स्पृशेश्छिप्पः ॥८।४।२५७॥**

स्पृशतेः कर्मभावे । छिप्पादेशो वा भवति क्यलुक् च ॥ छिप्पइ । छिविज्जइ ॥२५७॥

**क्तेनाप्फुण्णादयः ॥८।४।२५८॥**

अप्फुण्णादय शब्दा आक्रमिप्रभृतीनां धातूनां स्थाने क्तेन सह वा निपात्यन्ते ॥ अप्फुण्णो । आक्रान्तः ॥ उक्कोस । उत्कृष्टम् । फुडं । स्पष्टम् ॥

वोलीणो । अतिक्रान्तः ॥ वोसट्टो । विकसितः ॥ निसुट्टो । निपातितः ॥ लुग्गो । रुग्णः ॥ ल्हिक्को । नष्टः ॥ पम्हुट्ठो । प्रमृष्टः प्रमुषितो वा ॥ विढत्तं । अर्जितम् ॥ छित्तं । स्पृष्टम् ॥ निमिअं । स्थापितम् ॥ चक्खिअं । आस्वादितम् ॥ लुअं । लूनम् ॥ जढं । त्यक्तम् ॥ झोसिअं । क्षिप्तम् ॥ निच्छूढं । उद्वृत्तम् ॥ पल्हत्थं पलोट्टं च । पर्यस्तम् ॥ हीसमणं । हेषितम् । इत्यादि ॥२५८॥

## धातवो ऽ र्थान्तरे ऽ पि ॥८।४।२५९॥

उक्तादर्थादर्थान्तरेपि धातवो वर्तन्ते ॥ बलिः प्राणने पठित खादनेपि वर्तते । वलइ । खादति प्राणनं करोति वा ॥ एवं कलिः सख्याने सज्ञानेपि । कलइ । जानाति सख्यानं करोति वा ॥ रिगिर्गतौ प्रवेशेपि ॥ रिगइ । प्रविशति गच्छति वा ॥ कांक्षतेर्बम्फ आदेशः प्राकृते । वम्फइ । अस्यार्थः । इच्छति खादति वा ॥ फक्कतेस्थक्क आदेश । थक्कइ । नीचां गतिं करोति विलम्बयति वा ॥ विलप्युपालम्भ्योर्झङ्ख आदेशः । झङ्खइ । विलपति उपालभते भाषते वा ॥ एवं पडिवालेइ । प्रतीक्षते रक्षति वा ॥ केचित् कैश्चिदुपसर्गैर्नित्यम् । पहरइ । युध्यते ॥ ॥ सहरइ । सवृणोति ॥ अणुहरइ । सदृशीभवति ॥ नीहरइ । पुरीषोत्सर्गं करोति ॥ विहरइ । क्रीडति ॥ आहरइ । खादति ॥ पडिहरइ । पुनः पूरयति ॥ परिहरइ । त्यजति ॥ उवहरइ । पूजयति ॥ वाहरइ । आह्वयति ॥ पवसइ । देशान्तरं गच्छति ॥ उच्चुपइ । चटति ॥ उल्लुहइ । निःसरति ॥२५९॥

## तो दोनादौ शौरसेन्यामयुक्तस्य ॥८।४।२६०॥

शौरसेन्यां भाषायामनादावपदादौ वर्तमानस्य तकारस्य दकारो भवति न चेदसौ वर्णान्तरेण संयुक्तो भवति ॥ तदो पूरिद-पदिञ्ञेण मारुदिणा मन्तिदो ॥ एतस्मात् । एदाहि । एदाओ । अनादाविति किम् ? तधा करेध जधा तस्स राइणो अणुकम्पणीआ भोमि ॥ अयुक्तस्येति किम् ? मत्तो । अय्यउत्तो । असंभाविद-सक्कारं । हला सउन्तले ॥२६०॥

## अधः क्वचित् ॥ ८ । ४ । २६१ ॥

वर्णान्तरस्याधोवर्तमानस्य तस्य शौरसेन्यां दो भवति । क्वचिल्लक्ष्यानुसारेण ॥ महन्दो । निच्चिन्दो । अन्देउरं ॥ २६१ ॥

## वादेस्तावति ॥ ८ । ४ । २६२ ॥

शौरसेन्यां तावच्छब्दे आदेस्तकारस्य दो वा भवति ॥ दाव । ताव ॥ २६२ ॥

## आ आमन्त्र्ये सौ वेनो नः ॥८।४।२६३॥

शौरसेन्यामिनो नकारस्य आमन्त्र्ये सौ परे आकारो वा भवति ॥ भो कञ्चुइआ । सुहिआ । पक्षे । भो तवस्सि । भो मणस्सि ॥ २६३ ॥

## मो वा ॥ ८ । ४ । २६४ ॥

शौरसेन्यामामन्त्र्ये सौ परे नकारस्य मो वा भवति ॥ भो रायं । भो विअयवम्मं । सुकम्मं । भयवं कुसुमाउह । भयवं तित्थं पवत्तेह । पक्षे । सयल-लोअ-अन्तेआरि भयव हुदवह ॥ २६४ ॥

## भवद्भगवतोः ॥ ८ । ४ । २६५ ॥

आमन्त्र्य इति निवृत्तम् । शौरसेन्यामनयो. सौ परे नस्य मो भवति ॥ किं एत्थभवं हिदएण चिन्तेदि । एदु भवं । समणे भगवं महावीरे ॥ पज्जलिदो भयवं हुदासणो ॥ क्वचिदन्यत्रापि । मघव पागसासणे ॥ सपाइअवं सीसो । कयवं । करेमि काहं च ॥२६५॥

## न वा र्यो य्यः ॥ ८ । ४ । २६६ ॥

शौरसेन्यां र्यस्य स्थाने य्यो भवति ॥ अय्यउत्त पय्याकुलीकदम्हि । सुय्यो पक्षे । अज्जो पज्जाउलो । कज्ज-परवसो ॥ २६६ ॥

## थो धः ॥ ८ । ४ । २६७ ॥

शौरसेन्यां थस्य धो वा भवति ॥ कधेदि कहेदि । णाधो णाहो । कध कह । राज-पधो राज-पहो ॥ अपदादावित्येव । थाम । थेओ ॥ २६७ ॥

## इह-हचोर्हस्य ॥ ८ । ४ । २६८ ॥

इहशब्दसबन्धिनो मध्यमस्येत्था-हचौ [३.१४३] इति विहितस्य हचश्च हकारस्य शौरसेन्यां धो वा भवति ॥ इध । होध । परित्तायध ॥ पक्षे । इह । होह । परित्तायह ॥ २६८ ॥

## भुवो भः ॥ ८ । ४ । २६९ ॥

भवतेर्हकारस्य शौरसेन्यां भो वा भवति ॥ भोदि होदि । भुवदि हुवदि । भवदि हवदि ॥२६९॥

## पूर्वस्य पुरवः ॥ ८ । ४ । २७० ॥

शौरसेन्यां पूर्वशब्दस्य पुरव इत्यादेशो वा भवति ॥ अपुरवं नाडय । अपुरवागदं । पक्षे अपुव्व पदं । अपुव्वागदं ॥ २७० ॥

## क्त्व इय-दूणौ ॥ ८ । ४ । २७१ ॥

शौरसेन्यां क्त्वाप्रत्ययस्य इय दूण इत्यादेशौ वा भवतः ॥ भविय भोदूण । हविय होदूण । पढिय पढिदूण । रमिय रन्दूण । पक्षे भोत्ता । होत्ता । पढित्ता । रन्ता ॥ २७१ ॥

## कृ-गमो डडुअः ॥८।४।२७२॥

आभ्यां परस्य क्त्वाप्रत्ययस्य डित् अडुअ इत्यादेशो वा भवति ॥ कडुअ । गडुअ । पक्षे । करिय । करिदूण । गच्छिय । गच्छिदूण ॥२७२॥

## दिरिचेचोः ॥८।४।२७३॥

त्यादीनामाद्यत्रयस्याद्यस्येचेचौ [३.१३९] इति विहितयोरिचेचोः स्थाने दिर्भवति ॥ वेति निवृत्तम् । नेदि । देदि । भोदि । होदि ॥२७३॥

## अतो देश्च ॥८।४।२७४॥

अकारात्परयोरिचेचोः स्थाने देश्चकाराद् दिश्च भवति ॥ अच्छंदे । अच्छदि ॥ गच्छदे । गच्छदि । रमदे । रमदि । किज्जदे । किज्जदि । अत इति किम्? वसुआदि । नेदि । भोदि ॥२७४॥

## भविष्यति स्सिः ॥८।४।२७५॥

शौरसेन्यां भविष्यदर्थे विहिते प्रत्यये परे स्सिर्भवति । हिस्साहामपवादः ॥ भविस्सिदि । करिस्सिदि । गच्छिस्सिदि ॥२७५॥

## अतो ङसेर्डादो-डादू ॥८।४।२७६॥

अतः परस्य ङसेः शौरसेन्यां आदो आदु इत्यादेशौ डितौ भवतः ॥ दूरादो य्येव । दूरादु ॥२७६॥

## इदानीमो दाणिं ॥८।४।२७७॥

शौरसेन्यामिदानीमः स्थाने दाणिं इत्यादेशो भवति ॥ अनन्तरकरणीयं दाणिं आणवेदु अय्यो ॥ व्यत्ययात्प्राकृतेपि । अन्नं दाणिं वोहि ॥२७७॥

## तस्मात्ताः ॥८।४।२७८॥

शौरसेन्यां तस्माच्छब्दस्य ता इत्यादेशो भवति ॥ ता जाव पविसामि । ता अलं एदिणा माणेण ॥२७८॥

## मोन्त्याण्णो वेदेतोः ॥८।४।२७९॥

शौरसेन्यामन्त्यान्मकारात्पर इदेतोः परयोर्णकारागमो वा भवति ॥ इकारे । जुत्तं णिमं जुत्तमिणं ।

सरिसं णिमं सरिसमिणं । एकारे । कि णेदं किमेदं एवं णेदं एवमेदं ॥२७९॥

**एवार्थे य्येव ॥८।४।२८०॥**

एवार्थे य्येव इति निपातः शौरसेन्यां प्रयोक्तव्यः ॥ मम य्येव बम्भणस्स । सो य्येव सोए ॥२८०॥

**हञ्जे चेटयाह्वाने ॥८।४।२८१॥**

शौरसेन्यां चेटयाह्वाने हञ्जे इति निपातः प्रयोक्तव्यः ॥ हञ्जे चदुरिके ॥२८१॥

**हीमाणहे विस्मय-निर्वेदे ॥८।४।२८२॥**

शौरसेन्यां हीमाणहे इत्ययं निपातो विस्मये निर्वेदे च प्रयोक्तव्यः । विस्मये ॥ हीमाणहे जीवन्तवच्छा मे जणणी ॥ निर्वेदे । हीमाणहे पलिस्सन्ता हगे एदेण निय-विधिणो दुव्ववसिदेण ॥२८२॥

**णं नन्वर्थे ॥८।४।२८३॥**

शौरसेन्यां नन्वर्थे णमिति निपातः प्रयोक्तव्यः ॥ णं अफलोदया । ण अय्यमिस्सेहि पुढमं य्येव आणत्तं । णं भवं मे अग्गदो चलदि । आर्षे वाक्यालङ्कारेपि दृश्यते । नमोत्थु णं । जया णं । तया णं ॥२८३॥

**अम्महे हर्षे ॥८।४।२८४॥**

शौरसेन्याम् अम्महे इति निपातो हर्षे प्रयोक्तव्यः ॥ अम्महे एआए सुम्मिलाए सुपलिगढिदो भवं ॥२८४॥

**हीही विदूषकस्य ॥ ८ । ४ । २८५ ॥**

शौरसेन्यां हीही इति निपातो विदूषकाणां हर्षे द्योत्ये प्रयोक्तव्यः ॥ हीही भो सपन्ना मणोरधा पिय-वयस्सस्स ॥ २८५ ॥

**शेषं प्राकृतवत् ॥ ८ । ४ । २८६ ॥**

शौरसेन्यामिह प्रकरणे यत्कार्यमुक्तं ततोन्यच्छौरसेन्यां प्राकृतवदेव भवति ॥ दीर्घ-ह्रस्वौ मिथो वृत्तौ [ १.४ ] इत्यारभ्य तो दोनादौ शौरसेन्यामयुक्तस्य [ ४.२६० ] एतस्मात्सूत्रात्प्राग् यानि सूत्राणि एषु यान्युदाहरणानि तेषु मध्ये अमूनि तदवस्थान्येव शौरसेन्यां भवन्ति अमूनि पुनरेवंविधानि भवन्तीति विभागः प्रतिसूत्रं स्वयमभ्यूह्य दर्शनीयः ॥ यथा । अन्दावेदी । जुवदि-जणो । मणसिला । इत्यादि ॥ २८६ ॥

**अत एत्सौ पुंसि मागध्याम् ॥८।४।२८७॥**

मागध्यां भाषायां सौ परे अकारस्य एकारो भवति पुंसि पुल्लिङ्गे ॥ एष मेषः । एशे मेशे ॥ एशे पुलिशे ॥ करोमि भदन्त । करेमि भन्ते ॥ अत इति किम् ? णिही । कली । गिली ॥ पुंसीति किम् ? जलं ॥ यदपि "**पोराणमद्ध-मागह-भासा-निययं हवइ सुत्तं**" इत्यादिनार्षस्य अर्धमागधभाषानियतत्वमाम्नायि वृद्धैस्तदपि प्रायोस्यैव विधानान्न वक्ष्यमाणलक्षणस्य ॥ कयरे आगच्छइ ॥ से तारिसे दुक्खसहे जिइन्दिए । इत्यादि ॥ २८७ ॥

**र-सोर्ल-शौ ॥ ८ । ४ । २८८ ॥**

मागध्यां रेफस्य दन्त्यसकारस्य च स्थाने यथासंख्यं लकारस्तालव्यशकारश्च भवति ॥ र ॥ नले । कले ॥ स । हंशे । शुदं । शोभणं ॥ उभयोः शालशे । पुलिशे ॥ २८८ ॥

लहश- वश-नमिल-शुल-शिल-विअलिद-मन्दाललायिदंहि-युगे । वील यिणे पक्खालदु मम शयलमवय्य-यम्बालं ॥ १ ॥

**स-षोः संयोगे सो ऽ ग्रीष्मे ॥८।४।२८९॥**

मागध्यां सकारषकारयोः संयोगे वर्तमानयोः सो भवति ग्रीष्मशब्दे तु न भवति । ऊर्ध्वलोपाद्यप-

वादः ॥ स । पक्खलदि हस्ती । बुहस्पदी । मस्कली । विस्मये ॥ ष । शुस्क-दालुं । कस्टं । विस्नुं । शस्प-कवले । उस्मा । निस्फलं । धनुस्खण्डं ॥ ॥ अग्रीष्म इति किम् ? गिम्ह-वाशले ॥ २८९ ॥

**ट्ट-ष्ठयोस्टः ॥ ८ । ४ । २९० ॥**

द्विरुक्तस्य टस्य षकाराक्रान्तस्य च ठकारस्य मागध्यां सकाराक्रान्तः टकारो भवति ॥ ट्ट । पस्टे । भस्टालिका । भस्टिणी ॥ ष्ठ । शुस्टु कदं । कोस्टागालं ॥ २९० ॥

**स्थ-र्थयोस्तः ॥८।४।२९१॥**

स्थ-र्थ इत्येतयो. स्थाने मागध्या सकाराक्रान्तः तो भवति ॥ स्थ । उवस्तिदे । शुस्तिदे ॥ र्थ । अस्त-वदी । शस्तवाहे ॥ २९१ ॥

**ज-द्य-यां यः ॥ ८ । ४ । २९२ ॥**

मागध्या जद्ययां स्थाने यो भवति ॥ ज । याणदि । यणवदे । अय्युणे । दुय्यणे । गय्यदि । गुण-वय्यिदे ॥ द्य । मय्यं । अय्य किल विय्याहले आगदे ॥ य । यादि । यधाशलूवं । याण-वत्तं । यदि ॥ यस्य यत्वविधानम् आदेर्यो जः [१.२४५] इति बाधनार्थम् ॥ २९२ ॥

**न्य-ण्य-ज्ञ-ञ्जां ञ्ञः ॥ ८ । ४ ।२९३ ॥**

मागध्यां न्य ण्य ज्ञ ञ्ज इत्येतेषां द्विरुक्तो ञो भवति ॥ न्य । अहिमञ्ञु-कुमाले अञ्ञ-दिशं । शामञ्ञ-गुणे । कञ्ञका-वलणं ॥ ण्य । पुञ्ञवन्ते । अवम्हञ्ञं । पुञ्ञाह । पुञ्ञं । ज्ञ । पञ्ञाविशाले शव्वञ्ञे । अवञ्ञा ॥ ञ्ज । अञ्ञली । धणञ्ञए । पञ्ञले ॥ २९३ ॥

**व्रजो जः ॥८।४।२९४॥**

मागध्यां व्रजेर्जकारस्य ञ्जो भवति । यापवाद ॥ वञ्जदि ॥२९४॥

**छस्य श्चोनादौ ॥८।४।२९५॥**

मागध्यामनादौ वर्तमास्य छस्य तालव्यशकाराक्रान्तश्चो भवति ॥ गश्च गश्च । उश्चलदि । पिश्चिले । पुश्चदि ॥ लाक्षणिकस्यापि । आपन्नवत्सलः । आवन्न वश्चले ॥ तिर्यक् प्रेक्षते । तिरिच्छि पेच्छइ । तिरिश्चि पेस्कदि ॥ अनादाविति किम् ? छाले ॥२९५॥

**क्षस्य ᳵ कः ॥८।४।२९६॥**

मागध्यामनादौ वर्तमानस्य क्षस्य ᳵको जिह्वामूलीयो भवति ॥ यᳵके । लᳵकशे ॥ अनादावित्येव । खय-यलहला । क्षयजलधरा इत्यर्थः ॥२९६॥

**स्कः प्रेक्षाचक्षोः ॥८।४।२९७॥**

मागध्यां प्रेक्षेराचक्षेश्च क्षस्य सकाराक्रान्तः को भवती ॥ जिह्वामूलीयापवादः ॥ पेस्कदि । आचस्कदि ॥२९८॥

**तिष्ठश्चिष्ठः ॥८।४।२९८॥**

मागध्या स्थाधातोर्यस्तिष्ठ इत्यादेशस्तस्य चिष्ठ इत्यादेशो भवति ॥ चिष्ठदि ॥२९८॥

**अवर्णाद्वा ङसो डाहः ॥८।४।२९९॥**

मागध्यामवर्णात्परस्य ङसो डित् आह इत्यादेशो वा भवति ॥ हगे न एलिशाह कम्माह काली । भगदत्त शोणिदाह कुम्भे । पक्षे । भीमशेणस्स पश्चादो हिण्डीअदि । हिडिम्बाए घडुक्कय शोके ण उवशमदि ॥२९९॥

**आमो डाहँ वा ॥८।४।३००॥**

मागध्यामवर्णात्परस्य आमोनुनासिकान्तो डित् आहादेशो वा भवति ॥ शयणाहँ सुह । पक्षे । नलिन्दाणं ॥ व्यत्ययात्प्राकृतेपि । ताहँ । तुम्हाहँ । अम्हाहँ । सरिआहँ । कम्माहँ ॥३००॥

**अहं वयमोर्हगे ॥८।४। ३०१॥**

मागध्यामहंवयमोः स्थाने हगे इत्यादेशो भवति ॥ हगे शक्कावदलतिस्त णिवाशी धीवले । हगे शंपत्ता ॥३०१॥

**शेषं शौरसेनीवत् ॥८।४।३०२॥**

मागध्यां यदुक्तं ततोन्यच्छौरसेनीवद् द्रष्टव्यम् ॥ तत्र तो दोनादौ शौरसेन्यामयुक्तस्य [४.२६०) ॥ पविशदु आवुत्ते शामि-पशादाय ॥ अधः क्वचित् (४.२६१) ॥ अले कि एशे महन्दे कलयले ॥ वादेस्तावति (४.२६२)॥ मालेध वा धलेध वा । अयं दाव शे आगमे ॥ आ आमन्त्र्ये सौ वेनो नः (४.२६३)॥ भो कञ्चुइआ ॥ मो वा (४.२६४) ॥ भो रायं ॥ भवद्भगवतोः (४.२६५) ॥ एदु भवं शमणे भयव महावीले । भयवं कदन्ते ये अप्पणो पᳵकं उज्झिय पलस्स पᳵकंपमाणीकलेशि ॥ न वा र्यो य्यः (४. २६६) ॥ अय्य एशे खु कुमाले मलयकेदू ॥ थो धः (४.२६७) ॥ अले कुम्भिला कधेहि ॥ इह-हचोर्हस्य (४.२६८) ॥ ओशलध अय्या ओशलध ॥ भुवो भः (४.२६९) ॥ भोदि ॥ पूर्वस्य पुरवः (४.२७०) ॥ अपुरवे ॥ क्त्व इयदूणौ (४.२७१) ॥ कि खु शोभणे बह्मणे शि त्ति कलिय लञ्ञा पलिग्गहे दिण्णे । कृ-गमो डडुअः (४.२७२) कडुअ । गडुअ ॥ दिरिचेचोः (४.२७३) ॥ अमच्चल-ᳵकशं पिक्खिदुं इदो य्येव आग श्चदि ॥ अतो देश्च [४ २७४] ॥ अले किं एशे महन्दे कलयले शुणीअदे ॥ भविष्यति स्सि [४ २७५] ॥ ता कहि नु गदे लुहिलप्पिए भविस्सिदि ॥ अतो डसेर्डादो-डादू [४.२७६] ॥ अह पि भागुलायणादो मुद्दं पावेमि ॥ इदानीमो दाणि [४.२७७] ॥ शुणध दाणि हगे शक्कावयाल-तिस्त-णिवाशी धीवले ॥ तस्मात्ताः [४.२७८] ॥ ता याव पविशामि ॥ मोन्त्याण्णो वेदेतोः [४.२७९] ॥ युत्तं णिमं । शलिश णिमं ॥ एवार्थे य्येव [४.२८०] ॥ मम य्येव ॥ हञ्जे चेटयाह्वाने [४.२८१] ॥ हञ्जे चदुलिके ॥ हीमाणहे विस्मय-निर्वेदे [४. २८२] ॥ विस्मये । यथा उत्तराधवे । राक्षसः । हीमाणहे जीवन्त-वश्चा मे जणणी ॥ निर्वेदे ॥ यथा विक्रान्तभीमे । राक्षसः । हीमाणहे पलिस्सन्ता हगे एदेण निय-विधिणो दुव्वविशिदेण ॥ णं नन्वर्थे [४ २८३] ॥ णं अवशलोपशप्पणीया लायाणो ॥ अम्महे हर्षे [४.२८४] ॥ अम्महे एआए शुम्मिलाए शुपलिगढिदे भावं ॥ हीही विदूषकस्य [४.२८५] ॥ हीही सपन्ना मे मणोलधा पियवयस्सस्स ॥ शेषं प्राकृतवत् [४.२८६] ॥ मागध्यामपि दीर्घ-ह्रस्वौ मिथो वृत्तौ [१.४] इत्यारभ्य तो दोनादौ शौरसेन्यामयुक्तस्य [४.२६०] इत्यस्मात्प्राग् यानि सूत्राणि तेषु यान्युदाहरणानि सन्ति तेषु मध्ये अमूनि तदवस्थान्येव मागध्याममूनि पुनरेवंविधानि भवन्तीति विभागः स्वयमभ्यूह्य दर्शनीयः ॥३०२॥

**ज्ञो ञ्ञः पैशाच्याम् ॥८।४।३०३॥**

पैशाच्यां भाषायां ज्ञस्य स्थाने ञ्ञो भवति ॥ पञ्ञा । सञ्ञा । सव्वञ्ञो । ञान । विञ्ञान ॥३०३॥

**राज्ञो वा चिञ् ॥८।४।३०४॥**

पैशाच्यां राज्ञ इति शब्दे यो ज्ञकारस्तस्य चिञ् आदेशो वा भवति ॥ राचिञा लपितं । रञ्ञा लपितं । राचिञो धन । रञ्ञो धन । ज्ञ इत्येव । राजा ॥३०४॥

**न्य ण्योर्ञ्ञः ॥८।४।३०५॥**

पैशाच्यां न्यण्योः स्थाने ञ्ञो भवति ॥ कञ्ञका अभिमञ्ञू । पुञ्ञ कम्मो । पुञ्ञाहं ॥३०५॥

### णो नः ॥८।४।३०६॥

पैशाच्या णकारस्य नो भवति ॥ गुन गन-युत्तो । गुनेन ॥३०६॥

### तदोस्तः ॥८।४।३०७॥

पैशाच्या तकारदकारयोस्तो भवति ॥ तस्य । भगवती । पव्वती । सतं ॥ दस्य । मतन-परवसो । सतन । तामोतरो । पतेसो । वतनकं । होतु । रमतु ॥ तकारस्यापि तकारविधानमादेशान्तरबाधनार्थम् । तेन पताका वेतिसो इत्याद्यपि सिद्धं भवति ॥३०७॥

### लो ळः ॥८।४।३०८॥

पैशाच्या लकारस्य ळकारो भवति ॥ सीळं । कुळं । जळं । सलिळं । कमळं ॥३०८॥

### श-षोः सः ॥८।४।३०९॥

पैशाच्यां शषोः सो भवति ॥ श । सोभति । सोभनं । ससी । सक्को । सङ्खो ॥ ष । विसमो । किसानो ॥ न कगचजादिषट्शम्यन्तसूत्रोक्तम्(४.३२४) इत्यस्य बाधकस्य बाधनार्थोयं योगः ॥३०९॥

### हृदये यस्य पः ॥८।४।३१०॥

पैशाच्यां हृदयशब्दे यस्य पो भवति ॥ हितपकं । किं पि किं पि हितपके अत्थं चिन्तयमानी ॥३१०॥

### टोस्तुर्वा ॥८।४।३११॥

पैशाच्यां टोः स्थाने तुर्वा भवति ॥ कुतुम्बकं । कुटुम्बकं ॥३११॥

### क्त्वस्तूनः ॥८।४।३१२॥

पैशाच्यां क्त्वाप्रत्ययस्य स्थाने तून इत्यादेशो भवति ॥ गन्तून । रन्तून । हसितून । पठितून । कधितून ॥३१२॥

### द्धून-त्थूनौ ष्ट्वः ॥८।४।३१३॥

पैशाच्या ष्ट्वा इत्यस्य स्थाने द्धून त्थून इत्यादेशौ भवतः । पूर्वस्यापवादः ॥ नद्धून । नत्थून । तद्धून । तत्थून ॥३१३॥

### र्य-स्न-ष्टां रिय-सिन-सटाः क्वचित् ॥८।४।३१४॥

पैशाच्यां र्यस्नष्टां स्थने यथासङ्ख्यं रिय सिन सट इत्यादेशाः क्वचिद् भवन्ति ॥ भार्या । भारिया ॥ स्नातम् । सिनातं ॥ कष्टम् । कसटं ॥ क्वचिदिति किम् ? सुज्जो । सुनुसा । तिट्ठो ॥३१४॥

### क्यस्येय्यः ॥८।४।३१५॥

पैशाच्यां क्यप्रत्ययस्य इय्य इत्यादेशो भवति ॥ गिय्यते । दिय्यते । रमिय्यते । पठिय्यते ॥३१५॥

### कृगो डीरः ॥८।४।३१६॥

पैशाच्यां कृगः परस्य क्यस्य स्थाने डीर इत्यादेशो भवति । पुधुमतसने सव्वस्स य्येव समानं कीरते ॥३१६॥

### यादृशादेर्दुस्तिः ॥८।४।३१७॥

पैशाच्यां यादृश इत्येवमादीनां दृ इत्यस्य स्थाने तिः इत्यादेशो भवति ॥ यातिसो । तातिसो । केतिसो । एतिसो । भवातिसो । अञ्ञातिसो । युम्हातिसो । अम्हातिसो ॥३१७॥

### इचेचः ॥८।४।३१८॥

पैशाच्यामिचेचो स्थाने तिरादेशो भवति ॥ वसुआति । भोति । नेति । तेति ॥३१८॥

### आत्तेश्च ॥८।४।३१९॥

पैशाच्यामकारात्परयोः इचेचोः स्थाने तेश्चकारात् तिश्चादेशो भवति ॥ लपते । लपति । अच्छते । अच्छति । गच्छते । गच्छति । रमते । रमति ॥ आदिति किम् ? होति । नेति ॥३१९॥

### भविष्यत्येय्य एव ॥८।४।३२०॥

पैशाच्यामिचेचोः स्थाने भविष्यति एय्य एव

भवति न तु स्सि ॥ त तद्धून चिन्तितं रञ्ञा का एसा हुवेय्य ॥३२०॥

### अतो ङसेर्डातो डातू ॥८।४।३२१॥

पैशाच्यामकारात्परस्य ङसेर्डितौ आतो आतु इत्यादेशौ भवतः । ताव च तीए तूरातो य्येव तिट्ठो । तूरातु । तुमातो । तुमातु । ममातो ममातु ॥३२१॥

### तदिदमोष्टा नेन स्त्रियां तु नाए ॥८।४।३२२॥

पैशाच्यां तदिदमोः स्थाने टाप्रत्ययेन सह नेन इत्यादेशो भवति । स्त्रीलिङ्गे तु नाए इत्यादेशो भवति ॥ तत्थ च नेन कत सिनानेन ॥ स्त्रियाम् । पूजितो च नाए पातग्ग-कुसुम-प्पतानेन ॥ टेति किम् ? एव चिन्तयन्तो गतो सो ताए समीपं ॥३२२।

### शेषं शौरसेनीवत् ॥८।४।३२३॥

पैशाच्या यदुक्त ततोन्यच्छेषं पैशाच्यां शौरसेनीवद् भवति ॥ अध ससरीरो भगवं मकर-धजो । एत्थ परिब्भमन्तो हुवेय्य । एवंविधाए भगवतीए कधं तापस-वेस-गहनं कतं ॥ एतिस अतिट्ठ-पुरवं महाधनं तद्धून । भगवं यति म वरं पयच्छसि राज च दाव लोक । ताव च तीए तूरातो य्येव तिट्ठो सो आगच्छमानो राजा ॥३२३॥

### न क-ग-च-जादि-षट्-शम्यन्त-सूत्रोक्तम् ॥८।४।३२४॥

पैशाच्या क-ग-च-ज-त-द-प-य-वां प्रायो लुक् [१.१७७] इत्यारभ्य षट्-शमी-शाव-सुधा-सप्तपर्णे-ष्वादेश्छ [१.२६५] इति यावद्यानि सूत्राणि तैर्यदुक्तं कार्यं तन्न भवति ॥ मकरकेतू । सगर-पुत्त-वचन । विजयसेनेन लपितं । मतनं । पापं । आयुधं । तेवरो ॥ एवमन्यसूत्राणामप्युदाहरणानि द्रष्टव्यानि ॥३२४॥

### चूलिका-पैशाचिके तृतीय-तुर्ययोराद्य-द्वितीयौ ॥८।४।३२५॥

चूलिकापैशाचिके वर्गाणां तृतीयतुर्ययोः स्थाने यथासंख्यमाद्यद्वितीयौ भवतः ॥ नगरम् । नकर ॥ मार्गण । मक्कनो ॥ गिरि-तटम् । किरि-तटं ॥ मेघः । मेखो ॥ व्याघ्रः । वक्खो ॥ घर्म । खम्मो ॥ राजा । राचा ॥ जर्जरम् । चच्चरं ॥ जीमूतः । चीमूतो ॥ निर्झरः । निच्छरो ॥ झर्झरः । छच्छरो ॥ तडागम् । तटाक ॥ मण्डलम् । मण्टल ॥ डमरुकः । टमरुको ॥ गाढम् । काठं ॥ षण्ढः । सण्ठो ॥ ढक्का । ठक्का ॥ मदन । मतनो ॥ कन्दर्पः । कन्तप्पो ॥ दामोदरः ॥ तामोतरो ॥ मधुरम् । मथुरं ॥ बान्धवः । पन्थवो ॥ धूली । थूली । बालकः । पालको ॥ रभसः । रफसो ॥ रम्भा । रम्फा ॥ भगवती । फकवती ॥ नियोजितम् । नियोचितं ॥ क्वचिल्लाक्षणिकस्यापि । पडिमा इत्यस्य स्थाने पटिमा । दाढा इत्यस्य स्थाने ताठा ॥३२५॥

### रस्य लो वा ॥८।४।३२६॥

चूलिकापैशाचिके रस्य स्थाने लो वा भवति ॥

पनमथ पनय-पकुप्पित-गोली-चलनग्ग-लग्ग-पति-बिम्बं ।
तससु नख-तप्पनेसुं एकातस-तनु-थलं लुद्दं ॥१॥
नच्चन्तस्स य लीला-पातुक्खेवेन कम्पिता वसुथा ।
उच्छलन्ति समुद्दा सइला निपतन्ति तं हलं नमथ ॥२॥

### नादि-युज्योरन्येषाम् ॥८।४।३२७॥

चूलिकापैशाचिकेपि अन्येषामाचार्याणा मतेन तृतीयतुर्ययोरादौ वर्तमानयोर्युजिधातौ च आद्यद्वितीयौ न भवतः ॥ गति । गती ॥ घर्म । घम्मो ॥ जीमूतः । जीमूतो ॥ झर्झरः । झच्छरो ॥ डमरुकः । डमरुको ॥ ढक्का । ढक्का ॥ दामोदरः । दामोतरो ॥ बालकः ।

वालको ॥ भगवती । भकवती ॥ नियोजितम् । नियोजित ॥३२७॥

## शेषं प्राग्वत् ॥८।४।३२८॥

चूलिकापैशाचिके तृतीयतुर्ययोरित्यादि यदुक्तं ततोन्यच्छेष प्राक्तनपैशाचिकवद् भवति ॥ नकर । मक्कनो । अनयोर्नो णत्वं न भवति । णस्य च नत्वं स्यात् ॥ एवमन्यदपि ॥३२८॥

## स्वराणां स्वराः प्रायोपभ्रंशे ॥८।४।३२९॥

अपभ्रंशे स्वराणां स्थाने प्रायः स्वरा भवन्ति ॥ कच्चु । काच्च । वेण । वीण ॥ वाह । बाहा । बाहु ॥ पट्ठि । पिट्ठि । पुट्ठि ॥ तणु । तिणु । तृणु ॥ सुकिदु। सुकिउ । सुकृदु ॥ किन्नओ । किलिन्नओ ॥ लिह । लीह । लेह ॥ गउरि । गोरि । प्रायोग्रहणाद्यस्यापभ्रंशे विशेषो वक्ष्यते तस्यापि क्वचित्प्राकृतवत् शौरसेनीवच्च कार्यं भवति ॥३२ ॥

## स्यादौ दीर्घ-ह्रस्वौ ॥८।४।३३०॥

अपभ्रंशे नाम्नोन्त्यस्वरस्य दीर्घह्रस्वौ स्यादौ प्रायो भवतः ॥ सौ ॥

ढोल्ला सामला धण चम्पा-वण्णी ।
णाइ सुवण्ण-रेह कस-वट्टइ दिण्णी ॥१॥

आमन्त्ये ॥

ढोल्ला मइँ तुहुँ वारिया मा कुरु दीहा माणु ।
निद्दए गमिही रत्तडी दडवड होइ विहाणु ॥२॥

स्त्रियाम् ॥

बिट्टीए मइ भणिय तुहुँ मा करु वङ्की दिट्ठि ।
पुत्ति सकण्णी भल्लि जिवँ मारइ हिअइ पइट्ठि ॥३॥

जसि ॥

एइ ति घोडा एह थलि एइ वि निसिआ खग्ग ।
एत्थु मुणीसिम जाणिअइ जो न वि वालइ वग्ग ॥४॥

एवं विभक्त्यन्तरेष्वप्युदाहार्यम् ॥३३०॥

## स्यमोरस्योत् ॥८।४।३३१॥

अपभ्रंशे अकारस्य स्यमोः परयोः उकारो भवति ॥३३२॥

दहमुहु भुवण-भयकरु तोसिअ-सकरु
णिग्गउ रह-वरि चडिअउ ।
चउमुहु छंमुहु झाइवि एक्कहि लाइवि
णावइ दइवे घडिअउ ॥ १ ॥

## सौ पुंस्योद्वा ॥८।४।३३२॥

अपभ्रंशे पुल्लिङ्गे वर्तमानस्य नाम्नोकारस्य सौ परे ओकारो वा भवति ॥३३२॥

अगलिअ-नेह-निवट्टाहं जोअण-लक्खु वि जाउ ।
वरिस-सएण वि जो मिलइ सहि सोक्खहँ सो ठाउ ॥१

पुंसीति किम् ?

अङ्गहिँ अङ्गु न मिलिउ हलि अहरें अहरु न पत्तु ।
पिअ जोअन्तिहे मुह-कमलु एम्वइ सुरउ समत्तु ॥२॥

## एट्टि ॥८।४।३३३॥

अपभ्रंशे अकारस्य टायामेकारो भवति ॥३३३॥

जे महु दिण्णा दिअहडा दइएँ पवसन्तेण ।
ताण गणन्तिएँ अङ्गुलिउ जज्जरिआउ नहेण ॥१॥

## ङिनेच्च ॥८।४।३३४॥

अपभ्रंशे अकारस्य ङिना सह इकार एकारश्च भवतः ॥

सायरु उप्परि तणु धरइ तलि घल्लइ रयणाइं ।
सामि सुभिच्चु वि परिहरइ समाणेइ खलाइ ॥१॥

तले घल्लइ ॥३३४॥

## भिस्येद्वा ॥८।४।३३५॥

अपभ्रंशे अकारस्य भिसि परे एकारो वा भवति ॥३३५॥

गुणहिँ न सपइ कित्ति पर फल लिहिआ भुञ्जन्ति ।
केसरि न लहइ बोड्डिअ वि गय लक्खेहि घेप्पन्ति ॥१॥

**ङसेर्हे-हू ॥८।४।३३६॥**

अस्येति पञ्चम्यन्त विपरिणम्यते। अपभ्रंशे अकारात्परस्य ङसेर्हे हु इत्यादेशौ भवतः ॥

वच्छहे गृण्हइ फलइँ जणु कडु-पल्लव वज्जेइ ।
तो वि महद्दुमु सुअणु जिवँ ते उच्छङ्गि धरेइ ॥ १ ॥

वच्छहु गृण्हइ ॥३३६॥

**भ्यसो हुं ॥ ८ । ४ । ३३७ ॥**

अप्रभ्रंशे अकारात्परस्य भ्यस पञ्चमीबहुवचनस्य हु इत्यादेशो भवति ॥

दूरुड्डाणे पडिउ खलु अप्पणु जणु मारेइ ।
जिह गिरि-सिङ्गहुं पडिअ सिल अन्नु वि चूरु करेइ ॥३३७॥

**ङसः सु-हो-स्सवः ॥ ८ । ४ । ३३८ ॥**

अपभ्रंशे अकारात्परस्य ङसः स्थाने सु हो स्सु इति त्रय आदेशा भवन्ति ॥

जो गुण गोवइ अप्पणा पयडा करइ परस्सु ।
तसु हउँ कलि-जुगि दुल्लहहो बलि किज्जउँ सुअणस्सु ॥ ॥३३८॥

**आमो हं ॥ ८ । ४ । ३३९ ॥**

अपभ्रंशे अकारात्परस्यामो हमित्यादेशो भवति ॥

तणहँ तइज्जी भङ्गि न वि ते अवड-यडि वसन्ति ।
अह जणु लग्गि वि उत्तरइ अह सह सइं मज्जन्ति ॥ ॥३३९॥

**हुं चेदुद्भ्याम् ॥ ८ ।४। ३४० ॥**

अपभ्रंशे इकारोकाराभ्या परस्यामो हुं हं चादेशौ भवत. ॥

दइवु घडावइ वणि तरुहुँ सउणिहँ पक्क फलाइं ।
सो वरि सुक्खु पइट्ठ ण वि कण्णहि खल-वयणाइं ॥१॥

प्रायोधिकारात् क्वचित्सुपोपि हुं ।

धवलु विसूरइ सामिअहो गरुआ भरु पिक्खेवि ।
हउँ कि न जुत्तउ दुहुँ दिसिहि खण्डइँ दोण्णि करेवि ॥३४०॥

**ङसि-भ्यस्-ङीनां हे -हुं-हयः ॥ ८ । ४ । ३४१ ॥**

अपभ्रंशे इदुद्भ्यां परेषां ङसि भ्यस् ङि इत्येतेषां यथासख्यं हे हुं हि इत्येते त्रय आदेशा भवन्ति ॥

ङसेर्हे ॥

गिरिहे सिलायलु तरुहे फलु घेप्पइ नीसावँन्नु ।
घरु मेल्लेप्पिणु माणुसहं तो वि न रुच्चइ रन्नु ॥१॥

भ्यसो हु ।

तरुहुँ वि वक्कलु फलु मुणि वि परिहणु असणु लहन्ति ।
सामिहुँ एत्तिउ अग्गलउं आयरु भिच्चु गृहन्ति ॥२॥

अह विरल-पहाउ जि कलिहि धम्मु ॥ ३४१॥

**आट्टो णानुस्वारौ ॥ ८ । ४ । ३४२ ॥**

अपभ्रंशे अकारात्परस्य टावचनस्य णानुस्वारावादेशौ भवतः ॥

दइएं पवसन्तेण ॥ ३४२ ॥

**एं चेदुतः ॥ ८ । ४ । ३४३ ॥**

अपभ्रंशे इकारोकाराभ्यां परस्य टावचनस्य एं चकारात् णानुस्वारौ च भवन्ति ॥ ए ।

अग्गिएँ उण्हउ होइ जगु वाएँ सीअलु तेवँ ।
जो पुणु अग्गि सीअला तसु उण्हत्तणु केवँ ॥१॥

णानुस्वारौ ।

विप्पिअ-आरउ जइ वि पिउ तो वि तं आणहि अज्जु ।
अग्गिण दड्ढा जइ वि घरु तो तें अग्गि कज्जु ॥

एवमुकारादप्युदाहार्याः ॥३४३॥

**स्यम्-जस्-शसां लुक् ॥८ ।४। ३४४ ॥**

अपभ्रंशे सि अम् जस् शस् इत्येतेषां लोपो

भवति ॥ एइ ति घोडा एह थलि । [ ३३०.४ ] इत्यादि । अत्र स्यम्जसां लोपः ॥

जिवँ जिवँ वंकिम लोअणहं णिरु सामलि सिक्खेइ ।
तिवँ तिवँ वम्महु निअय-सर खर-पत्थरि तिक्खेइ ।१।

अत्र स्यम्शसां लोप. ॥ ३४४ ॥

## षष्ठ्याः ॥ ८ । ४ । ३४५ ॥

अपभ्रंशे षष्ठ्या विभक्त्या. प्रायो लुग् भवति

सगर सएँहिँ जु वण्णिअइ देक्खु अम्हारा कन्तु ।
अइमत्तहं चत्तङ्कुसह गय कुम्भइं दारन्तु ॥ १ ॥

पृथग्योगो लक्ष्यानुसारार्थः ॥ ३४५ ॥

## आमन्त्र्ये जसो होः ॥८ ।४ । ३४६ ॥

अपभ्रंशे आमन्त्र्येर्थे वर्तमानान्नाम्नः परस्य जसो हो इत्यादेशो भवति । लोपापवादः—

तरुणहो तरुणिहो मुणिउ मइँ करहु म अप्पहोँ घाउ ॥ ३४६ ॥

## भिस्सुपोहिँ ॥ ८ । ४ । ३४७ ॥

अपभ्रंशे भिस्सुपो· स्थाने हिँ इत्यादेशो भवति ॥ गुणहिँ न सपइ कित्ति पर [३३५.१] ॥

सुप् ॥ भाईरहि जिवँ भारइ मग्गेहिँ तिहिँ वि पयट्टइ ॥ ३४७ ॥

## स्त्रियां जस्शसोरुदोत् ॥ ८ ।४ ।३४८॥

अपभ्रंशे स्त्रियां वर्तमानान्नाम्नः परस्य जसः शसश्च प्रत्येकमुदोतावादेशौ भवत. । लोपापवादौ जस. । अगुलिउ जज्जरियाउ नहेण ॥[३३३.१] शसः । सुन्दर-सव्वङ्गाउ विलासिणीओ पेच्छन्ताण ॥

वचनभेदान्न यथासख्यम् ॥३४८ ॥

## ट ए ॥ ८ । ४ । ३४९ ॥

अपभ्रंशे स्त्रियां वर्तमानान्नाम्नः परस्याष्टायाः स्थाने ए इत्यादेशो भवति ॥

निअ-मुह-करहिँ वि मुद्ध कर अन्धारइ पडिपेक्खइ ।
ससि-मण्डल-चन्दिमएँ पुणु काइं न दूरे देक्खइ ॥१॥
जहि मरगय-कन्तिएँ सवलिअं ॥ ३४९ ॥

## ङस्-ङस्योर्हे ॥ ८ । ४ । ३५० ॥

अपभ्रंशे स्त्रियां वर्तमानान्नाम्न. परयोर्ङस् ङसि इत्येतयोर्हे इत्यादेशो भवति ॥ ङसः ।

तुच्छ-मज्झहे तुच्छ-जम्पिरहे ।
तुच्छच्छ-रोमावलिहे तुच्छ-राय तुच्छयर-हासहे ।
पिय-वयणु अलहन्तिअहे तुच्छकाय-वम्मह-निवासहे ।
अन्नु जु तुच्छउँ तहे धणहे तं अक्खणह न जाइ ।
कटरि थणंतरु मुद्धडहे जे मणु विच्चि ण माइ ॥१॥

ङसेः ।

फोडेन्ति जे हियडउँ अप्पणउँ ताहँ पराई कवण घण ।
रक्खेज्जहु लोअहो अप्पणा बालहे जाया विसम थण ॥ ॥३५०॥

## भ्यसामोर्हुः ॥ ८ । ४ । ३५१ ॥

अपभ्रंशे स्त्रिया वर्तमानान्नाम्नः परस्य भ्यस आमश्च हु इत्यादेशो भवति ॥

भल्ला हुआ जु मारिआ बहिणि महारा कन्तु ।
लज्जेज्जन्तु वयंसिअहु जइ भग्गा घरु एन्तु ॥१॥

वयस्याभ्यो वयस्यानां वेत्यर्थः ॥ ३५१ ॥

## ङेर्हि ॥८।४।३५२॥

अपभ्रंशे स्त्रियां वर्तमानान्नाम्नः परस्य ङे· सप्तम्येकवचनस्य हि इत्यादेशो भवति ॥

वायसु उड्डावन्तिअए पिउ दिट्ठउ सहसत्ति ।
अद्धा वलया महिहि गय अद्धा फुट्ट तडत्ति ॥३५२॥

## क्लीबे जस्शसोरिं ॥८।४।३५३॥

अपभ्रंशे क्लीवे वर्तमानान्नाम्नः परयोर्जस् शसोः इं इत्यादेशो भवति ॥

कमलइँ मेल्लवि अलि-उलइं करि-गण्डाइँ महन्ति ।
असुलहमेच्छण जाहँ भलि ते ण वि दूर गणन्ति ॥३५३॥

**कान्तस्यात उं स्यमोः ॥८।४।३५४॥**

अपभ्रंशे क्लीवे वर्तमानस्य ककारान्तस्य नाम्नो योकारस्तस्य स्यमोः परयोः उं इत्यादेशो भवति ॥
अन्नु जु तुच्छउँ तहेँ धणहे (३५०.१) ॥
भग्गउँ देक्खिवि निअय-बलु बलु पसरिअउँ परस्सु ।
उम्मिल्लइ ससि रहे जिवँ करि करवालु पियस्सु ॥३५४॥

**सर्वादेर्ङसेर्हां ॥८।४।३५५॥**

अपभ्रंशे सर्वादेरकारान्तात्परस्य ङसेर्हां इत्यादेशो भवति ॥ जहां होन्तउ आगदो । तहां होन्तउ आगदो । कहां होन्तउ आगदो ॥३५५॥

**किमो डिहे वा ॥८।४।३५६॥**

अपभ्रंशे किमोकारान्तात्परस्य ङसेर्डिहे इत्यादेशो वा भवति ॥

जइ तहे तुट्टउ नेहडा मइँ सहुँ न वि तिल–तार ।
तं किहे वङ्केहि लोअणेहि जोइज्जउँ सय–वार ॥३५६॥

**ङेर्हिं ॥८।४।३५७॥**

अपभ्रंशे सर्वादेरकारान्तात्परस्य ङेः सप्तम्येकवचनस्य हिं इत्यादेशो भवति ॥

जहिँ कप्पिज्जइ सरिण सरु छिज्जइ खग्गिण खग्गु ।
तहिँ तेहइ भड-घड-निवहि कन्तु पयासइ मग्गु ॥१॥
एक्कहि अक्खिहि सावणु अन्नहि भद्दवउ
माहउ महिअल-सत्थरि गण्ड-त्थले सरउ ।
अङ्गिहिं गिम्ह सुहच्छी-तिल वणि मग्गसिरु
तहे मुद्धहे मुह पङ्कइ आवासिउ सिसिरु ॥२॥
हिअडा फुट्टि तड त्ति करि कालक्खेवे काइं ।
देक्खउँ हय-विहि कहिँ ठवइ पइँ विणु दुक्ख-सयाइं
॥३५७॥

**यत्तत्किंभ्यो ङसो डासुर्न वा ॥८।४।३५८॥**

अपभ्रंशे यत्तत्किम् इत्येतेभ्योकारान्तेभ्यः परस्य ङसो डासु इत्यादेशो वा भवति ॥

कन्तु महारउ हलि सहिए निच्छइँ रूसइ जासु ।
अत्थिहिं सत्थिहि हत्थिहिँ वि ठाउ वि फेडइ तासु ॥
जीविउ कासु न वल्लहउँ धणु पुणु कासु न इट्ठु ।
दोण्णि वि अवसर-निवडिअइं तिण-सम गणइ विसिट्ठु
॥३५८॥

**स्त्रियां डहे ॥८।४।३५९॥**

अपभ्रशे स्त्रीलिङ्गे वर्तमानेभ्यो यत्तत्किभ्यः परस्य ङसो डहे इत्यादेशो वा भवति ॥ जहे केरउ । तहे केरउ । कहे केरउ ॥३५९॥

**यत्तदः स्यमोर्ध्रुं त्रं ॥८।४।३६०॥**

अपभ्रशे यत्तदोः स्थाने स्यमोः परयोर्यथासंख्यं ध्रुं त्रं इत्यादेशौ वा भवतः ॥

प्रङ्गणि चिट्ठदि नाहु ध्रुं त्रं रणि करदि न भ्रन्ति ॥१॥

पक्षे । तं बोल्लिअइ जु निव्वहइ ॥३६०॥

**इदम इमुः क्लीबे ॥८।४।३६१॥**

अपभ्रंशे नपुंसकलिङ्गे वर्तमानस्येदमः स्यमोः परयोः इमु इत्यादेशो भवति ॥ इमु कुलु तुह तणउं । इमु कुलु देक्खु ॥३६१॥

**एतदः स्त्री-पुं क्लीबे एह एहो एहु ॥८।४।३६२॥**

अपभ्रशे स्त्रियां पुंसि नपुंसके वर्तमानस्यैतदः स्थाने स्यमोः परयोर्यथासख्यम् एह एहो एहु इत्यादेशा भवन्ति ॥

एह कुमारी एहो नरु एहु मणोरह-ठाणु ।
एहउँ वढ चिन्तन्ताहं पच्छइ होइ विहाणु ॥
॥३६२॥

एइर्जस्-शसोः ॥८।४।३६३॥

अपभ्रंशे एतदो जस्-शसोः परयोः एइ इत्यादेशो भवति ॥ एइ ति घोडा एह थलि [३३०. ४] ॥ एइ पेच्छ ॥३६३॥

अदस ओइ ॥८।४।३६४॥

अपभ्रंशे अदसः स्थाने जस् शसोः परयोः ओइ इत्यादेशो भवति ॥

जइ पुच्छह घर वड्डाइं तो वड्डा घर ओइ ।
विहलिअ- जण-अब्भुद्धरणु कन्तु कुडीरइ जोइ ॥१॥

अमूनि वर्तन्ते पृच्छ वा ॥३६४॥

इदम आयः ॥८।४।३६५॥

अपभ्रंशे इदम्शब्दस्य स्यादौ आय इत्यादेशो भवति ॥

आयइँ लोअहो लोअणइँ जाई सरइँ न भन्ति ।
अप्पिएँ दिट्ठइ मउलिअहि पिएँ दिट्ठइ विहसन्ति ॥१॥
सोसउ म सोसउ च्चिअ उवही वडवानलस्स कि तेण ।
जं जलइ जले जलणो आएण वि कि न पज्जत्तं ॥२॥
आयहो दड्ढ-कलेवरहो जं वाहिउ तं सारु ।
जइ उट्ठब्भइ तो कुहइ अह डज्झइ तो छारु ॥३॥

॥३६५॥

सर्वस्य साहो वा ॥८।४।३६६॥

अपभ्रंशे सर्वशब्दस्य साह इत्यादेशो वा भवति ॥

साहु वि लोउ तडप्फडइ वड्डत्तणहो तणेण ।
वड्डप्पणु परि पाविअइ हत्थि मोकलडेण ॥१॥

पक्षे । सव्वु वि ॥३६६॥

किमः काइं-कवणौ वा ॥८।४।३६७॥

अपभ्रंशे किमः स्थाने काइं कवण इत्यादेशौ वा भवतः ॥

जइ न सु आवइ दूइ घरु काइँ अहो मुहुँ तुज्झु ।
वयणु जु खण्डइ तउ सहिए सो पिउ होइ न मज्झु ॥१॥

काइँ न दूरे देक्खइ ॥ [३३९. १]

फोडेन्ति जे हिअडउँ अप्पणउँ ताहँ पराइ कवण घृण ।
रक्खेज्जहु लोअहो अप्पणा बालहे जाया विसम थण॥२॥
सुपुरिस कङ्गुहे अणुहरहि भण कज्जे कवणेण ।
जिवँ जिवँ वड्डत्तणु लहहि तिवँ तिवँ नवहि सिरेण ॥३॥

पक्षे ।

जइ ससणेही तो मुइअ अह जीवइ निन्नेह ।
बिहि वि पयारेहि गइअ धण कि गज्जहि खल मेह ॥४॥

॥३६७॥

युष्मदः सौ तुहुं ॥८।४।३६८॥

अपभ्रंशे युष्मदः सौ परे तुहुं इत्यादेशो भवति ॥

भमर म रुणझुणि रण्णडइ सा दिसि जोइ म रोइ ।
सा मालइ देसन्तरिअ जसु तुहुँ मरहि विओइ ॥३६८॥

जस्-शसोस्तुम्हे तुम्हइं ॥८।४।३६९॥

अपभ्रंशे युष्मदो जसि शसि च प्रत्येकं तुम्हे तुम्हइं इत्यादेशौ भवतः ॥ तुम्हे तुम्हइं जाणह । तुम्हे तुम्हइं पेच्छइ ॥ वचनभेदो यथासंख्यनिवृत्त्यर्थः ॥३६९॥

टा-ङ्यमा पइं तइं ॥८।४।३७०॥

अपभ्रशे युष्मदः टा ङि अम् इत्येतैः सह पइं तइं इत्यादेशौ भवतः ॥ टा ।

पइँ मुक्काहँ वि वर-तरु फिट्टइ पत्तत्तणं न पत्ताणं ।
तुह पुणु छाया जइ होज्ज कह वि ता तेहिँ पत्तेहिं ॥१॥
महु हिअउँ तइ ताए तुहुँ स वि अन्ने विनडिज्जइ ।
पिअ काइँ करउँ हउँ काइँ तुहुँ मच्छे मच्छु गिलिज्जइ ॥२॥

ङिना ।

पइँ मइँ वेहिँ वि रण-गयहिं को जयसिरि तक्केइ ।
केसहिँ लेप्पिणु जम-घरिणि भण सुहु को थक्केइ ॥३॥

एवं तइं ॥ अमा ।

पइँ मेल्लन्तिहे महु मरणु मइँ मेल्लन्तहो तुज्झु ।
सारस जसु जो वेग्गला सो वि कृदन्तहो सज्झु ॥४॥

एवं तइं ॥३७०॥

### भिसा तुम्हेंहिं ॥८।४।३७१॥

अपभ्रंशे युष्मदो भिसा सह तुम्हेहि इत्यादेशो भवति ॥

तुम्हेहि अम्हेहि जं किअउं दिट्ठउँ बहुअ-जणेण ।
तं तेवड्डउ समर-भरु निज्जिउ एक्क-खणेण ॥३७१॥

### ङसि-ङस्भ्यां तउ तुज्झ तुध्र ॥८।४।३७२॥

अपभ्रंशे युष्मदो ङसिङस्भ्यां सह तउ तुज्झ तुध्र इत्येते त्रय आदेशा भवन्ति ॥ तउ होन्तउ आगदो । तुज्झ होन्तउ आगदो । तुध्र होन्तउ आगदो ॥ ङसा ॥

तउ गुण-सपइ तुज्झ मदि तुध्र अणुत्तर खन्ति ।
जइ उप्पत्तिं अन्न जण महि-मंडलि सिक्खन्ति ॥३७२॥

### भ्यसाम्भ्यां तुम्हहं ॥८।४।३७३॥

अपभ्रंशे युष्मदो भ्यस् आम् इत्येताभ्यां सह तुम्हहं इत्यादेशो भवति ॥ तुम्हहं होन्तउ आगदो । तुम्हहं केरउं धणु ॥३७३॥

### तुम्हासु सुपा ॥८।४।३७४॥

अपभ्रंशे युष्मदः सुपा सह तुम्हासु इत्यादेशो भवति ॥ तुम्हासु ठिअं ॥३७४॥

### सावस्मदो हउं ॥ ८ । ४ । ३७५ ॥

अप्रभ्रंशे अस्मदः सौ परे हउ इत्यादेशो भवति॥ तसु हउं कलिजुगि दुल्लहहो [३३८.१]॥ ३७५ ॥

### जस्-शसोरम्हे अम्हइं ॥८ । ४ । ३७६ ॥

अपभ्रंशे अस्मदो जसि शसि च परे प्रत्येकम् अम्हे अम्हइं इत्यादेशौ भवतः ॥

अम्हे थोवा रिउ बहुअ कायर एम्व भणन्ति ।
मुद्धि निहालहि गयण-यलु कइ जण जोण्ह करन्ति ॥१॥

अम्वणु लाइवि जे गया पहिअ पराया के वि ।
अवस न सुअहि सुहच्छिअहिं जिवँ अम्हइ तिवँ ते वि ॥२॥

अम्हे देक्खइ । अम्हइं देक्खइ । वचनभेदो यथासंख्यानिवृत्त्यर्थः ॥३७६॥

### टा-ङ्यमा मइं ॥ ८ । ४ । ३७७ ॥

अपभ्रंशे अस्मदः टा ङि अम् इत्येतैः सह मइं इत्यादेशो भवति ॥ टा ।

मइँ जाणिउँ पिअ विरहिअहं क वि धर होइ विआलि ।
णवर मिअङ्कु वि तिह तवइ जिह दिणयरु खय-गालि ॥१॥

ङिना । पइं मइं वेहि वि रण-गयहि [३७०.४]
अमा, मइं मेल्लन्तहो तुज्झु [३७९.३] ॥३७७॥

### अम्हेहिं भिसा ॥ ८ । ४ । ३७८ ॥

अपभ्रंशे अस्मदो भिसा सह अम्हेहि इत्यादेशो भवति ॥ तुम्हेहिँ अम्हेहिँ जं किअउँ [३७१.१] ॥३७८॥

### महु मज्झु ङसि-ङस्भ्याम् ॥८।४।३७९॥

अपभ्रंशे अस्मदो ङसिना ङसा च सह प्रत्येकं महु मज्झु इत्यादेशौ भवतः ॥ महु होन्तउ गदो । मज्झु होन्तउ गदो ॥ङसा॥

महु कन्तहो वे दोसडा हेल्लि म झङ्खहि आलु ।
देन्तहो हउं पर उव्वरिअ जुज्झन्तहो करवालु ॥१॥

जइ भग्गा पारक्कडा तो सहि मज्झु पिएण ।
अह भग्गा अम्हहं तणा तो ते मारिअडेण ॥२॥

॥३७९॥

प्रिय एम्वहिँ करे सेल्लु करि छड्डहि तुहुँ करवालु ।
जं कावालिय बप्पुडा लेहिँ अभग्गु करवालु ॥३॥
पक्षे । सुमरहि । इत्यादि ॥३८७॥

### वत्स्यर्ति स्यस्य सः ॥८।४।३८८॥

अपभ्रंशे भविष्यदर्थविषयस्य त्यादेः स्यस्य सो वा भवति ॥

दिअहा जन्ति झडप्पडहि पडहिँ मनोरह पच्छि ।
जं अच्छइ तं माणिअइ होसइ करतु म अच्छि ॥१॥
पक्षे । होहिइ ॥३८८॥

### क्रियेः कीसु ॥८।४।३८९॥

क्रिये इत्येतस्य क्रियापदस्यापभ्रंशे कीसु इत्यादेशो वा भवति ॥

सन्ता भोग जु परिहरइ तसु कन्तहो बलि कीसु ।
तसु दइवेण वि मुण्डियउँ जसु खल्लिहडउँ सीसु ॥१॥

पक्षे । साध्यमानावस्थात् क्रिये इति संस्कृतशब्दादेष प्रयोगः । बलि किज्जउँ सुअणस्सु [३३८.१] ॥३८९॥

### भुवः पर्याप्तौ हुच्चः ॥८।४।३९०॥

अपभ्रंशे भुवो धातोः पर्याप्तावर्थे वर्तमानस्य हुच्च इत्यादेशो भवति ॥३९०॥

अइतुंगत्तणु ज थणह सो छेयउ न हु लाहु ॥
सहि जइ केवँइ तुडि-वसेण अहरि पहुच्चइ नाहु ॥१॥

### ब्रूगो ब्रुवो वा ॥८।४।३९१॥

अपभ्रंशे ब्रूगो धातोर्ब्रुव इत्यादेशो वा भवति ॥ ब्रुवह सुहासिउ कि पि ॥ पक्षे ।

इत्तउँ ब्रोप्पिणु सउणि ठिउ पुणु दूसासणु ब्रोप्पि ।
तो हउँ जाणउँ एहो हरि जइ महु अग्गइ ब्रोप्पि ॥
॥३९१॥

### व्रजेर्वुञः ॥८।४।३९२॥

अपभ्रंशे व्रजतेर्धातोर्वुञ इत्यादेशो भवति ॥ वुञइ । वुञेप्पि । वुञेप्पिणु ॥३९२॥

### दृशेः प्रस्सः ॥८।४।३९३॥

अपभ्रंशे दृशेर्धातोः प्रस्स इत्यादेशो भवति ॥ प्रस्सदि ॥३९३॥

### ग्रहेर्गृण्हः ॥८।४।३९४॥

अपभ्रंशे ग्रहेर्धातोर्गृण्ह इत्यादेशो भवति ॥ पढ गृण्हेप्पिणु व्रतु ॥३९४॥

### तक्ष्यादीनां छोल्लादयः ॥८।४।३९५॥

अपभ्रंशे तक्षिप्रभृतीनां धातूनां छोल्ल इत्यादय आदेशा भवन्ति ॥

जिवँ तिव तिक्खा लेवि कर जइ ससि छोल्लिज्जन्तु ।
तो जइ गोरिहे मुह-कमलि सरिसिम का वि लहन्तु ॥

आदिग्रहणाद् देशीपु ये क्रियावचना उपलभ्यन्ते ते उदाहार्याः ॥

चूडुल्लउ चुण्णीहोइ सइ मुद्धि कवोलि निहित्तउ ।
सासानल-जाल-झलक्किअउ वाह-सलिल-ससित्तउ ॥२॥
अब्भडवंचिउ बे पयइं पेम्मु निअत्तइ जावँ ।
सव्वासण-रिउ-सभवहो कर परिअत्ता तावँ ॥३॥
हिअइ खुडुक्कइ गोरडी गयणि घुडुक्कइ मेहु ।
वासा-रत्ति-पवासुअहं विसमा सकडु एहु ॥४॥
अम्मि पओहर वज्जमा निच्चु जे समुह थन्ति ।
महु कन्तहो समरङ्गणइ गय-घड भज्जिउ जन्ति ॥५॥
पुत्ते जाएँ कवणु गुणु अवगुणु कवणु मुएण ।
जा बप्पीकी भुहडी चम्पिज्जइ अवरेण ॥६॥
तं तेत्तिउ जलु सायरहो सो तेवडु वित्थारु ।
तिसहे निवारणु पलु वि न वि पर धुट्टुअइ असारु॥
॥३९५॥

### अनादौ स्वरादसंयुक्तानां क-ख-त-थ-प-फां ग-घ-द-ध-ब-भाः ॥ ८ । ४ । ३९६ ॥

अपभ्रंशे पदादौ वर्तमानानां स्वरात्परेषामसंयुक्तानां कखतथपफां स्थाने यथासंख्यं गघदधबभाः प्रायो भवन्ति ॥

कस्य गः ।

जं दिट्ठउँ सोम-ग्गहणु असइहिँ हसिउँ निसङ्कु ।
पिअ-माणुस-विच्छोह-गरु गिलि गिलि राहु मयङ्कु ॥

खस्य घ. ।

अम्मीए सत्थावत्थेहि सुघिँ चिन्तिज्जइ माणु ।
पिए दिट्ठे हल्लोहलेण को चेअइ अप्पाणु ॥ २ ॥

तथपफाना दधवभा ।

सवधु करेप्पिणु कधिदु मइँ तसु पर सभलउँ जम्मु ।
जासु न चाउ न चारहडि न य पम्हट्ठउ धम्मु ॥३॥

अनादाविति किम् ? सवधु करेप्पिणु । अत्र कस्य गत्वं न भवति ॥ स्वरादिति किम् ? गिलि गिलि राहु मयङ्कु ॥ असयुक्तानामिति किम् ? एक्कहि अक्खिहिं सावणु [ ३५७.२ ] ॥ प्रायोधिकारात्क्वचिन्न भवति ।

जइ केवइ पावीसु पीउ अकिआ कुड्ड करीसु ।
पाणिउ नवइ सरावि जिवँ सव्वङ्गें पइसीसु ॥४॥
उअ कणिआरु पफुल्लिअउ कञ्चण-कन्ति-पयासु ।
गोरी-वयण-विणिज्जिअउ नं सेवइ वण-वासु ॥३९६॥

## मोनुनासिको वो वा ॥८।४।३९७॥

अपभ्रंशे ऽनादौ वर्तमानस्यासयुक्तस्य मकारस्य अनुनासिको वकारो वा भवति ॥ **कवँलु कमलु** । भवँरु भमरु ॥ लाक्षणिकस्यापि । जिवँ । तिवँ जेवँ । तेवँ ॥ अनादावित्येव । मयणु ॥ असयुक्तस्येत्येव॥ तसु पर सभलउ जम्मु ॥ [ ३९६.३ ] ३९७॥

## वाधो रो लुक् ॥ ८ । ४ । ३९८ ॥

अपभ्रंशे सयोगादधो वर्तमानो रेफो लुग् वा भवति ॥३९८॥ जइ केवँइ पावीसु पिउ ॥ [ ३९६. ४ ]पक्षे

जइ भग्गा पारक्कडा तो सहि मज्झु प्रियेण ॥ ॥३९८॥

## अभूतोपि क्वचित् ॥ ८ । ४ । ३९९ ॥

अपभ्रंशे क्वचिदविद्यमानोपि रेफो भवति ॥

व्रास महारिसि एँउ भणइ जइ सुइ-सत्थु पमाणु ।
मायहँ चलण नवन्ताहं दिवि दिवि गङ्गा-ण्हाणु ॥१॥

क्वचिदिति किम् ? वासेण वि भारह खम्भि बद्ध ॥ ॥३९९॥

## आपद्विपत्संपदां द इः ॥८।४।४००॥

अपभ्रंशे आपद् विपद् सपद् इत्येतेषा दकारस्य इकारो भवति ॥ ॥

अणउ करन्तहो पुरिसहो आवइ आवइ ।
विवइ । सपइ ॥ प्रायोधिकारात् । गुणहि न संपय कित्ति पर [ ३३५.१ ] ॥४००॥

## कथं-यथा-तथां थादेरेमेमेहेधा डितः ॥ ८ । ४ । ४०१ ॥

अपभ्रंशे कथं यथा तथा इत्येतेषां थादेरवयवस्य प्रत्येकम् एम इम इह इध इत्येते डितश्चत्वार आदेशा भवन्ति ॥

केम समप्पउ दुट्टु दिणु किध रयणी छुडु होइ ।
नव-वहु-दंसण-लालसउ वहइ मणोरह सोइ ॥१॥
ओ गोरी-मुह-निज्जिअउ वद्दलि लुक्कु मियङ्कु ।
अन्नु वि जो परिहविय-तणु सो किवँ भवँइ निसङ्कु ॥
बिम्बाहरि तणु रयण-वणु किह ठिउ सिरिआणन्द ।
निरुवम-रसु पिए पिअवि जणु सेसहोँ दिण्णी मुद्द ॥
भण सहि निहुअउँ तेवँ मइं जइ पिउ दिट्टु सदोसु ।
जेवँ न जाणइ मज्झु मणु पक्खावडिअं तासु ॥४॥

जिवँ जिवँ वङ्किम लोअणहं ॥ तिवँ तिवँ वम्महु निअय-सर [३४४.१] ॥

मइँ जाणिउ प्रिय विरहिअहं क वि धर होइ विआलि
नवर मिअङ्कु वि तिह तवइ जिह दिणयरु खय-गालि ॥
[३७७.९] एवं तिध-जिधावुदाहार्यौ ॥४०१॥

**यादृक्तादृक्कीदृगीदृशां दादेर्डेहः ॥८।४।४०२॥**

अपभ्रंशे यादृगादीनां दादेरवयवस्य डित् एह इत्यादेशो भवति ॥

मइं भणिअउ बलिराय तुहुं केहउ मग्गण एहु ।
जेहु तेहु न वि होइ वढ सइँ नारायणु एहु ॥१॥
॥४०२॥

**अतां डइसः ॥८।४।४०३॥**

अपभ्रंशे यादृगादीनामदन्तानां यादृगतादृग-कीदृशेदृगानां दादेरवयवस्य डित् अइस इत्यादेशो भवति ॥ जइसो । तइसो । कइसो । अइसो ॥४०३॥

**यत्र-तत्रयोस्त्रस्य डिदेत्थ्वत्तु ॥८।४।४०४॥**

अपभ्रंशे यत्रतत्रशब्दयोस्त्रस्य एत्थु अत्तु इत्येतौ डितौ भवतः ॥

जइ सो घडदि पयावदी केत्थु वि लेप्पिणु सिक्खु ।
जेत्थु वि तेत्थु वि एत्थु जगि भण तो तहि सारिक्खु ॥
जत्तु ठिदो । तत्तु ठिदो ॥४०४॥

**एत्थु कुत्रात्रे ॥८।४।४०५॥**

अपभ्रंशे कुत्र अत्र इत्येतयोस्त्रशब्दस्य डित् एत्थु इत्यादेशो भवति ॥ केत्थु वि लेप्पिणु सिक्खु ॥ जेत्थु वि तेत्थु वि एत्थु जगि ॥ [४०४.१] ॥४०५॥

**यावत्तावतोर्वादेर्म उं महिं ॥८।४।४०६॥**

अपभ्रंशे यावत्तावदित्यव्यययोर्वकारादेरवयवस्य म उं महि इत्येते त्रय आदेशा भवन्ति ॥

जाम न निवडइ कुम्भ यडि सीह-चवेड-चडक्क ।
ताम समत्तहँ मयगलहं पइ पइ वज्जइ ढक्क ॥१॥
तिलहँ तिलत्तणु ताउँ पर जाउँ न नेह गलन्ति ।
नेहि पणट्ठइ तेज्जि तिल तिल फिट्टवि खल होन्ति ॥
जामहिँ विसमी कज्ज-गइ जीवहँ मज्झे एइ ।
तामहिं अच्छउ इयरु जणु सुअणु वि अन्तरु देइ ॥३॥
॥४०६॥

**वा यत्तदोतोर्डेवडः ॥८।४।४०७॥**

अपभ्रंशे यद् तद् इत्येतयोरत्वन्तयोर्यावत्तावतो-र्वकारादेरवयवस्य डित् एवड इत्यादेशो वा भवति ॥

जेवडु अन्तरु रावण-रामहँ तेवडु अन्तरु पट्टण-गामहँ ॥
पक्षे । जेत्तुलो । तेत्तुलो ॥४०७॥

**वेदं-किमोर्यादेः ॥ ८ । ४ । ४०८ ॥**

अपभ्रंशे इदम् किम् इत्येतयोरत्वन्तयोरियत्कि-यतोर्यकारादेरवयवस्य डित् एवड इत्यादेशो वा भवति ॥ एवडु अन्तरु । केवडु अन्तरु ॥ पक्षे । एत्तुलो । केत्तुलो ॥ ४०८ ॥

**परस्परस्यादिरः ॥ ८ । ४ । ४०९ ॥**

अपभ्रंशे परस्परस्यादिरकारो भवति ॥

ते मुग्गडा हराविआ जे परिविट्ठा ताहं ।
अवरोप्परु जोअन्ताहं सामिउ गञ्जिउ जाहं ॥१॥
॥४०९॥

**कादि-स्थैदोतोरुच्चार-लाघवम् ॥८।४।४१०॥**

अपभ्रंशे कादिषु व्यञ्जनेषु स्थितयोः ए ओ इत्येतयोरुच्चारणस्य लाघवं प्रायो भवति ॥

सुधेँ चिन्तिज्जइ माणु [ ३९६.२ ] ॥
तसु हउँ कलि जुगि दुल्लहहो [३३८.१] ॥४१०॥

**पदान्ते उं-हुं-हिं-हंकाराणाम् ॥ ८ । ४ । ४११॥**

अपभ्रंशे पदान्ते वर्तमानानां उं हुं हिं हं इत्ये-तेषां उच्चारणस्य लाघवं प्रायो भवति ॥

अन्नु जु तुच्छउँ तहे धणहे [ ३५०.१] ॥
बलि किज्जउँ सुअणस्सु [ ३३८.१ ] ॥
दइउ घडावइ वणि तरुहुं [ ३४०.१ ] ॥
तरुहुँ वि वक्कलु [ ३४१.२ ] ॥
खग्ग-विसाहिउ जहिं लहहुं [ ३८६.१ ]
तणहँ तइज्जी भङ्गि न वि [३३९.१] ॥४११॥

**म्हो म्भो वा ॥ ८ । ४ । ४१२ ॥**

अपभ्रंशे म्ह इत्यस्य स्थाने म्भ इति मकारा-

क्रान्तो भकारो वा भवति ॥ म्ह इति पक्ष्म-श्म-ष्म-स्म-ह्मां म्हः [ २.७४ ] इति प्राकृतलक्षणविहितोत्र गृह्यते । संस्कृते तदसंभवात् । गिम्भो सिम्भो ॥

वंम्भ ते विरला के वि नर जे सव्वङ्ग-छइल्ल ।
जे वङ्का ते वञ्चयर जे उज्जुअ ते बइल्ल ॥
॥४१२॥

**अन्यादृशोन्नाइसावराइसौ ॥८।४।४१३॥**

अपभ्रंशे अन्यादृशशब्दस्य अन्नाइस अवराइस इत्यादेशौ भवत' ॥ अन्नाइसो । अवराइसो ॥४१३॥

**प्रायसः प्राउ-प्राइव-प्राइम्व-पग्गिम्वाः ॥ ८ । ४ । ४१४ ॥**

अपभ्रंशे प्रायस् इत्येतस्य प्राउ प्राइव प्राइम्व पग्गिम्व इत्येते चत्वार आदेशा भवन्ति ॥

अन्ने ते दीहर लोअण अन्नु तं भुअ-जुअलु ।
अन्नु सु घण-थण हारु तं अन्नु जि मुह-कमलु ।
अन्नु जि केस - कलावु सु अन्नु जि प्राउ विहि
जेण णिअम्बिणि घडिअ स गुण-लायण्ण-णिहि ॥१॥
प्राइव मुणिहँ वि भन्तडी तें मणिअडा गणन्ति ।
अखइ निरामइ परम-पइ अज्ज वि लउ न लहन्ति ॥२॥
अनु जलें प्राइम्व गोरिअहे सहि उव्वत्ता नयण-सर ।
ते संमुह संपेसिआ देन्ति तिरिच्छी घत्त पर ॥३॥
एसी पिउ रूसेसु हउँ रुट्ठी मइँ अणुणेइ ।
पग्गिम्व एइ मणोरहइं दुक्करु दइउ करेइ ॥४॥
॥४१४॥

**वान्यथो ऽनुः ॥ ८ । ४ । ४१५ ॥**

अपभ्रंशे अन्यथाशब्दस्य अनु इत्यादेशो वा भवति ॥

विरहाणल-जाल-करालिअउ पहिउ को वि बुड्डिवि ठिअउ।
अनु सिसिर-कालि-सीअल-जलहु धूमु कहन्तिहु उट्ठिअउ ॥१॥

पक्षे । अन्नह ॥४१५॥

**कुतसः कउ कहन्तिहु ॥ ८ । ४ । ४१६ ॥**

अपभ्रंशे कुतस्शब्दस्य कउ कहन्तिहु इत्यादेशौ भवतः ॥

महु कन्तहो गुट्ठ-ट्ठिअहो कउ झुम्पडा वलन्ति ।
अह रिउ-रुहिरे उल्लवइ अह अप्पणे न भन्ति ॥१॥

धूमु कहन्तिहु उट्ठिअउ [४१५.१] ॥४१६॥

**ततस्तदोस्तोः ॥ ८ । ४ । ४१७ ॥**

अपभ्रंशे ततस् तदा इत्येतयोस्तो इत्यादेशो भवति ॥४१७॥

जइ भग्गा पारक्कडा तो सहि मज्झु पिएण ।
अह भग्गा अम्हहं तणा तो तें मारिअडेण ॥१॥
[ ३७९.२ ] ॥

**एवं-परं-समं-ध्रुवं-मा-मनाक एम्व पर समाणु ध्रुवु मं मणाउं ॥ ८ । ४ । ४१८ ॥**

अपभ्रंशे एवमादीनां एम्वादय आदेशा भवन्ति ॥

एवम एम्व ।

पिय-सगमि कउ निद्दडी पिअहो परोक्खहो केम्व ।
मइँ बिन्नि वि विन्नासिआ निद न एम्व न तेम्व ॥१॥

परमः पर । गुणहि न सपइ कित्ति पर ॥ [३३५.१]

समम: समाणु' ।

कन्तु जु सीहहो उवमिअइ तं महु खण्डिउ माणु ।
सीहु निरक्खय गय हणइ पिउ पय रक्ख समाणु ॥२॥

ध्रुवमो ध्रुवुः ।

चञ्चलु जीविउ ध्रुवु मरणु पिअ रूसिज्जइ काइं ।
होसहिं दिअहा रूसणा दिव्वइँ वरिस सयाइं ॥३॥

मो म । मं धणि करहि विसाउ [ ३८५ १ ] ॥

प्रायोग्रहणात् ।

माणि पणट्ठइ जइ न तणु तो देसडा चइज्ज ।
मा-दुज्जण-कर-पल्लवेहिं दसिज्जन्तु भमिज्ज ॥४॥
लोणु विलिज्जइ पाणिएण अरि खल मेह म गज्जु ।
वालिउ गलइ सु झुम्पडा गोरी तिम्मइ अज्जु ॥५॥

मनाको मणाउं ।

विहवि पणट्ठइ वङ्कुडउ रिद्धिहिं जण-सामन्नु ।
कि पि मणाउं महु पिअहो ससि अणुहरइ न अन्नु ॥६॥
॥४१८॥

**किलाथवा-दिवा-सह नहेः किराहवइ दिवे सहुं नाहिं ॥ ८ । ४ । ४१९ ॥**

अपभ्रंशे किलादीना किरादय आदेशा भवन्ति ॥

किलस्य किरः ॥

किर खाइ न पिअइ न विद्दवइ धम्मि न वेच्चइ रूअडउ ।
इह किवणु न जाणइ जह जमहो खणेण पहुच्चइ दूअडउ

अथवोहवइ । अहवइ न सुवंसहं एह खोडि ॥

प्रायोधिकारात् ।

जाइज्जइ तहिं देसडइ लब्भइ पियहो पमाणु ।
जइ आवइ तो आणिअइ अहवा तं जि निवाणु ॥२॥

दिवो दिवे । दिविदिवि गङ्गा-ण्हाणु ॥ [ ३९९.१ ]

सहस्य सहुं ।

जउ पवसन्ते सहुँ न गय न मुअ विओएँ तस्सु ॥
लज्जिज्जइ संदेसडा दिन्तेहिँ सुहय-जणस्सु ॥३॥

नहेर्नाहि ।

एत्तहे मेह पिअन्ति जलु एत्तहे वडवानल आवट्टइ ।
पेक्खु गहीरिम सायरहो एक्क वि कणिअ नाहि ओहट्टइ ॥
॥४१९॥

**पश्चादेवमेवैवेदानीं-प्रत्युतेतसः पच्छइ एम्वइ जि एम्वहिं पच्चलिउ एत्तहे ॥ ८ । ४ । ४२० ॥**

अपभ्रंशे पश्चादादीना पच्छइ इत्यादय आदेशा भवन्ति ॥ पश्चातः । पच्छइ । पच्छइ होइ विहाणु [३६२.१] ॥ एवमेवस्य एम्वइ । एम्वइ सुरउ समत्तु [३३२.२] ॥ एवस्य जिः ।

जाउ म जन्तउ पल्लवह देक्खउँ कइ पय देइ ।
हिअइ तिरिच्छी हउँ जि पर पिउ डम्बरइँ करेइ ॥१॥

इदानीम एम्वहिं ।

हरि नच्चाविउ पङ्गणइ विम्हइ पाडिउ लोउ ।
एम्वहि राह-पओहरहं जं भावइ तं होउ ॥२॥

प्रत्युतस्य पच्चलिउ ।

साव-सलोणी गोरडी नवखी क वि विस-गण्ठि ।
भडु पच्चलिउ सो मरइ जासु न लग्गइ कण्ठि ॥३॥

इतस एत्तहे । एत्तहे मेह पिअन्ति जलु [४१९.४]
॥४२०॥

**विषण्णोक्त-वर्त्मनो वुन्न-वुत्त-विच्चं ॥८।४।४२१॥**

अपभ्रंशे विषण्णादीनां वुन्नादय आदेशा भवन्ति ॥

विषण्णस्य वुन्नः ।

मइँ वुत्तउ तुहुँ धुरु धरहि कसरेहिं विगुत्ताइं ।
पइँ विणु धवल न चडइ भरु एम्वइ वुन्नउ काइं ॥१॥

उक्तस्य वुत्त । मइं वुत्तउं [ ४२१.१ ] ॥

वर्त्मनो विच्च. । जे मणु विच्चि न माइ [३५०·१]
॥४२१॥

**शीघ्रादीनां वहिल्लादयः ॥ ८ । ४ । ४२२ ॥**

अपभ्रंशे शीघ्रादीनां वहिल्लादय आदेशा भवन्ति ॥

एक्कु कइअह वि न आवही अन्नु वहिल्लउ जाहि ।
मइँ मित्तडा प्रमाणिअउ पइँ जेहउ खलु नाहिं ॥१॥

झकटस्य घङ्घल· ।

जिवँ सुपुरिस तिवँ घङ्घलइं जिवँ नइ तिवँ वलणाइं ।
जिवँ डोङ्गर तिवँ कोट्टरइं हिआ विसूरहि काइं ॥२॥

अस्पृश्यसंसर्गस्य विट्टाल. ।

जे छड्डेविणु रयणनिहि अप्पउँ तडि घल्लन्ति ।
तहं सङ्खहं विट्टालु परु फुक्किज्जन्त भमन्ति ॥ ३ ॥

भयस्य द्रवक्कः ।

दिवेहि विढत्तउँ खाहि वढ सचि म एक्कु वि द्रम्मु ।
को वि द्रवक्कउ सो पडइ जेण समप्पइ जम्मु ॥४॥

आत्मीयस्य अप्पणः । फोडेन्ति जे हिअडउं अप्पणउ ॥ [ ३६७.२ ] दृष्टेर्द्रेहिः । एक्कमेक्कउं जइ वि जोएदि हरि सुट्ठु सव्वायरेण ॥
तो वि द्रेहि जहिं कहिं वि राही ॥
को सक्कइ संवरेवि दड्ढ-नयणा नेहिं पलुट्टा ॥५॥

गाढस्य निच्चट्टः ॥

विहवे कस्सु थिरत्तणउं जोव्वणि कस्सु मरट्टु ।
सो लेखडउ पठाविअइ जो लग्गइ निच्चट्टु ॥६॥

साधारणस्य सड्ढल.

कहिँ ससहरु कहिँ मयरहरु कहिँ बरिहिणु कहिँ मेहु ।
दूर-ठिआह वि सज्जणहं होइ असड्ढलु नेहु ॥

कौतुकस्य कोड्डः ।

कुञ्जरु अन्नहँ तरु-अरह कुड्डेण घल्लइ हत्थु ।
मणु पुणु एक्कहिँ सल्लइहि जइ पुच्छह परमत्थु ॥८॥

क्रीडायाः खेड्डः ।

खेड्डयं कयमम्हेहिं निच्छयं किं पयम्पह ।
अणुरत्ताउ भत्ताउ अम्हे मा चय सामिअ ॥ ९ ॥

रम्यस्य रवण्ण. ।

सरिहिँ न सरेहिँ न सरवरेहिँ न वि उज्जाणवणेहिं ।
देस रवण्णा होन्ति वढ निवसन्तेहिँ सुअणेहिं ॥

अद्भुतस्य ढक्करि. ।

हिअडा पइँ एहु बोल्लिअओ महु अग्गइ सय-वार ।
फुट्टिसु पिएँ पवसन्ति हउँ भण्डय ढक्करि-सार ॥११॥

हेसखीत्यस्य हेल्लि । हेल्लि म झङ्खहि आलु [३७९.१]॥

पृथक्पृथगित्यस्य जुअंजुअं ॥

एक्क कुडुल्ली पञ्चहिँ रुद्धी तहँ पञ्चहँ वि जुअंजुअ बुद्धी ।
बहिणुएँ तं घरु कहि किँव नन्दउ जेत्थु कुडुम्बउँ अप्पण छन्दउँ ॥

मूढस्य नालिअ-वढौ ।

जो पुणु मणि जि खसफसिहूअउ चिन्तइ देइ न दम्मु न रूअउ ।
रइ-वस-भमिरु करग्गुल्लालिउ घरहिं जि कोन्तु गुणइ सो नालिउ ॥

दिवेहिँ विढत्तउँ खाहि वढ [४२२.४] ॥

नवस्य नवखः । नवखी क वि विसगण्ठि [४२०.३]
अवस्कन्दस्य दडवड. ।

चलेहिँ चलन्तेहिँ लोअणेहिँ जे तइँ दिट्ठा बालि ।
तहिँ मयरद्धय-दडवडउ पडइ अपूरइ कालि ॥१४॥

यदेश्छुड्डुः । छुड्डु अग्घइ ववसाउ [३८५ १]॥
सबन्धिनः केर तणौ ।

गयउ सु केसरि पिअहु जलु निच्चिन्तइँ हरिणाइं ।
जसु केरएँ हुंकारडएं मुहहुँ पडन्ति तृणाइं ॥१५॥

अह भग्गा अम्हह तणा [३७९.२] ॥

माभैषीरित्यस्य मब्भीसेति स्त्रीलिङ्गम् ।

सत्थावत्थहँ आलवणु साहु वि लोउ करेइ ।
आदन्नह मब्भीसडी जो सज्जणु सो देइ ॥ १६ ॥

यद्यदृष्टं तत्तदित्यस्य जाइट्ठिआ ।

जइ रच्चसि जाइट्ठिअए हिअडा मुद्ध-सहाव ।
लोहे फुट्टणएण जिवँ घणा सहेसइ ताव ॥ १७ ॥
॥४२२॥

## हुहुरु-घुग्घादयः शब्द-चेष्टानुकरणयोः ॥ ८ । ४ । ४२३ ॥

अपभ्रंशे हुहुर्वादय. शब्दानुकरणे घुग्घादयश्चेष्टानुकरणे यथासंख्य प्रयोक्तव्याः ॥

मइँ जाणिउँ बुड्डीसु हउँ पेम्म-द्रहि हुहुरु त्ति ।
नवरि अचिन्तिय सपडिय विप्पिय-नाव झड त्ति॥१॥

आदिग्रहणात् ।

खज्जइ नउ कसरक्केहिं पिज्जइ नउ घुण्टेहि ।
एम्वइ होइ सुहच्छडी पिएँ दिट्ठे नयणेहि ॥२॥

इत्यादि ॥

अज्ज वि नाहु महु ज्जि घरि सिद्धत्था वन्देइ ।
ताउँ जि विरहु गवक्खेहि मक्कड-घुग्घिउ देइ ॥३॥

आदिग्रहणात् ।

सिरि जर-खण्डी लोअडी गलि मणियडा न वीस ।
तो वि गोट्ठडा कराविआ मुद्धएँ उट्ठ-वईस ॥ ४ ॥

इत्यादि ॥४२३॥

**घइमादयो ऽनर्थकाः ॥ ८ । ४ । ४२४ ॥**

अपभ्रंशे घइमित्यादयो निपाता अनर्थकाः प्रयुज्यन्ते ॥

अम्मडि पच्छायावडा पिउ कलहिअउ विआलि ।
घइं विवरीरी बुद्धडी होइ विणासहो कालि ॥ १ ॥

आदिग्रहणात् खाइं इत्यादय. ॥४२४॥

**तादर्थ्ये केहिं तेहिं रेसि रेसिं तणेणाः ॥ ८ । ४ । ४२५ ॥**

अपभ्रंशे तादर्थ्ये द्योत्ये केहिं तेहिं रेसि रेसिं तणेण इत्येते पञ्च निपाताः प्रयोक्तव्याः ॥

ढोल्ला एँह परिहासडी अइ भण कवणहिँ देसि ।
हउँ झिज्जउँ तउ केहिँ पिअ तुहुँ पुणु अन्नहि रेसि ॥१॥

एवं तेहिंरेसिमावुदाहार्यौ ॥ वड्डत्तणहो तणेण [ ३६६.१ ] ॥४२५॥

**पुनर्विनः स्वार्थे डुः ॥८।४।४२६॥**

अपभ्रंशे पुनर्विना इत्येताभ्यां परः स्वार्थे डु· प्रत्ययो भवति ॥

सुमरिज्जइ तं वल्लहउँ जं वीसरइ मणाउं ॥
जहिँ पुणु सुमरणु जाउँ गउ तहो नेहहो कइँ नाउँ

विणु जुज्झे न वलाहुं ॥ [ ३८६.१ ] ॥४२६॥

**अवश्यमो डें-डौ ॥८।४।४२७॥**

अपभ्रंशे वश्यमः स्वार्थे डे ड इत्येतौ प्रत्ययौ भवतः ॥

जिब्भिन्दिउ नायगु वसि करहु जसु अधिन्नइँ अन्नइ ।
मूलि विणट्ठइ तुंबिणिहे अवसे सुक्कहिं पण्णइ ॥ १ ॥

अवस न सुअहि सुहच्छिअहि [३७६.२] ॥४२७॥

**एकशसो डिः ॥८।४।४२८॥**

अपभ्रंशे एकशश्शब्दात्स्वार्थे डिर्भवति ॥

एक्कसि सील-कलंकिअह देज्जहिँ पच्छित्ताइं ।
जो पुणु खण्डइ अणुदिअहु तसु पच्छित्ते काइं ॥१॥
॥४२८॥

**अ-डड-डुल्लाः स्वार्थिक-क-लुक् च ॥८।४।४२९॥**

अपभ्रंशे नाम्न. परतः स्वार्थे अ डड डुल्ल इत्येते त्रयः प्रत्यया भवन्ति तत्सनियोगे स्वार्थे कप्रत्ययस्य लोपश्च ॥

विरहाणल-जाल-करालिअउ पहिउ पन्थि जं दिट्ठउ ।
तं मेलवि सव्वहिँ पन्थिअहि सो जि किअउ अग्गिट्ठउ ॥

डड । महु कन्तहोँ वे दोसडा [३७९.१] ॥
डुल्ल । एक्क कुडुल्ली पच्चहिँ रुद्धी [४२२.१२] ॥
॥४२९॥

**योगजाश्चैषाम् ॥८।४।४३०॥**

अपभ्रंशे अडडडुल्लानां योगभेदेभ्यो ये जायन्ते डडअ इत्यादय· प्रत्ययास्तेपि स्वार्थे प्रायो भवन्ति ।

डडअ । फोडेन्ति जे हिअडउं अप्पणउ [३५०.२]॥
अत्र किसलय [१:२६९] इत्यादिना यलुक् ॥
डुलअ । चूडुल्लउ चुन्नीहोइसइ [३९५.२] ॥
डुल्लडड ॥

सामि-पसाउ सलज्जु पिउ सीमा-संधिहिँ वासु ।
पेक्खिवि बाहु-बलुल्लडा धण मेल्लइ नीसासु ॥१॥

अत्रामि स्यादौ दीर्घ हूस्वौ [४.३३०] इति दीर्घ॰ ॥ एव बाहुवलुल्लडउ । अत्र त्रयाणां योग॰ ॥ ॥४३०॥

**स्त्रियां तदन्ताड्डीः ॥८।४।४३१॥**

अपभ्रशे स्त्रिया वर्तमानेभ्य प्राक्तनसूत्रद्वयोक्त प्रत्ययान्तेभ्यो डी. प्रत्ययो भवति ॥

पहिआ दिट्ठी गोरडी दिट्ठी मग्गु निअन्त ।
असूसासेहिँ कन्चुआ तितुव्वाण करन्त ॥१॥

एकक कुड्डुल्ली पन्चहि रुद्धी [३७२ १] ॥४३१॥

**आन्तान्ताड्डाः ॥८।४।४३२॥**

अपभ्रशे स्त्रियां वर्तमानादप्रत्ययान्तप्रत्ययान्तात् डाप्रत्ययो भवति । ङ्यपवाद ॥

पिउ आइउ सुअ वत्तडी झुणि कन्नडइ पइट्ठ ।
तहो विरहहोँ नासन्तअहो धूलडिआ वि न दिट्ठ ॥ ॥४३२॥

**अस्येदे ॥८।४।४३३॥**

अपभ्रंशे स्त्रियां वर्तमानस्य नाम्नो योकारस्तस्य आकारे प्रत्यये परे इकारो भवति ॥ धूलडिआ वि न दिट्ठ [४३२ १] स्त्रियामित्येव । झुणि कन्नडइ पइट्ठ [४३२.१] ॥४३३॥

**युष्मदादेरीयस्य डारः ॥८।४।४३४॥**

अपभ्रशे युष्मदादिभ्य॰ परस्य ईयप्रत्ययस्य डार इत्यादेशो भवति ॥

सदेसे काइँ तुहारेण ज सङ्गहो न मिलिज्जइ ।
सुइणन्तरि पिएँ पाणिएँण पिअ पिआस कि छिज्जइ ॥

दिक्खि अम्हारा कन्तु [३४५ १] । वहिणि महारा कन्तु [३५१.१] ॥४३४॥

**अतोर्डेत्तुलः ॥८।४।४३५॥**

अपभ्रंशे इदकियत्तदेतद्भ्य परस्य अतो॰ प्रत्ययस्य डेत्तुल इत्यादेशो भवति ॥ एत्तुलो । केत्तुलो । जेत्तुलो । तेत्तुलो । एत्तुलो ॥४३५॥

**त्रस्य डेत्तहे ॥८।४।४३६॥**

अपभ्रशे सर्वादेः सप्तम्यन्तात्परस्य त्रप्रत्ययस्य डेत्तहे इत्यादेशो भवति ॥४३६॥

एत्तहेँ तेत्तहेँ वारि घरि लच्छि विसण्ठुल धाइ ।
पिअ पब्भट्ठ व गोरड़ी निच्चल कहि वि न ठाइ ॥१॥ ॥४३६॥

**त्व-तलोः प्पणः ॥८।४।४३७॥**

अपभ्रंशे त्वतलोः प्रत्यययो. प्पण इत्यादेशो भवति ॥ वड्डप्पणु परिपाविअइ [३६६.१] ॥ प्रायोधिकारात् । वड्डत्तणहो तणेण [३६६.१] ॥४३७॥

**तव्यस्य इएव्वउं एव्वउं एवा ॥८।४।४३८॥**

अपभ्रंशे तव्यप्रत्ययस्य इएव्वउ एव्वउ एवा इत्येते त्रय आदेशा भवन्ति ॥

एँउ गृण्हेप्पिणु ध्रुं मइ जइ प्रिउ उव्वारिज्जइ ।
महु करिएव्वउँ किं पि ण वि मरिएव्वउँ पर देज्जइ ॥

देसुच्चाडणु सिहि-कढणु घण-कुट्टणु जं लोइ ।
मंजिट्ठएँ अइरत्तिए सव्वु सहेव्वउँ होइ ॥२॥

सोएवा पर वारिआ पुप्फवईहिँ समाणु ।
जग्गेवा पुणु को धरइ जइ सो वेउ पमाणु ॥३॥ ॥४३८॥

**क्त्व इ-इउ-इवि-अवयः ॥८।४।४३९॥**

अपभ्रशे क्त्वाप्रत्ययस्य इ इउ इवि अवि इत्येते चत्वार आदेशा भवन्ति ॥इ ।

हिअडा जइ वेरिअ घणा तो कि अब्भि चडाहुं ।
अम्हाहि वे हत्थडा जइ पुणु मारि मराहुं ॥१॥

इउ । गय-घड भज्जिउ जन्ति [३९५.५] ॥ इवि ।

रक्खइ सा विस-हारिणी वे कर चुम्बिवि जीउ ।
पडिबिम्बिअ-मुजालु जलु जेहि अडोहिउ पीउ ॥२॥

अवि ।

वाह विछोडवि जाहि तुहुँ हउ तेवँइ को दोसु ।
हिअय-ट्ठिउ जइ नीसरहि जाणउँ मुञ्ज सरोसु ॥२॥
॥४३९॥

## एप्प्येप्पिण्वेव्येविणवः ॥ ८ । ४ । ४४० ॥

अपभ्रंशे क्त्वाप्रत्ययस्य एप्पि एप्पिणु एवि एविणु इत्येते चत्वार आदेशा भवन्ति ॥

जेप्पि असेसु कसाय-बलु देप्पिणु अभउ जयस्सु ।
लेवि महव्वय सिवु लहहि झाएविणु तत्तस्सु ॥१॥

पृथग्योग उत्तरार्थ ॥४४०॥

## तुम एवमणाणहमणहिं च ॥८।४।४४१॥

अपभ्रंशे तुमः प्रत्ययस्य एवं अण अणहं अणहिं इत्येते चत्वार चकारात् एप्पि एप्पिणु एवि एविणु इत्येते, एव चाष्टावादेशा भवन्ति ॥

देवं दुक्करु निअय-धणु करण न तउ पडिहाइ ।
एम्वइ सुहु भुञ्जणहँ मणु पर भुञ्जणहि न जाइ ॥
जेप्पि चएप्पिणु सयल धर लेविणु तवु पालेवि ।
विणु सन्ते तित्थेसरेण को सक्कइ भुवणे वि ॥२॥
॥४४१॥

## गमेरेप्पिण्वेप्प्योरेर्लुग् वा ॥ ८ ।४।४४२ ॥

अपभ्रंशे गमेर्धातोः परयोरेप्पिणु एप्पि इत्यादेशयोरेकारस्य लुग् भवति वा ॥

गम्प्पिणु वाणारसिहिँ नर अहि उज्जेणिहिँ गम्पि ।
मुआ परावहि परम-पउ दिव्वन्तरइँ म जम्पि ॥१॥

पक्षे ।

गङ्ग गमेप्पिणु जो मुअइ जो सिव-तित्थ गमेप्पि ।
कीलदि तिदसावास-गउ सो जम—लोउ जिणेप्पि ॥
॥४४२॥

## तृनो ऽणअः ॥ ८ । ४ । ४४३ ॥

अपभ्रंशे तृनः प्रत्ययस्य अणअ इत्यादेशो भवति ॥ हत्थि मारणउ लोउ बोल्लणउ पडहु वज्जणउ सुणउ भसणउ ॥१॥ ॥४४३॥

## इवार्थे नं-नउ--नाइ--नावइ-जणि--जणवः ॥ ८ । ४ । ४४४ ॥

अपभ्रंशे इवशब्दस्यार्थे नं नउ नाइ नावइ जणि जणु इत्येते षट् भवन्ति ॥ न । नं मल्ल-जुज्झु ससि-राहु करहि ॥ [३८२.१] नउ ।

रवि-अत्थमणि समाउलेण कण्ठि विइण्णु न छिण्णु ।
चक्के खण्डु मुणालिअहे नउ जीवग्गलु दिण्णु ॥१॥

नाइ ।

वलयावलि-निवडण भएण धण उद्धब्भुअ जाइ ।
वल्लह-विरह-महादहहो थाह गवेसइ नाइ ॥ २ ॥

नावइ ।

पेक्खेविणु मुहु जिण-वरहो दीहर नयण सलोणु ।
नावइ गुरु-मच्छर-भरिउ जलणि पवीसइ लोणु ॥३॥

जणि ।

चम्पय-कुसुमहो मज्झि सहि भसलु पइट्ठउ ।
सोहइ इन्दनीलु जणि कणइ बइट्ठउ ॥ ४ ॥

जणु । निरुवम-रसु पिएं पिएवि जणु ॥[ ४०१.३]
॥ ४४४ ॥

## लिङ्गमतन्त्रम् ॥ ८ । ४ । ४४५ ॥

अपभ्रंशे लिङ्गमतन्त्रं व्यभिचारि प्रायो भवति ॥

गय कुम्भइ दारन्तु [ ३४५.१ ] अत्र पुंल्लिङ्गस्य नपुंसकत्वम् ।

अब्भा लग्गा डुङ्गरिहि पहिउ रडन्तउ जाइ ।
जो एहा गिरि-गिलण-मणु सो कि धणहे धणाइ
(घणाइ ?) ॥ १ ॥

अत्र अब्भा इति नपुंसकस्य पुंस्त्वम् ॥

पाइं विलग्गी अन्त्रडी सिरु ल्हसिउं खन्धस्सु ।
तो वि कटारइ हत्थडउ बलि किज्जउँ कन्तस्सु॥२॥

अत्र अन्त्रडी इति नपुंसकस्य स्त्रीत्वम् ॥

सिरि चडिआ खन्ति प्फलइ पुणु डालइ मोडन्ति ।
तो वि महद्दुम सउणाह अवराहिउ न करन्ति ॥३॥

अत्र डालई इत्यत्र स्त्रीलिङ्गस्य नपुंसकत्वम् ॥४४५॥

**शौरसेनीवत् ॥ ८ । ४ । ४४६ ॥**

अपभ्रंशे प्राय. शौरसेनीवत् कार्यं भवति ॥

सीसि सेहरु खणु विणिम्मविदु
खणु कण्ठि पलंबु किदु रदिए ।
विहिदु खणु मुण्डमालिएँ जं पणएणं
त नमहु कुसुम-दाम-कोदण्डु कामहो ॥ १ ॥

**व्यत्ययश्च ॥८।४।४४७॥**

प्राकृतादिभाषालक्षणाना व्यत्ययश्च भवति ॥ यथा मागध्यां तिष्ठश्चिष्ठः [४.२९८] इत्युक्तं तथा प्राकृतपैशाचीशौरसेनीष्वपि भवति । चिष्ठदि ॥ अपभ्रंशे रेफस्याधो वा लुगुक्तो मागध्यामपि भवति । शद-माणुश-मंश-भालके कुम्भ-शहश्र-वशाहे शचिदे इत्याद्यन्यदपि द्रष्टव्यम् ॥ न केवल भाषालक्षणानां त्याद्यादेशानामपि व्यत्ययो भवति । ये वर्तमाने काले प्रसिद्धास्ते भूतेपि भवन्ति । अह पेच्छइ रहु-तणओ ॥ अथ प्रेक्षांचक्रे इत्यर्थः ॥ आभासइ रयणीअरे । आवभापे रजनीचरानित्यर्थ' ॥ भूते प्रसिद्धा वर्तमानेपि । सोहीअ एस वण्ठो । शृणोत्येष वण्ठ इत्यर्थ' ॥४४७॥

**शेषं संस्कृतवत्सिद्धम् ॥८।४।४४८॥**

शेष यदत्र प्राकृतादिभाषासु अष्टमे नोक्तं तत्सप्ताध्यायीनिबद्धसंस्कृतवदेव सिद्धम् ॥

हेट्ठ-ट्ठिय-सूर-निवारणाय छत्तं अहो इव वहन्ती ।
जयइ ससेसा वराह-सास दूरुक्खुया पुहवी ॥१॥

अत्र चतुर्थ्या आदेशो नोक्त स च संस्कृतवदेव सिद्ध' । उक्तमपि क्वचित्संस्कृतवदेव भवति । यथा प्राकृते उरस्शब्दस्य सप्तम्येकवचनान्तस्य उरे उरम्मि इति प्रयोगौ भवतस्तथा क्वचिदुरसीत्यपि भवति ॥ एवं सिरे । सिरम्मि । सिरसि ॥ सरे । सरम्मि । सरसि ॥ सिद्धग्रहणं मङ्गलार्थम् । ततो ह्यायुष्मच्छ्रोतृकताभ्युदयश्चेति ॥४४८॥

**इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनवृत्तावष्टमस्याध्यायस्य चतुर्थः पादः समाप्तः ॥**

समाप्ता चेय सिद्धहेमचन्द्रशब्दानुशासनवृत्ति. प्रकाशिका नामेति ॥

[ ग्रन्थकृत्प्रशस्तिः ]

आसीद्विशां पतिरमुद्रचतु समुद्र–मुद्राङ्कितक्षितिभरक्षमवाहुदण्ड' ।
**श्रीमूलराज** इति दुर्धरवैरिकुम्भि–कण्ठीरवः शुचिचुलुक्यकुलावतंसः ॥१॥
तस्यान्वये समजनि प्रबलप्रताप–तिग्मद्युतिः क्षितिपतिर्**जयसिंहदेवः** ।
येन स्ववशसवितर्यपरं सुधांशौ **श्रीसिद्धराज** इति नाम निजं व्यलेखि ॥२॥
सम्यग् निषेव्य चतुरश्चतुरोप्युपायान्, जित्वोपभुज्य च भुवं चतुरब्धिकाञ्चीम् ।
विद्याचतुष्टयविनीतमतिर्जितात्मा, काष्ठामवाप पुरुषार्थचतुष्टये य' ॥३॥
तेनातिविस्तृतदुरागमविप्रकीर्ण–शब्दानुशासनसमूहकदर्थितेन ।
अभ्यर्थितो निरवम विधिवद्व्यधत्त शब्दानुशासनमिदं **मुनिहेमचन्द्रः** ॥४॥

श्रीः ॥ शुभं भवतु ॥

# ॥ अथ परिशिष्टानि ॥

## (१)

प्राकृतव्याकरणे समागतानां प्राकृतभाषामयानां
पद्यानां सूत्राङ्कनिर्देशपूर्विका—**संस्कृतच्छाया** ॥

**प्रथमपादः—**

(६) दनुजेन्द्ररुधिरलिप्तः शोभते उपेन्द्रो नखप्रभावल्यरुणः ।
सन्ध्यावधूपगूढो नववारिधर इव विद्युत्प्रतिभिन्नः ॥

,, गूढोदरतामरसानुसारिणी भ्रमरपङ्क्तिरिव ॥

(७) वक्त्रा नखोल्लेखने आवध्नत्या कञ्चुकमङ्गे ।
मकरध्वजशरधोरणि—धाराच्छेदा इव दृश्यन्ते ॥

,, उपमासु अपर्याप्तेभदन्तावभासमूरुयुगम् ।
तदेव मृदितविसदण्डविरसमालक्षयामह इदानीम् ॥

,, अर्थालोकनतरला इतरकवीनां भ्रमन्ति बुद्धयः ।
अर्था एव निरारम्भं यन्ति हृदयं कवीन्द्राणाम् ॥

**द्वितीयपादः—**

(१५) भुक्त्वा सकलां पृथ्वीं विद्वान् बुद्ध्वा अनन्यकगामि ।
त्यक्त्वा तपः कृत्वा शान्त्या प्राप्तः शिवं परमम् ॥

(१८०) हन्दि चरणे नतः सः न मानितः हन्दि भवेत् एतस्मात् ।
हन्दि न भविष्यति भणित्री सा खिद्यते हन्दि तव कार्ये ॥

(२११) पश्य निश्चलनिष्पन्दा बिसिनीपत्रे राजते बलाका ।
निर्मलमरकतभाजनप्रतिष्ठिता शङ्खशुक्तिरिव ॥

(१९३) वेव्वे इति भये वेव्वे इति वारणे विषादे च वेव्वे इति ।
उल्लापयित्र्या अपि तव वेव्वे इति मृगाक्षि ! किं ज्ञेयम् ॥

,, किम् उल्लापयिन्त्या पश्य खिद्यमानया किन्तु भीतया ।
उत्पातयित्र्या वेव्वे इति, तया भणितं न विस्मरामः ॥

अपराधविस्मययोः—

(२०४) अव्वो हरन्ति हृदयं तथापि न द्वेष्या भवन्ति युवतीनाम् ।
अव्वो किमपि रहस्यं जानन्ति धूर्ता जनाभ्यधिकाः ॥

आनन्दादरभयेषु—

,, अव्वो सुप्रभातमिदम् अव्वो अद्यास्माकं सफलं जीवितम् ।
अव्वो अतीते त्वयि केवलं यदि सा न खेत्स्यति ॥

विषादे—

,, अव्वो नाशयन्ति धृतिं पुलकं (रोमाञ्चं) वर्धयन्ति ददति ।
इदानीं तस्यैतद्गुणा ते एव अव्वो कथं नु एतत् ॥

पश्चात्तापे—

,, अव्वो तथा तेन कृता अहं यथा कस्य कथयामि ॥

**तृतीयपादः—**

(१८०) हरिणस्थाने हरिणाङ्क यदि हरिणाधिपं न्यवेशयिष्यः ।
नासहिष्यथा एव तदा राहुपरिभवम् अस्य जेतुः ॥

**चतुर्थपादः—**

(२८८) रभस—वश—नम्र—सुर—शिरो—विगलित—मन्दार—राजिताङ्घ्रियुगः ।
वीरजिनः प्रक्षालयतु मम सकलमवद्यजम्बालम् ॥

(३२६) प्रणमत प्रणय—प्रकुपित—गौरी—चरणाग्र—लग्न—प्रतिबिम्बम् ।
दशसु नखदर्पणेषु एकादश—तनु—धरं रुद्रम् ॥

,, नृत्यतश्च लीलापादोत्क्षेपेण कम्पिता वसुधा ।
उच्छलन्ति समुद्राः शैला निपतन्ति तं हरं नमत ॥

(३३०) विटः श्यामलः धन्या—चम्पकवर्णा । इव सुवर्णरेखा कषपट्टके दत्ता ।

,, विट ! मया त्वं वारितः, मा कुरु दीर्घं मानम् ।
निद्रया गमिष्यति रात्रिः, शीघ्र (दडवड) भवति विभातम् ॥

,, पुत्रि (बिट्टीए) मया भाषिता त्वं मा कुरु वक्रां दृष्टिम् ।
पुत्रि सकर्णा भल्लिर्यथा मारयति हृदये प्रविष्टा ॥

,, एते ते अश्वाः (घोडा) एषा स्थली एते ते निशिताः खड्गाः ।
अत्र मनुष्यत्वं (पौरुषं) ज्ञायते यः नापि वल्गां वालयति ॥

(३३१) दशमुखः भुवनभयंकरः तोषितशंकरः निर्गतः रथवरे आरूढः ।
चतुर्मुखं षण्मुखं ध्यात्वा एकस्मिन् लगित्वा इव दैवेन घटितः ॥

(३३२) अगलितस्नेहनिवृत्तानां योजनलक्षमपि जायताम् ।
वर्षशतेनापि यः मिलति सखि ! सौख्यानां स स्थानम् ॥

,, अङ्गैः अङ्गं न मिलितं सखि (हलि) अधरेण अधरः न प्राप्तः ।
प्रियस्य पश्यन्त्याः मुखकमलं एवं सुरतं समाप्तम् ॥

(३३३) ये मम दत्ताः दिवसाः दयितेन प्रवसता ।
तान गणयन्त्याः (मम) अङ्गुल्यः जर्जरिताः नखेन ॥

(३३४) सागरः उपरि तृणानि धरति तले क्षिपति (घल्लइ) रत्नानि ।
स्वामी सुभृत्यमपि परिहरति समानयति खलान् ॥

(३३५) गुणैः न संपत् कीर्तिः परं (जनाः) फलानि लिखितानि भुञ्जन्ति ।
केसरी कदर्पिकामपि (बोड्डिअ) न लभते गजाः लक्षः गृह्यन्ते ॥

(३३६) वृक्षात् गृह्णाति फलानि जनः कटुपल्लवान् वर्जयति ।
तथापि महाद्रुमः सुजन इव तान उत्सङ्गे धरति ॥

(३३७) दूरोड्डाणेन पतितः खलः आत्मानं जनं (च) मारयति ।
यथा गिरिशृङ्गेभ्यः पतिता शिला अन्यदपि चूर्णीकरोति ॥

(३३८) यः गुणान् गोपयति आत्मीयान् प्रकटान् करोति परस्य ।
तस्य अहं कलियुगे दुर्लभस्य बलिं करोमि सुजनस्य ॥

(३३९) तृणानां तृतीया भङ्गी नापि (नैव) तानि अवटतटे वसन्ति ।
अथ जनः लगित्वा उत्तरति अथ सह स्वयं मज्जन्ति ॥

(३४०) देवः घटयति वने तरूणां शकुनीनां (कृते) पक्वफलानि ।
तद् वरं सौख्यं प्रविष्टानि नापि कर्णयोः खलवचनानि ॥

,, धवलः खिद्यति (विसूरइ) स्वामिनः गुरु भारं प्रेक्ष्य ।
अहं किं न युक्तः द्वयोर्दिशोः खण्डे द्वे कृत्वा ॥

(३४१) गिरेः शिलातल तरोः फलं गृह्यते निःसामान्यम् ।
गृहं मुक्त्वा मनुष्याणां तथापि न रोचते अरण्यम् ॥

,, तरुभ्यः अपि वल्कलं फलं मुनयः अपि परिधानम् अशनं लभन्ते ।
स्वामिभ्यः इयत् अधिकं (अग्गलु) आदरं भृत्याः गृह्णन्ति ॥

,, अथ विरलप्रभावः एव कलौ धर्मः ।

(३४३) अग्निना उष्णं भवति जगत् वातेन शीतलं तथा ।
यः पुनः अग्निना शीतलः तस्य उष्णत्वं कथम् ॥

,, विप्रियकारकः यद्यपि प्रियः तदपि तम् आनय अद्य ।
अग्निना दग्धं यद्यपि गृहं तदपि तेन अग्निना कार्यम् ॥

(३४४) यथा यथा वक्रिमाणं लोचनयोः नितरां श्यामला शिक्षते ।
तथा तथा मन्मथः निजकशरान् खरप्रस्तरे तीक्ष्णयति ॥

(३४५) सङ्गरशतेषु यो वर्ण्यते पश्य अस्माकं कान्तम् ।
अतिमत्तानां त्युक्ताङ्कुशानां गजानां कुम्भान् दारयन्तम् ॥

(३४६) हे तरुणाः ! हे तरुण्यः ! (च) ज्ञातं मया आत्मनः घात मा कुरुत ॥

(३४९) निजमुखकरैः अपि मुग्धा करम् अन्धकारे प्रतिप्रेक्षते ।
शशिमण्डलचन्द्रिकया पुनः किं न दूरे पश्यति ॥

(३५०) तुच्छमध्यायाः तुच्छजल्पनशीलायाः ॥
तुच्छाच्छरोमावल्याः तुच्छरागायाः तुच्छरतहासायाः ।
प्रियवचनमलभमानायाः तुच्छकायमन्मथनिवासायाः ॥

,, अन्यद् यत्तुच्छं तस्याः धन्यायाः तदाख्यातुं न याति ।
आश्चर्यं स्तनान्तरं मुग्धायाः येन मनो वर्त्मनि न माति ॥

,, स्फोटयतः यौ हृदयं आत्मीयं तयोः परकीया (परविषये) का घृणा ।
रक्षत लोका' आत्मान वालायाः, जातौ विषमौ स्तनौ ॥

(३५१) भव्यं (साधु) भूतं यन्मारित' भगिनि ! अस्मदीयः कान्तः ।
अलज्जिष्यत् वयस्याभ्यः यदि भग्नः गृहम् ऐष्यत् ॥

(३५२) वायसम् उड्डापयन्त्याः प्रियो दृष्टः सहसेति ।
अर्धानि वलयानि मह्यां गतानि अर्धानि स्फुटानि तटिति ॥

(३५३) कमलानि मुक्त्वा अलिकुलानि करिगण्डान् काङ्क्षन्ति ।
असुलभं एष्टु येषां निर्बन्धः (भलि) ते नापि (नैव) दूरं गणयन्ति ॥

(३५४) भग्नकं दृष्ट्वा निजकं वलं वलं प्रसृतक परस्य ।
उन्मीलति शशिलेखा यथा करे करवालः प्रियस्य ॥

(३५६) यदि तस्या' त्रुट्यतु स्नेहः मया सह नापि तिलतारः ।
तत् कस्माद् वक्राभ्यां लोचनाभ्यां दृश्ये (अहं) शतवारम् ॥

(३५७) यत्र यस्मिन् कल्प्यते शरेण शरः छिद्यते खड्गेन खड्गः ।
तस्मिन् तादृशे भटघटानिवहे कान्त' प्रकाशयति मार्गम् ॥

,, एकस्मिन् अक्ष्णि श्रावणः अन्यस्मिन् भाद्रपदः । माधवः महीतलस्रस्तरे गण्डस्थले शरत् ॥

,, अङ्गेषु ग्रीष्म' सुखासिकातिलवने मार्गशीर्षः । तस्याः मुग्धायाःमुखपङ्कजे आवासितः शिशिरः ॥

,, हृदय स्फुट तटिति (शब्दं) कृत्वा कालक्षेपेण किम् ।
पश्यामि हतविधिः क्व स्थापयति त्वया विना दुःखशतानि ॥

(३५८) कान्तः अस्मदीयः हला सखिके निश्चयेन रुष्यति यस्य (यस्मै) ।
अस्त्रैः शस्त्रैः हस्तैरपि स्थानमपि स्फोटयति तस्य ॥

,, जीवितं कस्य न वल्लभकं धनं पुनः कस्य नेष्टम् ।
द्वे अपि अवसरनिपतिने तृणसमे गणयति विशिष्टः ॥

(३६०) प्राङ्गणे तिष्ठति नाथः यत् तद् रणे करोति न भ्रान्तिम् । तत् जल्प्यते यन्निर्वहति ॥

(३६२) एषा कुमारी एष (अहं) नरः एतन्मनोरथस्थानम् ।
एतत् मूर्खाणां चिन्त्यमानानां पश्चाद् भवति विभातम् ॥

(३६४) यदि पृच्छथ महान्ति (वड्डाइं) गृहाणि तद् महान्ति गृहाणि अमूनि ।
विह्वलितजनाभ्युद्धरणं कान्तं कुटीरके पश्य ।

(३६५) इमानि लोकस्य लोचनानि जाति स्मरन्ति न भ्रान्तिः ।
अप्रिये दृष्टे मुकुलन्ति प्रिये दृष्टे विकसन्ति ॥
शुष्यतु मा शुष्यतु एव (वा) उदधिः वडवानलस्य किं तेन ।
यद् ज्वलति जले ज्वलनः एतेनापि कि न पर्याप्तम् ॥
अस्य दग्धकलेवरस्य यद् वाहितं (लब्धं) तत्सारम् ।
यदि आच्छाद्यते तत्कुथ्यति यदि दह्यते तत्क्षारः ॥

(३६६) सर्वोऽपि लोकः प्रस्पन्दते (तडफ्फडइ) महत्त्वस्य कृते ।
महत्त्वं पुनः प्राप्यते हस्तेन मुक्तेन ॥

(३६७) यदि न स आयाति दूति गृहं किं अधो मुखं तव ।
वचनं यः खण्डयति तव सखिके स प्रियो भवति न मम ॥

,, सुपुरुषाः कङ्गोः अनुहरन्ति भण कार्येण केन ।
यथा यथा महत्त्वं लभन्ते तथा तथा नमन्ति शिरसा ॥

,, यदि सस्नेहा तन्मृता अथ जीवति निःस्नेहा ।
द्वाभ्यामपि प्रकाराभ्यां गतिका (गता) धन्या, कि गर्जसि खल मेघ ॥

(३३८) भ्रमर मा रुणझुणुशब्दं कुरु तां दिशं विलोकय मा रुदिहि ।
मा मालती देशान्तरिता यस्याः त्वं म्रियसे वियोगे ॥

(३७०) त्वया मुक्तानामपि वरतरो विनश्यति (फिट्टइ) न पत्रत्वं पत्राणाम् ।
तव पुनः छाया यदि भवेत् कथमपि तदा तैः पत्रैः (एव) ॥

,, मम हृदयं त्वया तया त्वं सापि अन्येन विनाट्यते ।
प्रिय किं करोम्यहं किं त्वं मत्स्येन मत्स्यः गिल्यते ।

,, त्वयि मयि द्वयोरपि रणगतयोः को जयश्रियं तर्कयति ।
केशैर्गृहीत्वा यमगृहिणीं भण सुखं कस्तिष्ठति ॥

,, त्वां मुञ्चन्त्याः मम मरणं मां मुञ्चतस्तव ।
सारसः (यथा) यस्य दूरे (वेगला) स कृतान्तस्य साध्यः ॥

(३७१) युष्माभिः अस्माभिः यत् कृत दृष्टं वहुकजनेन ।
तत् (तदा) तावन्मात्रः समरभरः निर्जितः एकक्षणेन ॥

(३७२) तव गुणसपदं तव मतिं तव अनुत्तरां क्षान्तिम् ।
यदि उत्पद्य अन्यजनाः महीमण्डले शिक्षन्ते ॥

(३७६) वयं स्तोकाः रिपवः वहवः कातराः एवं भणन्ति ।
मुग्धे निभालय गगनतलं कति जनाः ज्योत्स्नां कुर्वन्ति ॥

,, -अम्लत्वं लागयित्वा ये गताः पथिकाः परकीयाः केऽपि ।
अवश्यं न स्वपन्ति सुखासिकायां यथा वयं तथा तेऽपि ॥

(३७७) मया ज्ञातं प्रियविरहिताना कापि धरा भवति विकाले ।
केवलं (परं) मृगाङ्कोऽपि तथा तपति यथा दिनकरः क्षयकाले ॥

(३७९) मम कान्तस्य द्वौ दोषौ सखि ! मा पिधेहि अलीकम् ।
ददतः परं अह उर्वरिता युध्यमानस्य करवालः ॥

,, यदि भग्नाः परकीयाः तत्सखि ! मम प्रियेण । अथ भग्ना अस्मदीयाः तत्तेन मारितेन ॥

(३८२) मुखकवरीबन्धौ तस्याः शोभां धरतः । ननु मल्लयुद्धं शशिराहू कुरुतः ॥
तस्याः शोभन्ते कुरलाः भ्रमरकुलतुलिताः । ननु भ्रमरडिम्भाः क्रीडन्ति मिलिताः ॥

(३८३) चातक, "पिउ पिउ" (पिवामि पिवामि वा प्रियः प्रियः) भणित्वा कियद्रोदिषि हताश ! ।
तव जले मम पुनर्वल्लभे द्वयोरपि न पूरिता आशा ॥

,, चातक ! किं कथनेन निर्घृण वारंवारम् ।
सागरे भृते विमलजलेन लभसे न एकामपि धाराम् ॥

,, अस्मिन् जन्मनि अन्यस्मिन्नपि गौरि ! तं दद्याः कान्तम् ।
गजानां मत्तानां त्यक्तांकुशानां यः सङ्गच्छते हसन् ॥

(३८४) वलेः अभ्यर्थने मधुमथनो लघुकीभूतः सोऽपि ।
यदि इच्छथ महत्त्वं (वड्डत्तणउं) दत्त, मा मार्गयत कमपि ॥

(३८५) विधिर्विनाटयतु ग्रहाः पीडयन्तु मा धन्ये ! कुरु विषादम् ।
संपदं कर्षामि वेषमिव यदि अर्घति (स्यात्) व्यवसायः ॥

(३८६) खड्गविसाधितं यत्र लभामहे तत्र देशे यामः ।
रणदुर्भिक्षेण भग्नाः विना युद्धेन न वलामहे ॥

(३८७) कुञ्जर ! स्मर मा सल्लकीः सरलान् श्वासान् मा मुञ्च ।
कवलाः ये प्राप्ताः विधिवशेन तांश्चर मानं मा मुञ्च ॥

,, भ्रमर ! अत्रापि निम्बके कति (चद्) दिवसान् विलम्बस्व ।
घनपत्रवान् छायाबहुलो फुल्लति यावत्कदम्बः ॥

,, प्रिय ! एवमेव कुरु भल्लं करे त्यज त्वं करवालम् ।
येन कपालिका वराकाः लान्ति अभग्नं कपालम् ॥

(३८८) दिवसा यान्ति वेगैः (झउप्पडहि) पतन्ति मनोरथाः पश्चात् ।
यदस्ति तन्मान्यते भविष्यति (इति) कुर्वन् मा आस्स्व ॥

(३८९) सतो भोगान् यः परिहरति तस्य कान्तस्य बलिं क्रिये ।
तस्य दैवेनैव मुण्डितं यस्य खल्वाटं शीर्षम् ॥

(३९०) अतितुङ्गत्वं यत्स्तनयोः स च्छेदकः न खलु लाभः ।
सखि ! यदि कथमपि त्रुटिवशेन अधरे प्रभवति नाथः ॥

(३९१) इयत् उक्त्वा शकुनिः स्थितः पुनर्दुःशासन उक्त्वा ।
तदा अहं जानामि एष हरिः यदि ममाग्रतः उक्त्वा ॥

(३९५) यथातथा तीक्ष्णान् करान् लात्वा यदि शशी अतक्षिष्यत ।
तदा जगति गौर्या मुखकमलेन सदृशतां कामपि अलप्स्यत ॥

,, कङ्कणं चूर्णीभवति स्वयं मुग्धे कपोले निहितम् । श्वासानलज्वालासतप्तं बाष्पजलसंसिक्तम् ॥

,, अनुगम्य द्वे पदे प्रेम निवर्तते यावत् । सर्वाशनरिपुसभवस्य कराः परिवृत्ताः तावद् ॥

,, हृदये शल्यायते गौरी गगने गर्जति मेघः । वर्षारात्रे प्रवासिकानां विषमं सकटमेतत् ।

,, अम्ब ! पयोधरौ वज्रमयौ नित्यं यौ समुखौ तिष्ठतः ।
मम कान्तस्य समराङ्गणके गजघटाः भङ्क्तुं यातः ॥

,, पुत्रेण जातेन को गुणः अपगुणः कः मृतेन । यद् पैतृकी (बप्पीकी) भूमिः आक्राम्यतेऽपरेण ॥

,, तत् तावत् जलं सागरस्य स तावान् विस्तारः ।
तृषो निवारणं पलमपि नैव परं शब्दायते असारः ॥

(३९६) यद् दृष्टं सोमग्रहणमसतीभिः हसितं निःशंकम् ।
प्रियमनुष्यविक्षोभकरं गिल गिल राहो ! मृगाङ्कम् ॥
„ अम्ब ! स्वस्थावस्थैः सुखेन चिन्त्यते मानः ।
प्रिये दृष्टे व्याकुलत्वेन (हल्लोहल) कश्चेतयति आत्मानम् ॥
„ शपथं कृत्वा कथितं मया तस्य परं सफलं जन्म ।
यस्य न त्यागः न च आरभटी (!) न च प्रमृष्टः धर्मः ॥
„ यदि कथंचित् प्राप्स्यामि प्रियं अकृतं कौतुकं करिष्यामि ।
पानीयं नवके शरावे यथा सर्वाङ्गेण प्रवेक्ष्यामि ॥
„ पश्य कर्णिकारः प्रफुल्लितकः काञ्चनकान्तिप्रकाशः । गौरीवदनविनिर्जितः ननु सेवते वनवासम् ॥
(३९९) व्यासमहर्षिः एतद् भणति यदि श्रुतिशास्त्रं प्रमाणम् ।
मातॄणां चरणौ नमतां दिवसे दिवसे गङ्गास्नानम् ॥
(४००) अनयं कुर्वतः पुरुषस्य आपद् आयाति ॥
(४०१) कथं समाप्यता दुष्टं दिनं कथं रात्रिः शीघ्रं (छुडु) भवति ।
नववधूदर्शनलालसकः वहति मनोरथान् सोऽपि ॥
„ ओ गौरीमुखनिर्जितकः वार्दले निलीनः मृगाङ्कः ।
अन्योऽपि यः परिभूततनुः स कथं भ्रमति निःशङ्कम् ॥
„ बिम्बाधरे तन्व्याः रदव्रणः कथं स्थितः श्रीआनन्द ! ।
निरुपमरस प्रियेण पीत्वेव शेषस्य दत्ता मुद्रा ॥
„ भण सखि ! निभृतकं तथा मयि यदि प्रियः दृष्टः सदोषः ॥
यथा न जानाति मम मनः पक्षापतितं तस्य ॥
(४०२) मया भणितः बलिराज ! त्वं कीदृग् मार्गणः एषः ।
यादृक्तादृग् नापि भवति मूर्ख ! स्वयं नारायणः ईदृक् ॥
(४०४) यदि स घटयति प्रजापतिः कुत्रापि लात्वा शिक्षाम् ॥
यत्रापि तत्रापि अत्र जगति भण तदा सदृक्षीम् ॥
(४०६) यावत् न निपतति कुम्भतटे सिंहचपेटाचटात्कारः ।
तावत् समस्तानां मदकलानां (गजानां) पदे पदे वाद्यते ढक्का ॥
„ तिलानां तिलत्वं तावत् परं यावत् न स्नेहाः गलन्ति ।
स्नेहे प्रनष्टे ते एव तिलाः तिलाः भ्रष्टा खलाः भवन्ति ॥

,, यावद् विषमा कार्यगतिः जीवानां मध्ये आयाति ।
तावत् अस्वामितरः जनः सुजनोऽप्यन्तरं ददाति ॥

(४०७) यावद् अन्तरं रावणरामणेः तावद् अन्तरं पट्टणग्रामयोः ॥

(४०८) ते मुद्राः हारिताः ये परिविष्टाः तेषाम् । परस्परं युध्यमानानां स्वामी पीडितः येषाम् ॥

(४१२) ब्रह्मन् ! ते विरलाः केऽपि नराः ये सर्वाङ्गच्छेकाः ।
ये वक्राः ते वञ्च (क) तराः ये ऋजवः ते बलीवर्दाः ॥

(४१४) अन्ये ते दीर्घे लोचने अन्यत् तद् भुजयुगलम् । अन्यः स घनस्तनभारः तदन्यदेव मुखकमलम् ॥

,, अन्य एव केशकलापः सः अन्य एव प्रायो विधिः ।
येन नितम्बिनी घटिता सा गुणलावण्यनिधिः ॥

,, प्रायो मुनीनामपि भ्रान्तिः ते मणीन् गणयन्ति ।
अक्षये निरामये परमपदे अद्यापि लयं न लभन्ते ॥

,, अश्रुजलेन प्रायः गौर्याः सखि उद्वृत्ते नयनसरसी ।
ते संमुखे सम्प्रेपिते दत्तः तिर्यग् घातं परम् ॥

,, एष्यति प्रियः रोषिष्यामि अहं रुष्टां मामनुनयति ।
प्रायः एतान् मनोरथान् दुष्करः दयितः कारयति ॥

(४१५) विरहानलज्वालाकरालितः पथिकः कोऽपि मङ्क्त्वा स्थितः ।
अन्यथा शिशिरकाले शीतलजलात् धूमः कुतः उत्थितः ॥

(४१६) मम कान्तस्य गोष्ठस्थितस्य कुतः कुटीरकाणि ज्वलन्ति ।
अथ रिपुरुधिरेण आर्द्रयति (विध्यापयति) अथ आत्मना न भ्रान्तिः ॥

(४१८) प्रियसङ्गमे कथं निद्रा, प्रियस्य परोक्षे कथम् ।
मया द्वे अपि विनाशिते निद्रा नैवं न तथा ॥

,, कान्तः यत् सिंहेन उपमीयते तन्मम खण्डितः मानः ।
सिंहः नीरक्षकान् गजान् हन्ति प्रियः पदरक्षैः समम् ॥

,, चञ्चलं जीवितं ध्रुवं मरणं, प्रिय ! रुष्यते कथम् ।
भविष्यन्ति दिवसा रोषयुक्ताः (रूसणा) दिव्यानि वर्षशतानि ॥

,, माने प्रनष्टे यदि न तनुः तत् देशं त्यजेः । मा दुर्जनकरपल्लवैः दर्श्यमानः भ्रमेः ॥

,, लवणं विलीयते पानीयेन अरे खल मेघ मा गर्ज ।
ज्वालितं गलति तत्कुटीरकं गौरी तिम्यति अद्य ॥

विभवे प्रनष्टे वक्रः ऋद्धौ जनसामान्यः। किमपि मनाक् मम प्रियस्य शशी अनुहरति नान्यः ॥

(४१९) किल न खादति न पिबति न विद्रवति धर्मे न व्ययति रूपकम् ।
इह कृपणो न जानाति यथा यमस्य क्षणेन प्रभवति दूतः ॥

" यायते (गम्यते) तस्मिन् देशे लभ्यते प्रियस्य प्रमाणम् ।
यदि आगच्छति तदा आनीयते अथवा तत्रैव निर्वाणम् ॥

" यत्प्रवसता सह न गता न मृता वियोगेन तस्य ।
लज्ज्यते संदेशान् ददतीभिः (अस्माभिः) सुभगजनस्य ॥

" इतः मेघाः पिबन्ति जलम् इतः वडवानलः आवर्तते ।
प्रेक्षस्व गभीरिमाणं सागरस्य एकापि कणिका नहि अपभ्रश्यते ॥

(४२०) यातु, मा यान्तं पल्लवत, द्रक्ष्यामि कति पदानि ददाति ।
हृदये तिरश्चीना अहमेव परं प्रियः आडम्बराणि करोति ॥

" हरिः नर्तितः प्राङ्गणे विस्मये पातितः लोकः ।
इदानीं राधापयोधरयोः यत् (प्रति) भाति तद् भवतु ॥

" सर्वसलावण्या गौरी नवा कापि विषग्रन्थिः ।
भट प्रत्युत स म्रियते यस्य न लगति कण्ठे ॥

(४२१) मया उक्तं, त्वं धुरं धर, गलिवृषभैः (कसर) विनाटिताः ।
त्वया विना धवल नारोहति भरः, इदानीं विषण्णः किम् ? ॥

(४२२) एकं कदापि नागच्छसि अन्यत् शी ' यासि ।
मया मित्र प्रमाणितः त्वया यादृशः (त्वं यथा) खलः न हि ॥

(२) यथा सत्पुरुषाः तथा कलहाः यथा नद्यः तथा वलनानि ।
यथा पर्वता· तथा कोटराणि हृदय खिद्यसे किम् ? ॥

(३) ये मुक्त्वा रत्ननिधिम् आत्मानं तटे क्षिपन्ति ।
तेषां शङ्खानां संसर्गः केवलं फूत्क्रियमाणाः भ्रमन्ति ॥

(४) दिवसैः अर्जितं खाद मूर्ख ! सञ्चिनु मा एकमपि द्रम्मम् ।
किमपि भयं तत् पतति येन समाप्यते जन्म ॥

(५) एकैकं यद्यपि पश्यति हरिः सुष्ठु सर्वादरेण । तथापि दृष्टिः यत्र क्वापि राधा ।
क· शक्नोति संवरीतुं नयने स्नेहेन पर्यस्ते ॥

(६) विभवे कस्य स्थिरत्वं यौवने कस्य गर्वः । स लेखः प्रस्थाप्यते यः लगति गाढम् ॥

(७) कुत्र शशधरः कुत्र मकरधरः कुत्र बर्ही कुत्र मेघः ।
दूरस्थितानामपि सज्जनानां भवति असाधारणः स्नेहः ॥

(८) कुञ्जरः अन्येषु तरुवरेषु कौतुकेन घर्षति हस्तम् ।
मनः पुनः एकस्यां सल्लक्यां यदि पृच्छथ परमार्थम् ॥

(९) क्रीडा कृता अस्माभिः निश्चय किं प्रजल्पत ।
अनुरक्ताः भक्ताः अस्मान् मा त्यज स्वामिन् ! ॥

(१०) सरिद्भिः न सरोभिः न सरोवरैः नापि उद्यानवनैः ।
देशाः रम्याः भवन्ति मूर्ख ! निवसद्भिः सुजनैः ॥

(११) हृदय ! त्वया एतद् उक्तं मम अग्रतः शतवारम् ।
स्फुटिष्यामि प्रियेण प्रवसता (सह) अहं भण्ड अद्भुतसार ॥

(१२) एका कुटी पञ्चभिः रुद्धा तेषां पञ्चानामपि पृथक्पृथक् बुद्धिः ।
भगिनि ! तद् गृहं कथय कथं नन्दतु यत्र कुटुम्बम् आत्मच्छन्दकम् ॥

(१३) यः पुनः मनस्येव व्याकुलीभूतः चिन्तयति ददाति न द्रम्मं न रूपकम् ।
रतिवशभ्रमणशीलः कराग्रोल्लालितं गृहे एव कुन्तं गणयति स मूढः ॥

(१४) चलाभ्यां वलमानाभ्यां लोचनाभ्यां ये त्वया दृष्टाः बाले ! ।
तेषु मकरध्वजावस्कन्दः पतति अपूर्णे काले ॥

(१५) गतः स केसरी पिबत जलं निश्चित हरिणाः ! ।
यस्य संबन्धिना हुङ्कारेण मुखेभ्यः पतन्ति तृणानि ॥

(१६) स्वस्थावस्थानामालम्बनं सर्वोऽपि लोकः करोति ।
आर्तानां मा भैषीः इति यः सुजनः स ददाति ॥

(१७) यदि रज्यसे यद्यद् दृष्टं तस्मिन् हृदय मुग्धस्वभाव ।
लोहेन स्फुटता यथा घनः (तापः) सहिष्यते तावत् ॥

(४२३) मया ज्ञातं मङ्क्ष्यामि अहं प्रेमह्रदे हुहुरुशब्दं कृत्वा ।
केवलम् अचिन्तिता सम्पतिता विप्रियनौः झटिति ॥

„ खाद्यते न कसरत्कशब्दं कृत्वा पीयते न घुटशब्दं कृत्वा ।
एवमपि भवति सुखासिका प्रिये दृष्टे नयनाभ्याम् ॥

„ अद्यापि नाथः ममैव गृहे सिद्धार्थान् वन्दते ।
तावदेव विरहः गवाक्षेषु मर्कटचेष्टां ददाति ॥

,, शिरसि जराखण्डिता लोमपुटी (कम्बलं) गले मणयः न विंशतिः ।
तथापि गोष्ठस्थाः कारिताः मुग्धया उत्थानोपवेशनम् ॥

(४२४) अम्ब ! पश्चात्तापः प्रियः कलहायितः विकाले ।
(नूनं) विपरीता बुद्धिर्भवति विनाशस्य काले ॥

(४२५) विट ! एष परिहासः अयि भण कस्मिन् देशे ।
अहं क्षीणा तव कृते प्रिय ! त्वं पुनः अन्यस्याः कृते ॥

(४२६) स्मर्यसे तद् वल्लभं यद् विस्मर्यते मनाक् ।
यस्य पुनः स्मरणं जातं गतं तस्य स्नेहस्य किं नाम ॥

(४२७) जिव्हेन्द्रियं नायकं वशे कुरुत यस्य अधीनानि अन्यानि ।
मूले विनष्टे तुम्बिन्याः अवश्यं शुष्यन्ति पर्णानि ॥

(४२८) एकशः शीलकलङ्कितानां दीयन्ते प्रायश्चित्तानि ।
यः पुनः खण्डयति अनुदिवस तस्य प्रायश्चित्तेन किम् ? ॥

(४२९) विरहानलज्वालाकरालितः पथिकः पथि यद् दृष्टः ।
तद् मिलित्वा सर्वैः पथिकैः स एव कृतः अग्निष्ठः ॥

(४३०) स्वामिप्रसादं सलज्जं प्रियं सीमासंधौ वासम् ।
प्रेक्ष्य बाहुबलं धन्या मुञ्चति निःश्वासम् ॥

(४३१) पथिक ! दृष्टा गौरी ? दृष्टा मार्गमवलोकयन्ती ।
अश्रूच्छ्वासैः कञ्चुकं तिमितोद्वानं (आर्द्रशुष्कं) कुर्वती ॥

(४३२) प्रियः आयातः श्रुता वार्ता, ध्वनिः कर्णे प्रविष्टः ।
तस्य विरहस्य नश्यतः धूलिरपि न दृष्टा ॥

(४३४) सन्देशेन किं युष्मदीयेन यत्सङ्गाय न मिल्यते ।
स्वप्नान्तरे पीतेन पानीयेन प्रिय ! पिपासा किं छिद्यते ॥

(४३६) अत्र तत्र द्वारे गृहे लक्ष्मीः विसण्ठुला भवति ।
प्रियप्रभ्रष्टेव गौरी निश्चला क्वापि न तिष्ठति ॥

(४३८) एतद् गृहीत्वा यन्मया यदि प्रियः उद्वार्यते (त्यज्यते) ।
मम कर्तव्यं किमपि नापि, मर्तव्यं परं दीयते ॥

,, देशोच्चाटनं शिखिक्वथनं घनकुट्टनं यद् लोके ।
मञ्जिष्ठया अतिरक्तया सर्वं सोढव्यं भवति ॥

,, स्वपितव्यं परं वारितं पुष्पवतीभिः समानम् ।
जागरितव्यं पुनः कः धरति यदि स वेदः प्रमाणम् ॥

(४३९) हृदय ! यदि वैरिणो घनाः तत् किं अभ्रे (आकाशे) आरोहामः ।
अस्माकं द्वौ हस्तौ यदि पुनः मारयित्वा म्रियामहे ॥

,, रक्षति सा विषहारिणी द्वौ करौ चुम्बित्वा जीवम् ।
प्रतिबिम्बितमुञ्जालं जलं याभ्यामनवगाहितं पीतम् ॥

,, बाहू विच्छोट्य याहि त्वं, भवतु तथा को दोषः ।
हृदयस्थितः यदि निःसरति जानामि मुञ्ज ! स रोषः ॥

(४४०) जित्वा अशेषं कषायबलं दत्वा अभयं जगतः ।
लात्वा महाव्रतं शिवं लभन्ते ध्यात्वा तत्त्वम् ॥

(४४१) दातुं दुष्करं निजकधनं, कर्तुं न तपः प्रतिभाति ।
एवं सुखं भोक्तुं मनः परं भोक्तुं न याति ॥

,, जेतुं त्यक्तुं सकलां धरां लातुं तपः पालयितुम्
विना शान्तिना तीर्थेश्वरेण कः शक्नोति भुवनेऽपि ॥

(४४२) गत्वा वाराणसीं नराः अथ उज्जयिनीं गत्वा ।
मृताः प्राप्नुवन्ति परमं पदं दिव्यान्तराणि मा जल्प ॥

,, गङ्गां गत्वा यः म्रियते यः शिवतीर्थं गत्वा ।
क्रीडति त्रिदशावासगतः स यमलोकं जित्वा ॥

(४४३) हस्ती मारयिता लोकः कथयिता । पटः वादयिता शुनकः भषिता ॥

(४४४) रव्यस्तमने समाकुलेन कण्ठे वितीर्णः न छिन्नः ।
चक्रेण खण्डः मृणालिकायाः ननु जीवार्गलः दत्तः ॥

,, वलयावलीनिपतनभयेन धन्या ऊर्ध्वभुजा याति ।
वल्लभविरहमहाह्रदस्य स्ताधं गवेषतीव ॥

,, प्रेक्ष्य मुखं जिनवरस्य दीर्घनयनं सलावण्यम् ।
ननु गुरुमत्सरभरितं ज्वलने प्रविशति लवणम् ॥

,, चम्पककुसुमस्य मध्ये सखि ! भ्रमरः प्रविष्टः ।
शोभते इन्द्रनीलः ननु कनके उपविष्टः ॥

(४४५) अभ्राणि लग्नानि पर्वतेषु पथिकः आरटन् याति ।
यः एषः गिरिग्रसनमनाः स किं धन्यायाः धनानि (घृणायते) [१] ।

,, पादे विलग्नम् अन्त्रं शिरः स्रस्तं स्कन्धात् ।
तथापि कटारिकायां हस्तः बलि क्रियते कान्तस्य ॥

,, शिरसि आरूढाः खादन्ति फलानि पुनः शाखाः मोटयन्ति ।
तथापि महाद्रुमाः शकुनीनां अपराधित न कुर्वन्ति ॥

(४४६) शीर्षे शेखरः क्षण विनिर्मापितम् क्षणं कण्ठे प्रालम्बं कृतं रत्याः ।
विहितं क्षणं मुण्डमालिकायां तन्नमत कुसुमदामकोदण्डं कामस्य ॥

(४४८) अधः स्थितसूर्यनिवारणाय छत्रं अधः इव वहन्ती ।
जयति सशेषा वराहश्वासदूरोत्क्षिप्ता पृथिवी ॥

॥ इति सम्पूर्णा संस्कृतच्छाया ॥

कृतो महोपकारो, विधाय शब्दानुशासनं येन ॥
कलिकालसर्वविज्ञो, जयताच्छ्रीहेमचन्द्रसूरीशः ॥



॥ अर्हँ ॥

श्रीकुमारपालभूपाललालितचरणरेणुना कलिकालसर्वज्ञेन

श्रीहेमचन्द्रसूरिभगवता प्रणीतं

# स्वोपज्ञोणादिगणसूत्रविवरणम् ॥

(परि. २)

**श्रीसिद्धहेमचन्द्र**-व्याकरणनिवेशिनामुणादीनाम् ।
आचार्य**हेमचन्द्रः**, करोति विवृत्तिं प्रणम्यार्हम् ॥१॥

**कृ-वा-पा-जि-स्वदि-साध्य-ऽशौ-दृ-स्ना-सनि-जा-निरहीणूभ्य उण् ॥१॥**

करोत्यादिभ्यो धातुभ्यः सत्यर्थे वर्तमानेभ्यः संप्रदानाऽपादानाभ्यामन्यत्र कारके भावे च सञ्ज्ञायां विषये बहुलमुण्प्रत्ययो भवति । डुकृंग् करणे, कृंग्ट् हिंसायां वा, निरनुबन्धग्रहणे सामान्यग्रहणात्; करोति करति कृणोति वा कारुः-कारी नापितादिः, इन्द्रश्च । वांक् गतिगन्धनयोः, पै ओवै शोषणे वा, वाति वायति वा द्रव्याणि-वायुः-नभस्वान् । पां पाने, पिबन्त्यनेन तैलादि द्रव्यं-पायुः-अपानमुपस्थश्च; पाति-पायत्योस्त्वर्थासंगतेर्न ग्रहणम् । जि अभिभवे, जयत्यनेन रोगान् श्लेष्माणं वा-जायुः-औषधं, पित्तं, वा, ष्वदि आस्वादने, स्वद्यत इदमनेन वा-स्वादुः रुच्यं, स्वदनं वा-स्वादुः । साधंट् संसिद्धौ, उत्तमक्षमादिभिस्तपोविशेषैर्भावितात्मा साध्नोतीति-साधुः, सम्यग्दर्शनादिभिः परमपदं साधयति वा-साधुः-संयतः, उभयलोकफलं साधयति वा साधुः-धर्मशीलः । अशौटि व्याप्तौ, अश्नुते तेजसा सर्वं केदारं वा-इत्याशुः-सूर्यो, व्रीहिश्च, अशनं वा-आशु-क्षिप्रम् , अश्नुत इति वा-आशुः-शीघ्रगामी शीघ्रकारी च । दृ भये, दृश् विदारणे वा, दरति दृणाति दीर्यते वा-दारु-काष्ठम् , भव्यं च । ष्णै वेष्टने, स्नायति-स्नायुः-अस्थिसहननम् । षन भक्तौ, षणूयी दाने वा, सनति सनोति वा मृगादीनिति-सानुः-पर्वतैकदेशः । जनैचि प्रादुर्भावे, जायतेऽनेनाकुञ्चनादि जानु उरुजङ्घासन्धिमण्डलम्, जानीत्याकारनिर्देशात् "न जन-वधः" [४. ३. ५४.] इति प्रतिषिद्धाऽपि वृद्धिर्भवति । रह त्यागे, रहति गृहीत्वा सूर्याचन्द्रमसौ स्वशरीरं वा-राहुः-सैंहिकेयः । इंण्क् गतौ, एति-आयुः-पुरुषः, शकटम् , औषधम् , जीवनम् , पुरुरवः पुत्रो वा; जरायुः-गर्भवेष्टनम् , जलमलं वा, जटायुः-पक्षी, धनायुः-देशः, रसायुः भ्रमरः, "संप्रदानात् चान्यत्रोणादयः" [५. १. १५.] इति यथायोगं प्रत्ययो वेदितव्य ॥१॥

**अः ॥२॥**

सर्वस्माद् धातोर्यथाप्रयोगमकारः प्रत्ययो भवति । भवः, तरः, वरः, प्लवः, शयः, शरः, परः, करः, स्तवः, चरः, वदः ॥२॥

### म्लेच्छीडेर्हस्वश्च वा ॥३॥

आभ्याम' प्रत्ययो भवति, दीर्घस्य च ह्रस्वो वा भवति । म्लेछ अव्यक्तायां वाचि, म्लिच्छ'—मूकः, म्लेच्छ'—कुमनुष्यजातिः । ईडिक् स्तुतौ, इड ईडश्च—देवताविशेषौ मेदिनी च ॥३॥

### नञः क्रमि-गमि-शमि-खन्याकमिभ्यो डित् ॥४॥

नञः परेभ्य एभ्यो डित् अः प्रत्ययो भवति । क्रमू पादविक्षेपे, न क्रामति—नक्रः—जलचरो ग्राह', । गम्लृं गतौ, नगः—वृक्ष', पर्वतश्च । शमूच् उपशमे, नगः—यक्षः । खनूग् अवदारणे, नखः—करजः, नास्य खमस्तीति वा—नख इत्यपि । कमूङ् कान्तौ, नाकः—स्वर्गः, नात्राकमस्तीति-नाक इत्यपि, नखादित्वात् "अन् स्वरे" [३. २. १२९.] इत्यन् न भवति । डित्करणमन्त्यस्वरादिलोपार्थम् ॥ ४ ॥

### तुदादि-विषि-गुहिभ्यः कित् ॥५॥

तुदादिभ्यो विष—गुहिभ्यां च कित् अ' प्रत्ययो भवति । तुदः, नुदः, क्षिपः, सुरः, बुधः, सिवः । सुरत् ऐश्वर्य—दीप्त्योः । तुदादिर्न धातुगण', किं तर्हि ? भिन्न इति, तेन बुधादीनामिति लिङ्गपरिणामस्तु ज्ञेयः, शिवः, तुदादीनां यथासभवं कारकविधिः । विष्लृकी व्याप्तौ, वेवेष्टि-विषं-प्राणहरं द्रव्यम् गुहौग् संवरणे, गूहति—गुहः—स्कन्दः, गुहा पर्वतैकदेशः ॥५॥

### विन्देर्नलुक् च ॥६॥

विन्देः कित् अः प्रत्ययो भवति, तत्सनियोगे नस्य लुक् च । विदु अवयवे, विदः—गोत्रकृद् वृक्षजातिश्च ॥६॥

### कृगो द्वे च ॥७॥

करोतेः कित् अः प्रत्ययो भवति, अस्य च धातोर्द्वे रूपे भवतः । डुकृंग् करणे, चक्र-रथाङ्गम्, आयुधं च ॥७॥

### कनि गदि-मनेः सरूपे ॥८॥

किदिति निवृत्तम्, एभ्योऽकारः प्रत्ययो भवति, एषां च सरूपे-समानरूपे द्वे उक्ती भवतः । कनै-दीप्ति-कान्तिगतिषु, कनति-दीप्यते-कङ्कनः-कान्तः । गद व्यक्तायां वाचि, गदति-अव्यक्तं वदति, गद्यते-अव्यक्त कथ्यते वा गद्गदः- अव्यक्तवाक्, गद्गदम्-अव्यक्त वचनम् । मनिंच् ज्ञाने, मन्मनः-अविस्पष्टवाक् । सरूपग्रहण "व्यञ्जनस्यानादेर्लुक्" [४.१.४४.] इत्यादिकार्यनिवृत्त्यर्थम् ॥८॥

### ऋतष्टित् ॥९॥

ऋकारान्ताद् धातोरकारः प्रत्ययो भवति, स च बहुलं टित्, धातोश्च सरूपे द्वे रूपे भवतः । दृग् विदारणे, दीर्यते भिद्यतेऽनेन श्रोत्रमिति-दर्दरः वाद्यविशेष', पर्वतश्च, दर्दरी-सस्यलुण्टि' । कृत् विक्षेपे, कर्कर'—क्षुद्राश्मा, कर्करी—गलन्तिका । वृग्श् वरणे वर्वर -म्लेच्छजाति , वर्वरी-केशविशेष. । भृश्, भरणे, भर्भर'-छद्मवान् , भर्भरी-श्री. । जृष्च् जरसि, जर्जरः अदृढ., जर्जरी-स्त्री । झृषच् जरसि, झर्झर.- वाद्यविशेष' झर्झरी-झल्लरिका । गृत् निगरणे, गर्गर'-रजर्षि., गर्गरी-महाकुम्भः । मृश् हिसायाम्, मर्मर.- शुष्कपत्रप्रकरः, तद्धर्माऽन्योऽपि, क्षोदासहिष्णुर्मर्मरो दानवश्च । 'भर्भरायां दूर्वायाम्' इत्यत्र टित्त्वेऽपि ङीर्न भवति बहुलाधिकारात् । तत एव च ऋकारान्तादपि-घृ सेचने, घर्घरः सघोषो व्यक्तवाक् , घर्घरी- किङ्किणिका ॥९॥

### किच्च ॥१०॥

ऋकारान्ताद् धातोर्यथादर्शनं किदकार. प्रत्ययो भवति, धातोश्च सरूपे द्वे रूपे भवतः । मृश् हिसायाम्, मूर्यतेऽनेनेति- मुर्मुरः- ज्वलदङ्गारचूर्णम् । पृश् पालनपूरणयोः, पूर्यते जलाघातेन — पुर्पुरः — फेनः ।

तॄ प्लवन तरणयो:, तीर्यतेऽनेनास्मिन् वा–तिर्तिरः-संक्रमः। भृश् भर्जने च, भूर्यते-सचोयते-भुर्भुरः संचयः। शॄश् हिसायाम्, शीर्यते समन्तात्-शिर्शिरः-पुञ्जः ॥१०॥

## पॄ-पलिभ्यां टित् पिप् च पूर्वस्य ॥११॥

आभ्यां टिदः प्रत्ययो भवति, अनयोश्च सरूपे द्वे रूपे भवतः, पूर्वस्य च स्थाने 'पिप्' इत्यादेशो भवति । पॄश् पालन-पूरणयो', पृणाति छायया-पिप्परी-वृक्ष-जाति' । पल् गतौ, पलत्यातुरं-पिप्पली-औषधजातिः। टित्करणं ङ्यर्थम् ॥११॥

## क्रमि-मथिभ्यां चन्-मनौ च ॥१२॥

आभ्यामः प्रत्ययो भवति, सरूपे च द्वे रूपे भवत', पूर्वस्य च स्थाने यथासङ्ख्यं 'चन् मन्' इत्यादेशौ भवतः । क्रमू पादविक्षेपे, क्रामति सुखमनेनास्मिन् वा-चङक्रमः-संक्रमः। मथे विलोडने, मथति चित्त रागिणां-मन्मथः-कामः ॥१२॥

## गमेर्जम् च वा ॥१३॥

गमेर' प्रत्ययो भवति, सरूपे च द्वे रूपे भवतः, पूर्वस्य च 'जम्' इत्यादेशो वा भवति । गम्लृं गतौ, गच्छति-पादविहरणं करोति-जङ्गमः–चरः, गच्छत्य-माध्यस्थ्यमिति-गङ्गमः-चपलः ॥१३॥

## अदुपान्त्य-ऋद्भ्यामश्रान्ते ॥१४॥

अकारोपान्त्याद् ऋकारान्ताच्च धातोरः प्रत्ययो भवति, सरूपे च द्वे रूपे भवतः, पूर्वस्य चान्तोऽकारो भवति। पल फल शल गतौ, शलशलः। सल गतौ । सलसलः। हल विलेखने, हलहलः। कलि शब्द-सङ्ख्यानयो:, कलकलः। मलि धारणे, मलमलः। घटिष् चेष्टायाम्, घटघटः । वद व्यक्तायां वाचि, वदवदः । पदिच् गतौ, पदपदः । ऋदन्तः डुकृग् करणे, करकरः । मृत् प्राणत्यागे, मरमरः । दृङ्त् आदरे, दरदरः । सृ गतौ' सरसरः। वृग्ट् वरणे, वरवरः । अनुकरणशब्दा एते ॥१४॥

## मषि-मसेर्वा ॥१५॥

आभ्यामः प्रत्ययो भवति, सरूपे च द्वे रूपे भवत', पूर्वस्य चान्तोऽकारो वा भवति । मष हिंसायाम्, मषमषः, मष्मषः । मसैच् परिमाणे, मसमसः, मस्मसः ॥१५॥

## हृ-सृ-फलि-कषेरा च ॥१६॥

एभ्यो अ' प्रत्ययो भवति, सरूपे च द्वे रूपे भवतः, पूर्वस्य चान्त आकारो भवति । हृंग् हरणे, हरति-नयति शस्त्राण्यस्खलन् लक्ष्यं-हराहरः-योग्याचार्यः । सृ गतौ, धावति वायुना नीयमानः समन्तात् सरासरः-सारङ्गः। फल निष्पत्तौ, फलति-निष्पादयति नानाविधानि पुष्पफलानि-फलाफलम्-अरण्यम्। कष हिंसायाम्, कषति-विदारयति-कषाकषः-कृमिजातिः ॥१६॥

## इदुदुपान्त्याभ्यां किदिदुतौ च ॥१७॥

इकारोपान्त्यादुकारोपान्त्याच्च कित् अः प्रत्ययो भवति, स्वरूपे च द्वे रूपे भवतः, पूर्वस्य च यथासंख्यमिकारोकारौ चान्तौ भवतः। किलत् श्वैत्य-क्रीडनयो:, किलकिलः। हिलत् हावकरणे, हिलहिलः । शिलत् उञ्छे, शिलशिल' छुरत् छेदने, छुरच्छुरः । मुरत् संवेष्टने, मुरुमुरः । घुरत् भीमार्थ-शब्दयो:, घुरुघुरः । पुरत् अग्रगमने, पुरुपुरः । सुरत् ऐश्वर्य-दीप्त्योः, सुरुसुरः, । कुरत् शब्दे, कुरुकुरः । चुरण् स्तेये, चुरुचुरः । हुल हिंसा-संवरणयोश्च, हुलहुलः । गुजत् शब्दे, गुजगुजः । गुडत् रक्षायाम् गुडगुडः । कुटत् कौटिल्ये, कुटुकुटः । पुटत् सश्लेषणे, पुटुपुटः । कुणत् शब्दोपकरणयो:, कुणुकुण' । मुणत् प्रतिज्ञाने मुणमुणः । अनुकरणशब्दा एते ॥१७॥

**जजल-तितल-काकोली-सरीसृपादयः ॥१८॥**

एते अप्रत्ययान्ता निपात्यन्ते । जल घात्ये, अस्य द्वित्वे पूर्वस्य जभावः, जजलः, यस्य जाजलिः पुत्रः । तिलत् स्नेहने, अस्य द्वित्वे पूर्वस्य च तिभावे धातोरिकारस्य अकारे तितलः । कुल बन्धु-संस्त्यानयोः, अस्य द्वित्वे पूर्वस्य च काभावे—काकोली, क्षीरकाकोलीति च वल्लीजातिः । सृप्लृ गतौ, अस्य द्वित्वे गुणाभावे पूर्वस्य च सरीभावे—सरीसृपः—उरगजातिः । आदिग्रहणाद् यथादर्शनमन्येऽपि ॥१८॥

**बहुलं गुण-वृद्धी चादेः ॥१९॥**

धातोः कित् अः प्रत्ययो भवति, सरूपे च द्वे रूपे भवतः, पूर्वस्य चेकारवन्तौ भवतः, यथादर्शनं च गुणवृद्धी भवतः । केलि किलः, कैलिकिलश्च —हसनशीलः । हिलत् हावकरणे, हेलिहिलः, हैलिहिलश्च—विलनशील' । शैलिशिलः, शैलिशिलश्च । शुभि दीप्तौ शोभते पुनः पुनरिति—शोभुशुभः, शौभुशुभः । णुदंत् प्रेरणे, नुदति पुनः पुनरिति—नोदुनुदः, नौदुनुदः । गुडत् रक्षायाम्, गुलति—भ्राम्यति पुनः पुनरिति—गोलुगुलः, गौलुगुलः । बुलण् निमज्जने, बोलयति पुनः पुनरिति—बोलुबुलः, बौलुबुलः । तत्तद्धात्वर्थास्तच्छीला अनुवादविशेषा वैते ॥१९॥

**णेर्लुप् ॥२०॥**

धातोरप्रत्ययसन्नियोगे बहुलं णेर्लुप् भवति । वज्र धारयतीति—वज्रधरः—इन्द्रः । एवं—चक्रधरः—विष्णु', भूधर'— अद्रिः, जलधरः—मेघः । बाहुलकात् प्रत्ययान्तरेऽपि,—देवयतीति—दिव्—द्यौ', व्योम, स्वर्गश्च । पुण्यं कारयन्तीति पुण्यकृतो देवाः, एवं—पर्णं शोषयतीति पर्णशुट् ।

"वान्ति पर्णशुषो वातास्ततः पर्णमुचोऽपरे ।
तत' पर्णरुह' पश्चात् ततो देवः प्रवर्षति ॥१॥

तथा—महतः कारयाचक्रुराक्रन्दान् इति प्राप्ते 'महतश्चक्रुराक्रन्दान्' इति भवति । "महीपालवचः श्रुत्वा जुघुषुः पुष्यमाणवाः । घोषयांचक्रुरित्यर्थः ॥२०॥

**भीण्-शलि-वलि-कल्यति-मर्च्यर्चि-मृजि-कु-तु-स्तु-दा-धा-रा-त्रा-का-पा-निहा-नञ्शुभ्यः कः ॥२१॥**

एभ्यः कप्रत्ययो भवति । ञिभींक् भये, बिभेति दुन्दुभात् परस्माच्च—भेकः—मण्डूकः, कातरश्च बिभेति वायोः—भेकः—मेघः । 'इंण्क् गतौ' एत्यद्वितीय इति-एकः असहायः, सख्या, प्रधानम्, असमानम्, अन्यश्च । पल फल शल गतौ, शलन्त्यात्मरक्षणाय तमिति शल्कः—शरणम् शलति त्यक्तं बहिरिति—शल्कं गृहीतरस शकलम्, शल्कः—काष्ठत्वक् मलिनं च काष्ठमुद्गरः करणं च । वलि सवरणे, वल्कः—दशन', वासः, त्वक् च । कलि शब्द-संख्यानयोः कल्कः—कषायः दम्भः, पिष्टपिण्डश्च । अत सातत्यगमने, अत्कः —आत्मा वायुः व्याधित', चन्द्रः, उत्पातश्च । मर्चः सौत्रो धातुः प्राप्तौ मर्क., देवदारुः, वायुः, दानवः, मनः, पन्नगः, विघ्नकारी च । "च-जः क-गम्" [२. १. ८६ ] इति कत्वम् । अर्च पूजायाम् अर्कः—सूर्य., पुष्पजातिः, कु[ष्ठ] रुजातिश्च । मृजौक् शुद्धौ, मार्कः—वायुः । कुंक् शब्दे, कोकः—चक्रवाकः । तुक् वृत्ति-हिंसा-पूरणेषु, तोकम्—अपत्यम् । ष्टुगक् स्तुतौ, स्तोकम्—अल्पम् । डुदांग्क् दाने, दाकः, यजमानः, यज्ञश्च । डुधांग्क् धारणे च, धाकः—ओदनः, अनड्वान्, अम्भः, स्तम्भश्च । रांक् दाने, राक'—दाता, अर्थः, सूर्यश्च, राका-पौर्णमासी, कुमाररजस्वला च । त्रैङ् पालने त्राकः—धर्मः शरणस्थानीयश्च । कै शब्दे, काकः—वायस' । पां पाने, पांक् रक्षणे वा, पाक'-बालः, असुर', पर्वतश्च । ओहांक् त्यागे, निहाकः—निःस्नेह', निर्मोकश्च, निहाकः

–गोधा । शुं गतौ, न शवतीति–अशोकः ॥२१॥

**विचि-पुपि-मुपि-शुष्यवि-सृ-वृ-शु-सु-भू-धू-मू-नी-वीभ्यः कित् ॥२२॥**

एभ्यः कित् कः प्रत्ययो भवति । विचृपी पृथग्भावे, विकः-करिपोतः । पुपंचू पुष्टौ, पुष्कः-निशाकरः । मुषश् स्तेये, मुष्कः–चौरः, मांसलो वा, मुष्कौ–वृषणौ । शुषच् शोषणे, शुष्कम्–अपगतरसम् । अव रक्षणादिषु, ऊकः–कुन्दुमः । सृ गतौ, सृकः–वायुः, बाणः, सृगालः, बकः, निरयश्च, सृका–आयुधविशेषः । वृगूट् वरणे, वृङ्श् सभक्तौ वा, वृकः–मृगजातिः, आदित्यः, धूर्तः, जाठरश्चाग्निः । शुं गतौ, शुकः–कीरः, ऋषिश्च । षुंगट् अभिषवे, सुकः–निरामयः । भू सत्तायाम् भूकः–कालः, छिद्रं च । धूत् विधूनने, धूगूट् कम्पने धूग्श् कम्पने वा धूकः–वायुः,व्याधिश्च धूका–पताका । मूङ् बन्धने, मूकः–अवाक् । णींग् प्रापणे, नीकः–खगः ज्ञाता च; नीका–उदकहारिका, ज्ञातिश्च । वींक् प्रजनादिषु, वीकः–वायुः, व्याधिः, नाशः, अर्थः मनः, वसन्तश्च, वीका–पक्षिजातिः, नेत्रमलं च ॥२२॥

**कृगो वा ॥२३॥**

कृगः कः प्रत्ययो भवति, स च कित् वा भवति। डुकृंग् करणे, कर्कः–अग्निः, सारङ्गः, दर्भः, श्वेताश्वश्च । कृकः–शिरोग्रीवम् ॥२३॥

**घु-यु-हि-पि-तु-शोर्दीर्घश्च ॥२४॥**

एभ्यः कित् कः प्रत्ययो भवति, एषां च दीर्घो भवति । घुङ् शब्दे, घूकः–कौशिकः । युक् मिश्रणे, यूका–क्षुद्रजन्तुः स्वेदजः । हिट् गति-वृद्ध्योः, हीकः पक्षी । पिंत् गतौ, पीकः–उपस्थो, जलाश्रयश्च । तुंक् वृत्यादिषु, तूकः-उपस्थः, पर्वतश्च । शुं गतौ, शूकः-किंशारुः, अभिषवः शोकश्च, शूका-हृल्लेखः ॥२४॥

**ह्रियो रश्च लो वा ॥२५॥**

ह्रियः कित् कः प्रत्ययो भवति, रेफस्य च लकारो वा भवति । [ह्रींक् लज्जायाम्,] ह्रीकः, ह्लीकः-लज्जापरः, नकुलश्च । ह्लीकः–लिङ्ग्यपि ॥२५॥

**निष्क-तुरुष्कोदर्का-ऽलर्क-शुल्क-श्वफल्क-किञ्जल्कोल्का-वृक्क-च्छेक-केका-यस्काऽऽदयः ॥२६॥**

एते कप्रत्ययान्ता निपात्यन्ते। नेः सीदतेर्डिच्च, निष्कः-सुवर्णादिः । तूरैचि त्वरायाम्, अस्य ह्रस्व उषश्चान्तः, तुरुष्कः–वृक्षः, म्लेच्छश्च । उदः परात् अर्तेः, उदर्कः–क्रियाफलम् । अली भूषणादौ, अस्मादर् चान्तः, अलर्कः–उन्मत्तः, मदालसात्मजश्च । “पल फल शल गतौ” इत्यस्योपान्त्योत्वं च, शुल्क–रक्षा-निवेशः । शुनः परात् फालेर्ह्रस्वश्च, श्वफल्कः-अन्धकविशेषः । किमः परात् जॄषो रस्य लश्च, किञ्जल्कः–पुष्परेणुः । ज्वलेरुलादेशश्च, उलेः सौत्रस्य वा, उल्का औत्पातिकं ज्योतिः, अग्निज्वाला च वृजैकि वर्जने, अगुणत्वं च, वृक्कः–मुष्कः । छ्यतिकायत्योरेत्वं च, छेकः–मनीषी, केका–मयूरवाक् । यमेर्मस्य सः, यस्कः–आदिग्रहणात् ढक्का-स्पृक्काऽऽदयोऽपि ॥२६॥

**दॄ-कॄ-नॄ-सृ-भृ-धृ-वृ-मृ-स्तु-कु-क्षु-लङ्घि-चरि-चटि-कटि-कण्टि-चणि-चपि-फलि-वमि-तम्यवि-देवि-वन्धि-कनि-जनि-मशि-क्षारि-कुरि-वृति-वल्लि-मल्लिसल्लचलिभ्योऽकः ॥२७॥**

एभ्योऽकः प्रत्ययो भवति । दॄश् विदारणे, दरकः–भीरुः । कॄत् विक्षेपे, करकः–जलभाजनम्, कमण्डलुश्च, करका:–वर्षपाषाणः । नॄश् नये, नरकः–निरयः । सृं गतौ, सरको–मद्यविशेषः । कंसभाजनविशेषश्च, सरका-मधुपानवारः । डुभृंग्क् पोषणे च, भरकः–गोण्यादिः । धङ् अवध्वंसने, धरकः–सुवर्णोन्माननियुक्तः । वृगूट् वरणे, वरकः वधूजानि-

सहायः, वाजसनेयभेदश्च । मूंत् प्राणत्यागे, मरकः—जनोपद्रवः । ष्टुगूक् स्तुतौ, स्तवकः— पुष्पगुच्छः । कुंक् शब्दे, कवकम्—अभक्ष्यद्रव्यविशेषः । टुक्षुक् शब्दे, क्षवकः—राजसर्षपः । लघुङ् गतौ, लङ्घकः—रङ्गोपजीवी । चर् भक्षणे च, चरकः—मुनिः । चटण् भेदे; चटकः—पक्षी । कटे वर्षाऽऽवरणयोः, कटकः—वलयः । कटु गतौ, कण्टकः—तरुरोम । चण शब्दे, चणकः—मुनिः, धान्यविशेषश्च । चषी भक्षणे, चषकः—पानभाजनम् । फल निष्पत्तौ, फलकः—खेटकम् । टुवम् उद्गिरणे, वमकः—कर्मकरः । तमूच् काङ्क्षायाम्, तमकः—व्याधिः, क्रोधश्च । अव रक्षणादौ, अवका—शैबलम् । देवृङ् देवने, देवका—अप्सराः, देविका—नदी । बन्धंश् बन्धने, बन्धकः—चारकपालः । कनै दीप्त्यादिषु, कनकं—सुवर्णम् । जनैचि प्रादुर्भावे, जनकः—सीतापिता । मश रोपे च, मशकः—क्षुद्रजन्तुः । क्षर सचलने, ण्यन्त, क्षारकं—बालमुकुलम् । कुरत् शब्दे, कोरक-प्रौढमुकुलम् । वृतूङ् वर्तने, वर्तका वर्तिका वा—शकुनिः वल्लि सवरणे, वल्लकी—वीणा । मल्लि धारणे, मल्लकः—शरावः, मल्लिका—पुष्पजातिः, दीपाधारश्च । सल्लः सौत्रः, सल्लकी—वृक्ष, सत्कृत्य लक्ष्यते स्वाद्यते गजैरिति वा—सल्लकी । अली भूषणादिषु, अलकः—केशविन्यासः, अलका—पुरी ॥२७॥

## को रु-रुण्टि-रण्टिभ्यः ॥२८॥

कुशब्दात् परेभ्य एभ्योऽक प्रत्ययो भवति । रुक् शब्दे, कुरवकः-वृक्षः । रुटु स्तेये, कुरुण्टको-वर्णगुच्छः । रण्टिः प्राणहरणे सौत्र, कुरण्टकः—स एव ॥२८॥

## ध्रु-धून्दि-रुचि-तिलि—पुलि—कुलि—क्षिपि—क्षुपि-लिखिभ्यः कित् ॥२९॥

एभ्यः कित् अक प्रत्ययो भवति । ध्रु स्थैर्ये च, ध्रुवकः— स्थिरः, ध्रुवका—आवपनविशेष । धूत् विधूनने, धुवकं—धूननम्, धुवकः—प्रधानं, स्त्री धुवका—आवपनविशेषः । उन्दैप् क्लेदने, उदकं—जलम् । रुचि अभिप्रीत्यां च, रुचकः— आभरणविशेषः । तिलत स्नेहने, तिलकः— विशेषकः, वृक्षश्च । पुलग् समुच्छ्राये, पुल महत्त्वे वा, पुलकः—रोमाञ्चः । कुल बन्धु-सस्त्यानयोः, कुलकं—सयुक्तम् । क्षिपींत् प्रेरणे, क्षिपकः— वायुः, क्षिपका— आयुधम् । क्षुपः सौत्रो ह्रस्वीभावे, क्षुपकः—गुल्म । क्षुभच् संचलने, क्षुभकः—पाञ्चालकः । लिखत् अक्षरविन्यासे, लिखकः—चित्रकरः ॥२९॥

## छिदि-भिदि-पिटेर्वा ॥३०॥

एभ्योऽकः प्रत्ययो भवति, स च किद् वा भवति । छिदृपी द्वैधीकरणे, छिदक — खड्गः, क्षुरश्च, छेदकः— परशुः । भिदृपी विदारणे, भिदक—जलं, पिशुनश्च, भेदकं—वज्रम् । पिट शब्दे च, पिटकः—क्षुद्रस्फोटकः, पेटकं—संघातः ॥३०॥

## कृपेर्गुण-वृद्धी च वा ॥३१॥

कृपेरकः प्रत्ययो भवति, गुण-वृद्धी चास्य वा भवतः । कृपींत् विलेखने, कर्षकः, कृषकः—परशुः, कार्षकः, कृषकः—कुटुम्बी ॥३१॥

## नञः पुंसेः ॥३२॥

नञः परात् "पुसण् अभिमर्दने" इत्यस्मात् किदकः प्रत्ययो भवति । नपुसकं - तृतीया प्रकृतिः, नखादित्वात् "नञत्" [३.२ १२५.] न भवति ॥३२॥

## कीचक-पेचक-मेचक-मेनकाऽर्भक-धमक-वधक-लवक-जहकैरकैडकाऽश्मक-लमक-क्षुल्लक-वटवकाऽऽढकाऽऽदयः ॥३३॥

एते कीचकादयः शब्दा अकप्रत्ययान्ता निपात्यन्ते । कचि बन्धने, अस्योपान्त्यस्येत्वं च, कीचकः—

वंशविशेषः । डुपचींष् पाके, मचि कल्कने, मनिंचू ज्ञाने, एषामुपान्त्यस्यैत्वं च पेचकः—करिजघनभागः, मेचकः—वर्ण, मेनका अप्सराः । अर्तेर्भश्चान्तः, अर्भकः— बालः । ध्मां शब्दाऽग्निसंयोगयोः, अस्य धमादेशश्च, धमकः— कीटः, कर्मारश्च, अन्यत्रापि धमादेशो दृश्यते, क्ते—धान्तः । हन्तेर्वधश्च, वधकः— हन्ता, व्याधिश्च, वधकं— पद्मबीजम्, अन्यत्रापि दृश्यते, वृत्रं हन्ति अचि— वृत्रवध —शक्रः, वधिता- निर्मोचकः, वध्यः, वधनम् । लघुङ् गतौ, नलुक् च, लघकः— असमीक्ष्यकारी । जहातेर्द्वे रूपे अन्तलुक् च, जहकः— कालः, क्षुद्रश्च । ईरिक् गति-कम्पनयोः, ईडिक् स्तुतौ, अनयोर्गुणश्च, एरका—उदकतृणजातिः, एडका—अविजातिः । अशौटि व्याप्तौ, अस्य मोऽन्तः, अश्मका—जनपदः । रमि क्रीडायाम्, अस्य लमादेशः लमकः—ऋषिविशेषः । क्षुदपी सपेपे, अस्य क्षुल्लादेशश्च क्षुल्लकं— दभ्रम् ; क्षुध लातीति वा—क्षुल्लः; क्षुल्ल एव क्षुल्लक इति वा । वट वेष्टने, अस्यावोऽन्तश्च, वटवका—तृणपुञ्जः । आङ्पूर्वात् ढौकतेर्डिश्च, आढकं- मानम् । आदिग्रहणाद् बृहत्तन्त्रात्, कला आपिबन्तीति—कलापकाः शास्त्राणि । कथण् वाक्यप्रबन्धे, कथयतीति—कथकः- तोटकाख्यायिकादीनां वर्णयिता । एवम्—उपक-चम्पक-फलहकादयोऽपि ॥३३॥

**शलि-बलि-पति-वृति-नभि पटि-तटि-तडि-गडि-भन्दि-वन्दि-मन्दि-नमि-कु-दु-पू-मनि-खजिभ्य आकः ॥३४॥**

एभ्य आकः प्रत्ययो भवति । पल फल शल गतौ, शलि चलने च वा, शलाका—एषणी, पूरणरेखा, द्यूतोपकरणं, सूची च । बल प्राणन-धान्यावरोधयोः, बलाका—जल-चरी शकुनिः । पत्लृ गतौ, पताका— वैजयन्ती । वृतूङ् वर्तने, वर्ताका— शकुनिजातिः । णभच् हिसायाम्, नभाकः—चक्रवाकजातिः, तमः, काकश्च । पट गतौ, पटाका—वैजयन्ती, पक्षिजातिश्च । तट उच्छ्राये, तटाकं— सरः । तडण् आघाते, तडाक—तदेव । गड सेचने, गडाकः— शाकजातिः । भदुङ् सुख-कल्याणयोः, भन्दाकं—शासनम् । वदुङ् स्तुत्यभिवादनयोः, वन्दाकः—चीवरभिक्षुः । मदुङ् स्तुत्यादिषु, मन्दाका—औषधी । णमं प्रह्वत्वे, नमाका— म्लेच्छजातिः । कुंङ् शब्दे, कवाकः—पक्षी । टुदुंट् उपतापे, दवाकः—म्लेच्छः । पूङ् पवने, पवाका— वात्या । मनिच् ज्ञाने, मनाका—हस्तिनी । खज मन्थे, खजाकः— आकरः, मन्थाः, दर्विः, आकाश, बन्धकी, शरीरं पक्षी च ॥३४॥

**शुभि-गृहि-विदि-पुलि-गुभ्यः कित् ॥३५॥**

एभ्यः किदाकः प्रत्ययो भवति । शुभि दीप्तौ, शुभाका—पक्षिजातिः । गृहणि ग्रहणे, गृहाकः । विदंक् ज्ञाने, विदाकाभूतग्रामः । पुल महत्त्वे, पुलाकः. अर्धस्विन्नो धान्यविशेषः । गुंङ् शब्दे, गुंत् पुरीषोत्सर्गे वा, गुवाक—पूगफलम् ॥३५॥

**पिषेः पिन्-पिण्यौ च ॥३६॥**

"पिष्लृप् सचूर्णने" इत्यस्मात् किदाकः प्रत्ययो भवति, अस्य च 'पिन् पिण्य' इत्यादेशौ भवतः । पिनाकम्—ऐशं धनुः, शूलं वा, पिनाकः-दण्डः, पिण्याकः—तिलादिखलः ॥३६॥

**मवाक-श्यामाक-वार्ताक-वृन्ताक-ज्योन्ताक-गूवाक-भद्राकाऽऽदयः ॥३७॥**

एते आकप्रत्ययान्ता निपात्यन्ते । मव्य बन्धने, यलोपः, मवाकः—रेणुः । श्यैङ् गतौ, मोऽन्तश्च, श्यामाकः—जघन्यो व्रीहिः । वृतेर्वृद्धिश्च, वार्ताकी— शाकविशेषः तत्फल वार्ताकम् । स्वरान्नोऽन्तश्च, वृन्ताकी उच्चबृहती, तत्फल—वृन्ताकम् । ज्युङ् गतौ,

न्तश्च प्रत्ययादिः, ज्यवतेऽस्मिन् स्विद्यमान इति- ज्योन्ताकं—स्वेदसद्मविशेषः । गुत् पुरीषोत्सर्गे, गुंङ्शब्दे वा, ऊत्रादेशश्च, गूत्राकं—पूगफलम् । भदुङ् सुख-कल्याणयो , अस्य भद्रादेशश्च, भद्राकः—अकुटिलः । आदिग्रहणात् स्योनाक-चार्वाक—पराकाऽदयो भवन्ति ॥३७॥

## क्री-कल्यलि-दलि स्फटि-दूपिभ्य इकः ॥३८॥

एभ्य इक प्रत्ययो भवति । डुक्रींगश् द्रव्यविनिमेये, क्रयिकः—क्रेता । कलि शब्द-सङ्ख्यानयोः, कलिका—कोरकः, उत्कलिका—ऊर्मिः । अली भूषणादौ, अलिक—ललाटम् । दल विशरणे, दलिकं—दारु । स्फट स्फुट्ट विसरणे, स्फटिक —मणिः । दुषच् वैकृत्ये, दूपिका—नेत्रमल ॥३८॥

## आङः पणि-पनि-पदि-पतिभ्यः ॥३९॥

आङ' परेभ्य एभ्य इक प्रत्ययो भवति । पणि व्यवहार-स्तुत्योः, आपणिकः—पत्तनवासी, व्यवहारज्ञो वा । पनि स्तुतौ, आपनिकः— स्तावकः, इन्द्रनील , इन्द्रकीलो वा । पदिच् गतौ, आपदिकः—इन्द्रनीलः, इन्द्रकीलो वा । पत्लृ गतौ, आपतिकः—पथि वर्तमानः, मयूरः, श्येनः, कालो वा । आपणिकादयश्चत्वारो वणिजोऽपि ॥३९॥

## नसि वसि-कसिभ्यो णित् ॥४०॥

एभ्यो णिदिकः प्रत्ययो भवति । णसि कौटिल्ये, नासिका—घ्राणम् । वसं निवासे, वासिका—माल्यदामविशेषः, छेदनद्रव्यं च । कस गतौ, कासिका—वनस्पतिः ॥४०॥

## पा-पुलि-कृपि-क्रुशि-व्रश्चिभ्यःकित् ॥४१॥

एभ्यः किदिकः प्रत्ययो भवति । पां पाने, पिकः— कोकिलः । पुल महत्वे, पुलिकः— मणि । कृपींत् विलेखने, कृपिकः—पामर , तृणजातिश्च । क्रुश आह्वान—रोदनयोः, क्रुशिकः— क्रोष्टुकः, उल्लू कश्च । ओव्रश्चौत् छेदने, वृश्चिकः— सविषः कीटः, राशिश्च नक्षत्रपादनवकरूपः ॥४१॥

## प्राङः पणि-पनि-कपिभ्यः ॥४२॥

'प्राङ्' इत्येतस्मादुपसर्गसमुदायात् परेभ्य एभ्यः किदिकः प्रत्ययो भवति । पणि व्यवहार-स्तुत्योः, प्रापणिकः— वणिक् । पनि स्तुतौ, प्रापनिकः—पथिकः । कप हिंसायाम् , प्राकपिक — वायुः, खलः, नर्तकः, मालाकारश्च । प्रपूर्वात् पणेराङ्पूर्वाच्च कपेरिच्छन्त्यन्ये— प्रपणिकः—गन्धविक्रयी, आकपिको न कर्तव्यः ॥४२॥

## मुषेर्दीर्घश्च ॥४३॥

मुषेरिक प्रत्ययो भवति, दीर्घश्च स्वरस्य भवति । मूषिकः - आखुः ॥४३॥

## स्यमेः सीम् च ॥४४॥

स्यमेरिकः प्रत्ययो भवति, अस्य च 'सीम्' इत्यादेशो भवति । स्यमू शब्दे, सीमिकः—वृक्षः, उदक कृमिश्च, सीमिका—उपजिह्विका सीमिक—वल्मीकम् । केचित् 'सिम्' इति ह्रस्वोपान्त्यमादेशं प्रत्ययस्य च दीर्घत्वमिच्छन्ति—सिमीकः—सूक्ष्मकृमिः ॥४४॥

## कुशिक-हृदिक-मक्षिकेतिक-पिपीलिकादयः ॥४५॥

एते किदिकप्रत्ययान्ता निपात्यन्ते कुपे श च कुशिकः—मुनिः । हृगो दोऽन्तश्च, हृदिकः—यादवः । मषेः सोऽन्तश्च, मक्षिका—क्षुद्रजातिः । एतेस्तोऽन्तश्च, इतिक —मुनिः । पीलेर्द्वे च, पिपीलिका—मध्यक्षामा कीटजातिः । आदिग्रहणात् गन्दिक-भूरिकभुलि-काऽऽदयो भवन्ति ॥४५॥

## स्यमि-कपि-दूष्यनि-मनि-मलि-वल्यलि-पालि-कणिभ्य ईकः ॥४६॥

एभ्य ईकः प्रत्ययो भवति । स्यमू शब्दे,

स्यमीकः—वृक्षः, वल्मीकः, नृप गोत्रं च स्यमीकं—जलम् स्यमीका—कृमिजातिः । कष हिंसायम्, कषिका—कुद्दालिका । दुषंच् वैकृत्ये, ण्यन्तः, दूषिका—नेत्रमलः, वीरणजातिः, वर्तिः, लता च । अनक् प्राणने, अनीकं—सेनासमूहः, सग्रामश्च । मनिच् ज्ञाने, मनीकः—सूक्ष्म. । मलि धारणे, मलीकम्—अञ्जनम्, अरिश्च । वलि सवरणे, वलीकः—बलवान् पटलान्तश्च, वलीकं—वेश्मदारु । अली भूषणादौ, अलीकम्—असत्यम्, अलीका—पण्यस्त्री, व्यलीकम्—अपराधः, व्यलीका—लज्जा । पलण् रक्षणे, पालीकं—तेजः । कण शब्दे, कणीकः—पटवासः, कणीका—भिन्नतण्डुलावयवः, वनस्पतिबीजं च॥४६॥

**जॄ-पॄ-दॄ-शॄ-वृ-मृभ्यो द्वे रश्चादौ ॥४७॥**

एभ्यः ईकः प्रत्ययो भवति, द्वे च रूपे भवतः, एषां चादौ रो भवति । जॄषूच् जरसि, जर्जरीका—शतपत्री । पृश् पालन—पूरणयोः, पर्परीका—जलाशयः, सूर्यश्च, पर्परीकः—अग्निः, कुररः, भक्ष्यम्, कुर्कुरश्च । दृश् विदारणे, दर्दरीकः— दाडिमः, इन्द्रः, वादित्रविषेशः, वादित्रभाण्ड च । शृश् हिंसायाम्, शर्शरीकः—कृमिः, विकलेन्द्रियः, दुष्टाश्वः, लावकश्च, शर्शरीका—माङ्गल्याभरणम् वृग्ट् वरणे, वर्वरीकः—संवरणम्, उरणः, पतत्री, केशसघातश्च, वर्वरीका—सरस्वती मृत् प्राणत्यागे, मर्मरीक.—अग्निः, शूरः, श्येनश्च ॥४७॥

**ऋच्यृजि-हृपीपि-दृशि-मृडि-शिलि-निलीभ्यः कित् ॥४८॥**

एभ्य. किदीकः प्रत्ययो भवति । ऋचत् स्तुतौ ऋचीक—ऋषिः । ऋजि गति-स्थानार्जनोर्जनेपु, ऋजीकं—वज्रम् बल, स्थान च । हृप् अलीके, हृषच् तुष्टौ वा, हृषीकम्—इन्द्रियम् । इषत् इच्छायाम् ईष उञ्छे, ईष गति-हिसा-दर्शनेषु वा, इषीका, ईषीका च तृणशलाका । दृशं प्रेक्षणे, दृशीकं—मनोज्ञम्, दृशीका रजस्वला । मृडत् सुखने, मृडीकं—सुखकृत्, सुखं च-शिलत् उञ्छे, शिलीकः—सस्यविशेषः । लींडच् श्लेषणे नि पूर्वः,निलीकं—वृत्तम् । बाहुलकादीलुक् ॥४८॥

**मृदेर्वोऽन्तश्च वा ॥४९॥**

मृदेः किदीकः प्रत्ययो भवति, वकारश्चान्तो वा भवति । मृंदश् क्षोदे, मृद्वीका मृदीका च-द्राक्षा ॥४९॥

**सृणीका-ऽस्तीक-प्रतीक-पूतीक-समीक-वाहीक-वाह्लीक-वल्मीक-कल्मलीक-तिन्तिडीक-कङ्कणीक-किङ्किणीक-पुण्डरीक-चञ्चरीक-फर्फरीक-झर्झरिक-बर्बरीकाऽऽदयः ॥५०॥**

एते किदीकप्रत्ययान्ता निपात्यन्ते । सर्तेर्णोऽन्तश्च, सृणीकः-वायुः अग्निः अशनिः, उन्मत्तश्च, सृणीका लाला अस्तेस्तोऽन्तश्च । अस्तीकः—जरत्कारुसुतः । प्रांक्पूरणे, प्रातेस्तोऽन्तो ह्रस्वश्च प्राति शरीरमिति- प्रतीकः—वायुः अवयवः, सुखं च । सुप्रतीकः—दिग्गजः । पुवस्तोऽन्तश्च, पूतीकं—तृणजातिः । सम्पूर्वस्य एतेर्लुक् च, संयन्त्यस्मिन्निति-समीक—संग्रामः । वहि—वल्ह्योः—दीर्घश्च, वाहीकः, वल्हीकः, एतौ देशौ । वलेर्मोऽन्तश्च, वल्मीकः-नाकुः । कलेर्मलश्चान्तः, कल्मलीकं—ज्वाला । तिमेस्तिड् चान्त, तिन्तिडीकः—पक्षीः, वृक्षाम्लश्च, तन्तिडीक इति पूर्वस्यैत्वं नेच्छन्त्येके । चङ्क्षण्यतेः कङ्कण् च, कङ्कणीकः—घन्टाजालम् । किम. परात् कणते. किण् च, किङ्किणीका—घण्टिका । पुणेर्डर चान्तः, पुण्डतेर्वा अर्, पुण्डरीक—पद्म, छत्रं व्याघ्रश्च । चन्चेरर् चान्तः, चन्चरीकः—भ्रमरः । पिपर्त्तेर्गुणो द्वित्वं पकारयोः फत्वं रश्चान्तः पूर्वस्य, फर्फरीकं—पल्लवं, पादुका, मर्दलिका च झोर्यतेर्द्वित्वं

तृतीयाभावः पूर्वस्य रश्चान्तः, झर्झरीकः-देहः, झर्झरीका-वादित्रभाण्डम् । एवं-घस्तेः, घर्घरीका-घण्टिका आदिग्रहणादन्येऽपि ॥५०॥

**मि-वमि-कटि-भल्लि-कुहेरुकः ॥५१॥**

एभ्य उकः प्रत्ययो भवति । डुमिग्ट् प्रक्षेपणे, मयुकः—आतप, । बाहुलकात् "मिग्मीनो०" [४.-२ ८] इति नात्वम् । टुवम् उद्गिरणे, वमुकः—जलदः । कटे वर्षा-ऽऽवरणयोः, कटुकः—रसविशेषः । भल्लि परिभाषण—हिंसादानेषु, भल्लुकः—ऋक्षः । कुहणि विस्मापने, कुहुकम्—आश्चर्यम् ॥५१॥

**सं-विभ्यां कसेः ॥५२॥**

आभ्यां परस्मात् कसेरुकः प्रत्ययो भवति कस गतौ' सकसुकः—सुकुमार.' परापवादशील', श्राद्धाग्निश्च, संकसुकं—व्यक्ताव्यक्तं संकीर्णं च । विकसुकः—गुणवादी, परिश्रान्तश्च ॥५२॥

**क्रमेः क्रम च वा ॥५३॥**

क्रमेरुकः प्रत्ययो भवति, अस्य च 'क्रम' इत्यादेशो वा भवति । क्रमू पादविक्षेपे, क्रमुकः—बन्धनम् आदेशविधानबलाच्च न गुणः क्रमुकः पूगतरु ॥५३॥

**कमि-तिमेर्दोऽन्तश्च ॥५४॥**

आभ्यामुकः प्रत्ययो भवति, दश्चान्तो भवति । कमुङ् कान्तौ' कन्दुकः—क्रीडनम् । तिमच् आर्द्रभावे, तिन्दुकः—वृक्ष' ॥५४॥

**मण्डेर्मड्ड च ॥५५॥**

मण्डेरुक प्रत्ययो भवति मड्ड च आदेशो भवति । मड्डभूषायाम् मड्डुक —वाद्यविशेष' ॥५५॥

**कण्यणेर्णित् ॥५६॥**

आभ्यां णिदुक प्रत्ययो भवति । कण अण शब्दे, काणुक काक', हिंस्रश्च' काणुकम् आणुकं च—अक्षिमलम् ॥५६॥

**कञ्चुकांशुक-नंशुक-पाकुक-हिबुक-चिबुक-जम्बुक-चुलुक-चूचुकोल्मुक-भावुक-पृथुक-मधुकादयः ॥५७॥**

एते किदुकप्रत्ययान्ता निपात्यन्ते कचि बन्धने अशौटि व्याप्तौ, नशौच् अदर्शने, एषां स्वरान्नोऽन्तश्च कञ्चुकः—कूर्पास', अंशुकं—वस्त्रम् नंशुको—रणरेणुः, प्रवासशीलः,चन्द्रः, प्रावरण च । पचेः पाक् च पाकुकः—लघुपाची सूप', सूपकारः अध्वर्युश्च । हिनोति-चिनोति जमतीना वोऽन्तऽश्च, हिबुकं—लग्नाच्चतुर्थं स्थानम्, रसातलं, च, चिबुकं मुखाधोभागः, जम्बुकः—सृगालः । चुलुम्पः सौत्र', अन्त्यस्वरादिलोपश्च चुलुम्पतीति — चुलुकः करकोश. चतेचूच् च, चूचकः—स्तनाग्रभागः । ज्वलेरुल्म् च, उल्मुकम्—अलातम् । भातेर्वोऽन्तश्च, भावुकः—भगिनीपतिः । प्रथिष् प्रख्याने, पृथुकः-शिशु व्रीह्याद्यभ्यूषश्च । मचि कल्कने, धश्चान्तादेश, मधुक—यष्टीमधु । आदिग्रहणाद् वालुकी—वालुकादयो भवन्ति ॥५७॥

**मृ—मन्यञ्जि—जलि-बलि-तलि—मलि-मल्लि-भालि—मण्डि—बन्धिभ्य ऊकः ॥५८॥**

एभ्य ऊकः प्रत्ययो भवति मृङ् प्राणत्यागे, मरूकः—मयूरः, मृग., निदर्शनेभ , तृणं च । मनिंच् ज्ञाने, मनूकः-कृमिजातिः । अञ्जौप् व्यक्ति-म्रक्षण-गतिषु, अञ्जूकः—हिस्रः । जल घात्ये, जलूका—जलजन्तुः । बल प्राणन—धान्यावरोधयोः, बलूकः—उत्पलमूलं, मत्स्यश्च तलण् प्रतिष्ठायाम्, तलूकः—त्वक्कृमिः । मलि धारणे, मलूकः—सरोजशकुनिः । मल्लि धारणे, मल्लूक.—कृमिजातिः । भलिण् आभण्डने, भालूकः ऋक्ष. । मुहभूषायाम् मण्डूकः—दुर्दुरः बन्धश् बन्धने, बन्धूक.—बन्धुजीवः ॥५८॥

**शल्यणेर्णिद् ॥५९॥**

आभ्या णिदूकः प्रत्ययो भवति । पल फल शल गतौ, शाल्लूकं—जलकन्दः, बज्वांश्च । अण शब्दे, आणूकम्—अक्षिमलम् ॥५९॥

**कणि-भल्लेर्दीर्घश्च वा ॥६०॥**

आभ्यामूकः प्रत्ययो भवति, दीर्घश्चानयोर्वा भवति । कण शब्दे, कणूकः—धान्यस्तोक , काणूकः- पक्षी, काणूकम्—अक्षिमल', तमो वा । भल्लि परिभाषण—हिसा—दानेषु, भल्लूकः भाल्लूकश्च—ऋक्षः ॥६०॥

**शम्बूक—शाम्बूक-वृधूक-मधूकोलूकारुवूक—वरूकादयः ॥६१॥**

एते ऊकप्रत्ययान्ता निपात्यन्ते । शमेर्वोऽन्तो दीर्घश्च वा । शम्बूक'—शङ्ख', शाम्बूकःस एव । वृश् वरणे, अस्य वृधभावश्च, वृधूकः—मातृवाहकः,वृधूकं जलम् । मदेर्धश्च, मदयतीति—मधूक'—वृक्षः । अलेरुच्चोपान्त्यस्य, उलूकः—काकारिः । उरुपूर्वाद् वातेः किच्च, उरु वाति उरुवूकः—एरण्ड' । वृधेर्लोपश्च, वर्धत इति—वरूकः—तृणजातिः आदिग्रहणादनूकवावदूकाऽऽदयो भवन्ति ॥६१॥

**किरोऽङ्को रो लश्च वा ॥६२॥**

किरतेरङ्क' प्रत्ययो भवति । रेफस्य च लकादेशो वा भवति । करङ्कः—समुद्रः, कलङ्कः—लाञ्छनम् ॥६२॥

**रा-ला-पा-का-भ्यः कित् ॥६३॥**

एभ्यः किदङ्कः प्रत्ययो भवति । रांक् दाने, रङ्कः बलीयान् । लांक् दाने, लङ्का पुरी । पाक् रक्षणे, पङ्कः कर्दमः । कैं शब्दे कङ्कः पक्षी ॥६३॥

**कुलि-चिरिभ्यामिङ्कक् ॥६४॥**

आभ्यामिङ्कक् प्रत्ययो भवति । कुल बन्धुसंस्त्यानयोः, कुलिङ्कः चटकः । चिर हिसायाम् सौत्रः, चिरि जलयन्त्रम् ॥६४॥

**कलेरविङ्कः ॥६५॥**

कलेरविङ्कः प्रत्ययो भवति । कलि शब्दसख्यानयोः, कलविङ्कः गृहचटकः ॥६५॥

**क्रमेरेलकः ॥६६॥**

क्रमू पादविक्षेपे, इत्यस्मादेलकः प्रत्ययो भवति । क्रमेलकः करभः ॥६६॥

**जीवेरातृको जैव् ॥६७॥**

जीव प्राणधारणे, इत्यस्मादातृकः प्रत्ययो भवति, जैव इत्यादेशश्च भवति । जैवातृकः आयुष्मान् चन्द्र' आम्रः वैद्यः मेघश्च । जैवातृका जीववत्सा स्त्री ॥६७॥

**हृ-भू-लाभ्य आणकः ॥६८॥**

एभ्य आणकः प्रत्ययो भवति । हृंग् हरणे, हराणकः चौर । भू सत्तायाम् , भवाणकः गृहपतिः । लांक् आदाने, लाणकः हस्ती ॥६८॥

**प्रियः कित् ॥६९॥**

प्रींग्श् तृप्तिकान्त्योः, इत्यस्मादाणकः प्रत्ययो भवति स च कित् भवति । प्रियाणकः पुत्रः ॥६९॥

**धा—लू—शिङ्घिभ्यः ॥७०॥**

योगविभाग उत्तरार्थः एभ्यश्च आणकः प्रत्ययो भवति । डुधांग्क् धारणे च, धाणक' दीनारद्वादशभाग' हविषां ग्रहः छिद्रपिधानं च । लूग्श् छेदने, लवाणकः कालः तृणजाति' दात्रं च । शिघु आघ्राणे, शिङ्घाणकः नासिकामलः ॥७०॥

**शी—भी राजेश्चानकः ॥७१॥**

शीभीराजिभ्यो धाल्वशिङ्घिभ्यश्च आनकः प्रत्ययो भवति । शीङ् स्वप्ने, शयानकः–अजगरः, शैलश्च । ञिभीङ् भये, बिभेत्यस्मादिति भयानकः-भीमः, व्याघ्रः, वराहः, राहुश्च । राजृग् दीप्तौ, राजानकः- क्षत्रिय. । डुधांग्क् धारणे च, धानकः-हेमादिपरिमाणम् । ल्वग्श् छेदने, लवानकः-देशविशेषः, दात्रं च । शिङ्घन्त्यनेनेति शिङ्घानकः-श्लेष्मायुः पुरीषं च ॥ ७१ ॥

**अणेर्डित् ॥ ७२ ॥**

अणेर्डिदानकः प्रत्ययो भवति । अण् शब्दे, आनकः- पटह. ॥ ७२ ॥

**कनेरीनकः ॥ ७३ ॥**

कनै दीप्तिकान्तिगतिषु, इत्यस्मादीनकः प्रत्ययो भवति । कनीनकः-कनीनिका वा ऽक्षितारका ॥७३॥

**गुङ ईधुकैधुकौ ॥७४॥**

गु– शब्दे, इत्यस्मादीधुक एधुक-इत्येतौ प्रत्ययो भवतः । गवीधुकं-नरम्, धान्यजातिश्च । गवेधुका-तृणजातिः ॥७४॥

**वृतेस्तिकः ॥७५॥**

वृतूङ् वर्तने, इत्यस्मात्तिक. प्रत्ययो भवति । वर्त्तिका-चित्रकरोपकरणम्, शकुनिः, द्रव्यगुटिका च ॥७५॥

**कृति-पुति-लति-भिदि-भ्यः कित् ॥७६॥**

एभ्यः कित्तिक. प्रत्ययो भवति । कृतैत् छेदने, कृत्तिका नक्षत्त्रम् । पुतिलती सौत्रौ, पुत्तिका-मधुमक्षिका लत्तिका-वाद्यविशेष', गौः गोधा च, गोपूर्वात् गोलत्तिका-गृहगोलिका, अवपूर्वात्, अवलत्तिका-गोधा, आलत्तिका-गानप्रारम्भ । भिदृपी विदारणे, भित्तिका, कुड्यम्, माषादिचूर्णम्, शरावती च नदी ॥७६॥

**इष्यशि-मसिभ्यस्तकक् ॥७७॥**

एभ्यस्तकक् प्रत्ययो भवति । इषत् इच्छायाम्, इष्टका-मृद्विकारः । अशौटि व्याप्तौ, अष्टकाः-श्राद्धतिथयस्तिस्रः, अष्टम्यः, पितृदैवत्यं च । मसैच् परिणामे, मस्तकः-शिरः ॥७७॥

**भियो द्वे च ॥७८॥**

ञिभीङ् भये, इत्यस्मात्तकक् प्रत्ययो भवति द्वे रूपे च भवतः । बिभीतकः-अक्षः ॥७८॥

**हृ-रुहि-पिण्डिभ्य ईतकः ॥७९॥**

एभ्य ईतकः प्रत्ययो भवति । हृंग हरणे हरीतकी पथ्या । रुहं जन्मनि, रोहीतकः-वृक्षविशेषः । पिङुङ् सघाते, पिण्डीतकः-करहाटः ॥७९॥

**कुषेः कित् ॥८०॥**

कुषश् निष्कर्षे, इत्यस्मात् किदीकः प्रत्योय भवति । कुषीतक'-ऋषिः ॥८०॥

**बलि-बिलि-शलि-दमिभ्य आहकः ॥८१॥**

एभ्य आहकः प्रत्ययो भवति । बल प्राणनधान्यावरोधयोः, बलाहकः-मेघः, वातश्च । बिलत् भेदने, बिलाहकः-वज्रः । बाहुलकान्न गुणः । शल गतौ, शलाहकः-वायुः । दमूच् उपशमे, दमाहकः-शिष्यः ॥८१॥

**चण्डि-भल्लिभ्यामातकः ॥८२॥**

आभ्यामातक' प्रत्ययो भवति । चडुङ् कोपे, चण्डातकं-नर्तक्यादिवासः । भल्लि परिभाषणहिंसादानेषु, भल्लातकः- वृक्ष' ॥८२॥

**श्लेष्मातकाम्रातकामिलातक-पिष्टातकादयः ॥८३॥**

एते आतकप्रत्ययान्ता निपात्यन्ते । श्लिषेर्मश्च परादि., श्लेष्मातक' कफेलुः । अमेर्वृद्धौ रश्चातः, आम्रातक.-वृक्ष । नञ. परस्य म्लायतेर्मिल च, अमिलातकम्-वर्णपुष्पम् । पिषेस्तोऽन्तश्च, पिष्टातकं-वर्णचूर्णम् आदिग्रहणात् कोशातक्यादयो भवन्ति ॥८३॥

**शमि-मनिभ्यां खः ॥८४॥**

आभ्यां खः प्रत्ययो भवति, शमूच् उपशमे, शङ्खः- कम्बुः, निधिश्च । मनिंच् ज्ञाने, मङ्खः मागधः, कृपणः, चित्रपटश्च मङ्खा-मङ्गलम् ॥८४॥

**श्यतेरिच्च वा ॥८५॥**

शोच् तक्षणे, इत्यस्मात् खः प्रत्ययो भवति, इश्चास्यान्तादेशो वा भवति । शिखा-चूडा, ज्वाला च, विशिखा-आपणः । विशिखः-बाणः । शाखा-विटपः । विशाखा-नक्षत्रम् । विशाखः-स्कन्दः ॥८५॥

**पू-मुहोः पुन्मुरौ च ॥८६॥**

पूङ् पवने मुहौच् वैचित्ये, इत्येताभ्यां खः प्रत्ययो भवति । अनयोश्च यथासख्यं पुन्मुर् इत्यादेशौ भवतः । पुङ्खः-बाणबुध्नभागः, मङ्गलाचारश्च । मूर्खः-अज्ञः ॥८६॥

**अशेर्डित् ॥८७॥**

अशौटि व्याप्तौ, इत्यस्मात् डित् खः प्रत्ययो भवति । अश्नुत इति खमाकाशमिन्द्रियं च, नास्य खमस्ति नखः, शोभनानि खानि अस्मिन् सुखम् । दुष्टानि खान्यस्मिन् दुःखम् ॥८७॥

**उपेः किल्लुक् च ॥८८॥**

उपू दाहे, इत्यस्मात् कित् खः प्रत्ययो भवति, लुक् चान्त्यस्य भवति । उपन्त्यस्यामिति उखा-स्थाली, ऊर्ध्वक्रिया वा ॥८८॥

**महेरुच्चास्य वा ॥८९॥**

मह पूजायाम्, इत्यस्मात् खः प्रत्ययः अन्तलुक् अकारस्य च उकारादेशो वा भवति । मुखमाननम्, मखः यज्ञः, अध्वर्युः, ईश्वरश्च ॥८९॥

**न्युङ्खादयः ॥९०॥**

न्युङ्खादयः शब्दाः खप्रत्ययान्ता निपात्यन्ते । नयतेः ख उन् चान्तः, न्युङ्खाः-षडोङ्काराः । आदिग्रहणादन्येऽपि ॥९०॥

**मये-धिभ्यामूखेखौ ॥९१॥**

मयि गतौ, एधि वृद्धौ, इत्याभ्यां यथासंख्यं ऊख, इख इत्येतौ प्रत्ययौ भवतः । मयूखः-रश्मिः । एधिखः-वराहः ॥९१॥

**गम्यमि-रम्यजि-गद्यदि-छाग-डि-खडि-गॄ-भृ-वृ-स्वृभ्यो गः ॥९२॥**

एभ्यो गः प्रत्ययो भवति । गम्लृं गतौ, गङ्गा-देवनदी । अम गतौ अङ्गम्-शरीरावयवः, अङ्गः-समुद्रः, वह्निः, राजा च, अङ्गा-जनपदः । रमिं क्रीडायाम्, रङ्गः-नाट्यस्थानम् । अज क्षेपणे च, वेगः-त्वरा, रेतश्च । गद वक्ताया वाचि, गदः-वागूविकलः । अदंक् भक्षणे, अद्गः समुद्रः, अग्निः, पुरोडाशश्च । छोच् छेदने, छागः-बस्तः । गड सेचने, गड्गः-मृगजातिः । खडण् भेदे, खड्गः मृगविशेषः असिश्च । गॄत् निगरणे, गर्गः-ऋषिः । डुभृंग्क् पोषणे च, भर्गः-रुद्रः, सूर्यश्च । वृग्ट् वरणे, वर्गः संघातः । औस्वृ शब्दोपतापयोः, स्वर्गः-नाकः ॥९२॥

**पू-मुदिभ्यां कित् ॥९३॥**

आभ्यां किद्गः प्रत्ययो भवति । पूग्श् पवने पूगः-संघातः, क्रमुकश्च । मुदि हर्षे मुद्गः-धान्यविशेषः ॥९३॥

**भृ-वृभ्यां नोऽन्तश्च ॥९४॥**

आभ्यां किद्गः प्रत्ययो भवति, नकारश्चान्तो भवति । डुभृंग्क् पोषणे भृङ्गः-पक्षी, भ्रमरः वर्णविशेषः, लवङ्गश्च । वृग्ट् वरणे, वृङ्गः-पक्षी, उपपतिः ॥९४॥

**द्रमो णिद्वा ॥९५॥**

द्रम गतौ, इत्यस्माद्गः प्रत्ययो भवति स च

णिद्रा । द्राङ्ग-श्रोत्रम्, द्राङ्गः-पांशुः, द्रङ्ग-नगरम्, द्रङ्गा-शुल्कशाला ॥९५॥

**शृङ्ग-शार्ङ्गादयः ॥९६॥**

शृङ्गादयः शब्दा गप्रत्ययान्ता निपात्यन्ते । शॄश् हिंसायाम्, इत्यस्य नोऽन्तो ह्रस्वश्च । शृङ्ग-विषाणम्, शिखरं च, तस्यैव नोऽन्तो वृद्धिश्च, शार्ङ्गः पक्षी । आदिग्रहणात् हृंग् हरणे, हार्गः-परितोषः । मृंत् प्राणत्यागे, मार्गः-पन्था ॥९६॥

**तडेरागः ॥९७॥**

तडण् आघाते, इत्यस्मादागः प्रत्ययो भवति । तडागः सरः ॥९७॥

**पति-तमि-तॄ-पॄ कॄ-शॄल्वादेरङ्गः ॥९८॥**

एभ्योऽङ्गः प्रत्ययो भवति । पत्लृ गतौ, पतङ्गः-पक्षी शलभः, सूर्यः, शालिविशेषश्च । तमूच् काङ्क्षायाम्, तमङ्गः हर्म्यनिर्यूहः । तॄ प्लवनतरणयोः, तरङ्गः-ऊर्मिः । पॄश् पालनपूरणयोः, परङ्ग-खगः, वेगश्च । कॄत् विक्षेपे, करङ्गःकर्मशीलः । शॄश् हिंसायाम्. शरङ्ग-पक्षिविशेषः । लूग्श् छेदने, लवङ्गः-सुगन्धिवृक्षः । आदिग्रहणादन्येभ्योऽपि ॥९८॥

**सॄ वॄ-नॄभ्यो णित् ॥९९॥**

एभ्यो णिदङ्ग प्रत्ययो भवति । सॄं गतौ, सारङ्गः-हरिणः, चातकः, शबलवर्णश्च । वृग्ट् वरणे, वारङ्गः, काण्डखड्गयोः, शल्य, शकुनिश्च । नृग् नये, नारङ्गः-वृक्षजातिः ॥९९॥

**मनेर्मत्मातौ च ॥१००॥**

मनिच् ज्ञाने, इत्यस्मादङ्गः प्रत्ययो भवति, मत्-मातौ चास्यादेशौ भवतः । मतङ्गः-ऋषिः, हस्ती च । मातङ्ग - हस्ती, अन्त्यजातिश्च ॥१००॥

**विडि-विलि-कुरि-मृदि-पिशिभ्यः कित् ॥१०१॥**

एभ्यः किदङ्गः प्रत्ययो भवति । विड आक्रोशे, विडङ्गः-वृक्षजातिः, गृहावयवश्च । विलत् वरणे, विलत् भेदने वा, विलिङ्गः औषधम् । कुरत् शब्दे, कुरङ्ग-हरिणः, कुरङ्गी भोजकन्या । मृदश् क्षोदे, मृदङ्गः-मुरजः । पिशत् अवयवे, पिशङ्गः वर्णः ॥१०१॥

**स्फुलि-कलि पल्यादृभ्य इङ्गक् ॥१०२॥**

स्फुलादिभ्य आदन्तेभ्यश्च इङ्गक् प्रत्ययो भवति । स्फुलत् सचये च, स्फुलिङ्गः स्फुलिङ्गा च अग्निकणः । कलि शब्दसंख्यानयोः, कलिङ्गो—राजा कलिङ्गा-जनपदः । पल गतौ, पलिङ्ग ऋषिः, शिला च । पाते पिङ्गः । भाते, भिङ्गा । द्वावपि वर्णविशेषौ । ददाते दिङ्गः—अध्यक्षः । दधाते धिङ्गः-श्रेष्ठी । लाते लिङ्गं—स्त्रीत्वादि हेतुश्च । आलिङ्गः—वाद्यविशेषः । श्यतेः शिङ्गः—वनस्पतिः, किशोरश्च ॥१०२॥

**भलेरिदुतौ चातः ॥१०३॥**

भलिण् आभण्डने, इत्यस्मादिङ्गक् प्रत्ययो भवति । अकारस्य च इकार-उकारौ भवतः । भिलिङ्गः-कर्मारोपकरणम् । भुलिङ्ग-ऋषिः, पक्षी च । भुलिङ्गाः-साल्वावयवाः ॥१०३॥

**अदेर्णित् ॥१०४॥**

अदक् भक्षणे, इत्यस्मात् दिङ्गक्प्रत्ययो भवति । स च णित् भवति । आदिङ्गः—वाद्यजातिः ॥१०४॥

**उच्चिलिङ्गादयः ॥१०५॥**

उच्चिलिङ्गादयः शब्दा इङ्गक्प्रत्ययान्ता निपात्यन्ते । उत्पूर्वाच्चलेरस्येत्वं च । उच्चिलिङ्गः-दाडिमी । आदिग्रहणादन्येऽपि ॥१०५॥

**माङ्स्तुलेरुङ्गक् च ॥१०६॥**

माङ्पूर्वात् तुलण् उन्माने, इत्यस्मात् उङ्गक्

इङ्गक् च प्रत्ययौ भवत । मातुलङ्ग -बीजपूर', मातुलिङ्गः-स एव ॥१०६॥

**कमि तमि-शसिभ्यो डित् ॥१०७॥**

एभ्यो डिदुङ्गः प्रत्ययो भवति । कमूङ् कान्तौ, कुङ्गा जनपद । तमूच् काङ्क्षायाम्, तुङ्ग -महावर्ष्मा, शमूच् उपशमे, शुङ्ग –मुनि, शुङ्गा-विनता । शुङ्गाः-कन्दल्यः ॥१०७॥

**सर्ते स्रुर्च ॥१०८॥**

सृ गतौ इत्यस्मादुङ्ग' प्रत्ययो भवति, स्रुर् चास्यादेशो भवति । स्रुङ्गा—गूढमार्ग ॥१०८॥

**स्था-र्ति-जनिभ्यो घः ॥१०९॥**

एभ्यो घ प्रत्ययो भवति । ष्ठां गतिनिवृत्तौ, स्थाघ'-गाध' । ऋ प्रापणे च, अर्घ'-मूल्यम्, मानप्रमाणं, पादोदकादि च । जनैचि प्रादुर्भावे, जङ्घा-शरीरावयवः ॥१०९॥

**मघा घङ्घाघ-दीर्घादयः ॥११०॥**

एते घप्रत्ययान्ता निपात्यन्ते । महेर्नूघलोपश्च । मघा नक्षत्रम् । हन्तेर्हस्य घश्च, घङ्घ -घस्मर, घङ्घा काङ्क्षा । अमेर्लुक् च, अघं पापम् । दृणातेर्दीर् च, दीर्घ-आयत., उच्चश्च । आदिशब्दादन्येऽपि ॥११०॥

**सर्तेरघः ॥१११॥**

सृं गतौ, इत्यस्मादघ प्रत्ययो भवति । सरघा-मधुमक्षिका ॥१११॥

**कु-पू-समिण्भ्यश्चट् दीर्घश्च ॥११२॥**

कुपूभ्यां सम्पूर्वाच्च इणश्चट् प्रत्ययो भवति । दीर्घश्च भवति, टो ङ्यर्थ' । कुङ् शब्दे, कूचः-हस्ती, कूची-प्रमदा चित्रभाण्डम्, उदश्वित्, विकारश्च । पूग्श् पवने, पूच', पूची मुनि' । इंणक् गतौ, समीचः ऋत्विक्, समीच-मिथुनयोग' । समीची-पृथ्वी, उदीची च, दीर्घवचनाद् गुणो न भवति ॥११२॥

**कूर्च-चूर्चादयः ॥११३॥**

कूर्च इत्यादय. शब्दाश्चट्प्रत्ययान्ता निपात्यन्ते । कवतेः किरतेः करोतेर्वा ऊरादेशश्चान्तस्य । कूर्च—श्मश्रु आसनं, तन्तुवायोपकरण, यतिपवित्रकं च । कूर्चमिव कूर्चकः कूर्चिकेति च भवति । चरतेश्चोरतेर्वा चूरादेशश्च, चूर्चः-बलवान् । आदिशब्दादन्येऽपि ॥११३॥

**कल्यवि-मदि-मणि-कु-कणि-कुटि कृभ्योऽचः ॥११४॥**

एभ्योऽच प्रत्ययो भवति । कलि शब्दसख्यानयो., कलच. गणक. । अव रक्षणादौ, अवच'-उच्चैस्तर । मदैच् हर्षे, मदचः-मत्त' । मण शब्दे, मणच -शकुनिः । कुङ्शब्दे, कवचं-वर्म । कण शब्दे, कणच -कणयः । कुटत् कौटिल्ये, कुटच'-वृक्षजातिः, कृत् विक्षेपे, करचः-धान्यावपनम् ॥११४॥

**क्रकचादयः ॥११५॥**

क्रकच इत्यादय' शब्दा अच्प्रत्ययान्ता निपात्यन्ते । क्रमे' कश्च, क्रकच -करपत्र' । आदिशब्दादन्येऽपि ॥११५॥

**पिशेराचक् ॥११६॥**

पिशत् अवयवे, इत्यस्मादाचक् प्रत्ययो भवति । पिशाच -व्यन्तरजाति ॥११६॥

**मृ-त्रपिभ्यामिचः ॥११७॥**

आभ्यामिच प्रत्ययो भवति । मृत् प्राणत्यागे, मरिच -मूपणम् । त्रपौषि लज्जायाम्, त्रपिचा-कुथा ॥११७॥

**म्रियतेरीचण् ॥११८॥**

मृत् प्राणत्यागे, इत्यस्मादीचण् प्रत्ययो भवति । मारीच -रावणमातुल ॥११८॥

**लषेरुचः कश्च ॥११९॥**

लषी कान्तौ । इत्यस्मादुचः प्रत्ययो भवति ।

अन्त्यस्य च को भवति । लकुचः-वृक्षजातिः ॥११९॥

## गुडेरूचट् ॥१२०॥

गुडत् रक्षायाम्, इत्यस्मादूचट् प्रत्ययो भवति । गूडूची—छिन्नरुहा । कुटादित्वात् टित्त्वम् ॥१२०॥

## सिवेर्डित् ॥१२१॥

षिवूच् ऊतौ, इत्यस्मात् डिदूचट् प्रत्ययो डित् भवति । सूचः-पिशुनः, स्तिभिश्च । सूची-सधानकरणी ॥१२१॥

## चि-मेर्डोचडञ्चौ ॥१२२॥

चिमिभ्यां प्रत्येकं डोच डञ्च इति प्रत्ययौ भवतः । वचनभेदान्न यथासख्यम् । चिगूट् चयने, चोचः वृक्षविशेषः, चञ्चा-तृणमयः पुरुषः । डुमिगट् प्रक्षेपणे, मोचा कदली, मञ्चः पर्यङ्कः ॥१२२॥

## कुटि-कुलि-कल्युदिभ्य इञ्चक् ॥१२३॥

एभ्य इञ्चक् प्रत्ययो भवति । कुटेः, कुटिञ्चः-क्षुद्रकर्कटः । कुलेः, कुलिञ्चः-राशिः । कलेः, कलिञ्च -उपशाखावयवः । उद आघाते सौत्रः, उदिञ्चः कोणः-येन तूर्यं वाद्यते, परपुष्टश्च ॥१२३॥

## तुदि-मदि-पद्यदि-गु-गमि-कचिभ्यच्छक् ॥१२४॥

एभ्यश्छक् प्रत्ययो भवति । तुदीत् व्यथने, तुच्छः-स्तोकः । मदैच् हर्षे, मच्छः-मत्स्यः, प्रमत्त-पुरुषश्च, मच्छा-स्त्री । पदिच् गतौ, पच्छः-शिला । अदक् भक्षणे, अच्छः-निर्मलः । गुङ् शब्दे, गुच्छः स्तवकः । गम्लृ गतौ, गच्छः-क्षुद्रवृक्षः । कचि बन्धने, कच्छः-कूर्मपादः, कुक्षिः नद्यवकुटारश्च । कच्छा जनपदः । बाहुलकात् कत्वाभावः ॥१२४॥

## पीपूङोर्ह्रस्वश्च ॥१२५॥

आभ्यां छक् प्रत्ययो भवति, ह्रस्वश्च भवति । पीङच् पाने, पिच्छम्-शकुनिपत्त्रम्, पिच्छः-गुणविशेषः । यद्वान् पिच्छिल उच्यते । पूङ् पवने, पुच्छः वालधिः ॥१२५॥

## गुलुञ्छ-पिलिपिञ्छैधिच्छादयः ॥१२६॥

एते छप्रत्ययान्ता निपात्यन्ते । गुडेर्लं उम् चान्तः, गुलुञ्छः स्तवकः । पीलेरिपि नोन्तो ह्रस्वश्च, पिलिपिञ्छः-रक्षोविशेषः । एधेरिट् च, एधिच्छः-नगः । आदिग्रहणात् पिञ्छादयोऽपि भवन्ति ॥१२६॥

## वियो जक् ॥१२७॥

वींक् प्रजनकान्त्यसनखादनेषु च, इत्यस्मात् जक् प्रत्ययो भवति । बीजम्—उत्पत्तिहेतुः ॥१२७॥

## पुवः पुन् च ॥१२८॥

पूङ पवने, इत्यस्मात् जक् प्रत्ययो भवति । अस्य च पुन् इत्यादेशो भवति । पुञ्जः राशिः ॥१२८॥

## कुवः कुब्कुनौ च ॥१२९॥

कुङ् शब्दे, इत्यस्मात् जक् प्रत्ययो भवति । अस्य च कुब् कुन् इत्यादेशौ भवतः ॥ कुब्जः—वक्रानताङ्गः, गुच्छश्च । कुञ्जः—हनुः, पर्वतैकदेशश्च । निकुञ्जः—गहनम् ॥१२९॥

## कुटेरजः ॥१३०॥

कुटत् कौटिल्ये, इत्यस्मादजः प्रत्ययो भवति । कुटजः—वृक्षविशेषः । कुटादित्वात् टित्त्वम्, कुटजी ॥१३०॥

## भिषेर्भिषभिण्णौ च वा ॥१३१॥

भिषेरजः प्रत्ययो भवति, भिषभिण्ण इत्यादेशौ चास्य वा भवतः । भिषि सौत्रः, भिषजः । आदेशबलान्न गुणः । भिण्णजः—वैद्यः, भेषजम्—औषधम् ॥१३१॥

## मुर्वेर्मुर् च ॥१३२॥

मुर्वै बन्धने, इत्यस्मादजः प्रत्ययो भवति । अस्य च मुर् इत्यादेशो भवति । मुरजः—मृदङ्गः ॥१३२॥

## वलेर्वोन्तश्च वा ॥१३३॥

बल प्राणनधान्यावरोधयोः, इत्यस्मात् अजः प्रत्ययो भवति, वकारश्चान्तो वा भवति । बल्वजः—मुञ्जविशेषः । बलजा—सबुसो धान्यपुञ्जः ॥१३३॥

**उटजादयः ॥१३४॥**

उटजादयः शब्दा अजप्रत्ययान्ता निपात्यन्ते, वटेर्वस्योत्वं च । उटजं—मुनिकुटीरः । आदिशब्दात् भूर्जभरुजादयो भवन्ति ॥१३४॥

**कुलेरिजक् ॥१३५॥**

कुल बन्धुसंस्त्यानयोः, इत्यस्मात् इजक् प्रत्ययो भवति । कुलिजं—मानम् ॥१३५॥

**कृगोऽञ्जः ॥१३६॥**

करोतेरञ्जः प्रत्ययो भवति । करञ्जः—वृक्षजातिः ॥१३६॥

**झमेर्झः ॥१३७॥**

झमू अदने, इत्यस्मात् झः प्रत्ययो भवति । झञ्झा—सशीकरो मेघवातः ॥१३७॥

**लुषेष्टः ॥१३८॥**

लुष स्तेय, इत्यस्माट्टः प्रत्ययो भवति । लोष्टो-मृत्पिण्डः ॥१३८॥

**नमि-तनि-जनि-वनि-सनो लुक् च ॥१३९॥**

एभ्यष्टः प्रत्ययो भवति, लुक् चान्तस्य भवति । णमं प्रह्वत्वे, नटः—भरतपुत्रः । तनूयी विस्तारे, तटं-कूलम् । जनैचि प्रादुर्भावे, जटा—ग्रथितकेशसघातः । वन षण संभक्तौ, वटः—न्यग्रोधः । सटा-अग्रथित केशसघातः ॥१३९॥

**जनि पणि किजुभ्यो दीर्घश्च ॥१४०॥**

एभ्यष्टः प्रत्ययो भवति, दीर्घश्चैषां गुणापवादो भवति । जनैचि प्रादुर्भावे, पणि व्यवहारस्तुत्योः, जाण्टः, पाण्टः-वृक्षविशेषावेतौ । किजू सौत्रौ, कीटः-क्षुद्रजन्तुः । जूटः मौलिः ॥१४०॥

**घटा घाटा घण्टादयः ॥१४१॥**

एते टप्रत्ययान्ता निपात्यन्ते । हन्तेर्घघाघनश्च, घटा वृन्दम् । घाटा-स्वाङ्गम् । घण्टा-वाद्यविशेषः । आदिग्रहणात् छटादयो भवन्ति ॥१४१॥

**दिव्यवि श्रु-कु-कर्वि-शकि कङ्कि कृपि चपि चमि-कम्येधि-कर्कि मर्कि कक्खि तृ-कृ-सृ भृ वृ-भ्यो-ऽटः ॥१४२॥**

एभ्योऽटः प्रत्ययो भवति । दिवूच् क्रीडादौ, देवटः देवकुलविशेषः, शिल्पी च । अव रक्षणादौ, अवटः-प्रपातः, कूपश्च । श्रुंट् श्रवणे, श्रवटः छत्रम् कुंक् शब्दे, कवटः-उच्छिष्टम् । कर्ब गतौ कर्बटं-क्षुद्रपत्तनम् । शक्लृट् शक्तौ, शकटम्-अनः । ककुङ् गतौ, कङ्कटः- सन्नाहः । कङ्कटसीमा । कृपौङ् सामर्थ्ये कर्पटं-वासः । चप सान्त्वने, चपटः-रसः । चमू अदने, चमटःघस्मरः । कमूङ् कान्तौ, कमटः-वामनः । एधि वृद्धौ, एधटः वल्मीकः । कर्कि—मर्की-सौत्रौ । कर्कटः कपिलः, कुलीरश्च, कर्कटी-त्रपुसी । मर्कटः- कपिः, क्षुद्रजन्तुश्च । कक्ख हसने, कक्खटः कर्कशः । तृ प्लवनतरणयोः तरटः पीनः । डुकृंग् करणे, करटः काकः, करिकपोलश्च । सृ गतौ, सरटः कृकलासः । डुडुभृंग्क् पोषणे च, भरटः प्लवविशेषः भृत्यः, कुलालश्च । वृग्ट् वरणे, वरटः क्षुद्रधान्यम्, प्रहारश्च ॥१४२॥

**कुलि-विलिभ्यां कित् ॥१४३॥**

आभ्यां किदटः प्रत्ययो भवति । कुल बन्धुसं-स्त्यानयोः, कुलटा-बन्धकी । विलत् विरणे, विलटा-नदी ॥१४३॥

**कपट-कीकटादयः ॥१४४॥**

कपटादयः शब्दा अटप्रत्ययान्ता निपात्यन्ते । कम्पेर्नलोपश्च, कपट माया । ककेरत ईच्च, कीकटः

कृपणः । आदिग्रहणात् लवटपर्पटादयो भवन्ति ॥१४४॥

**अनि-शृ-पृ-वृ ललिभ्य आटः ॥१४५॥**

एभ्य आटः प्रत्ययो भवति । अनक् प्राणने, अनाटः-शिशुः । शृग् हिंसायाम्, शराटः शकुन्तः । पृश् पालनपूरणयोः, पराटः आयुक्तकः । वृङ्श् सभक्तौ वराटः सेवकः । ललिण् ईप्सायाम्, ललाटम्, अलिकम् ॥१४५॥

**सृ सृपेः कित् ॥१४६॥**

आभ्यां किदाटः प्रत्ययो भवति । सृं गतौ, सृाटः पुरःसरः । सृप्लृ गतौ, सृपाटः अल्पः, कुमुदादिपत्रं च । सृपाटी-उपानत्, कुप्यम् अल्पपुस्तकश्च ॥१४६॥

**किरो लश्च वा ॥१४७॥**

किरतेः किदाटः प्रत्ययो भवति लश्चान्तो वा भवति । किलाटो-भक्ष्यविशेषः किराटो वणिक्, म्लेच्छश्च ॥१४७॥

**कपाट विराट शृङ्गाटप्रपुन्नाटादयः ॥१४८॥**

एते आटप्रत्ययान्ता निपात्यन्ते । कम्पेर्नलोपश्च, कपाटः-अररिः 'जपादीनां पो वः' [२-३-१०५] इति वत्वे-कवाटः । वृङ इत्वं च, विराटः-राजा । श्रयते शृङ्ग् च, शृङ्गाटः जलजविशेषः, विपणिमार्गश्च । प्रपूर्वात् पुणेर्नश्च, प्रपुनाटः— एडगजः । आदिशब्दात् खल्वाटादयो भवन्ति ॥१४८॥

**चिरेरिटो भ् च ॥१४९॥**

चिरे सौत्रादिटः प्रत्ययो भवति, भकारश्चान्तादेशो भवति । चिभिटो वालुङ्की ॥१४९॥

**टिण्टश्चर् च वा ॥१५०॥**

चिरेरिटिण्टः प्रत्ययो भवति, चर् इति चास्यादेशो वा भवति । चरिण्टी चिरिण्टी च-प्रथमवयाः स्त्री ॥१५०॥

**तृ-कृ-कृपि-कम्पि-कृपिभ्यः कीटः ॥१५१॥**

एभ्यः किदीटः प्रत्ययो भवति । तृ प्लवनतरणयोः, तिरीटं कूलवृक्षः, मुकुटं, वेष्टनं च । कृत् विक्षेपे किरीटं मुकुटं, हिरण्यं च । कृपौङ् सामर्थ्ये, कृपीटं-हिरण्यं जलं च । कपुङ् चलने, कम्पीट-कम्पः, कम्प्रं च । कृषींत् विलेखने, कृषीटं जलम् ॥१५१॥

**खञ्जेररीटः ॥१५२॥**

खञ्जु गतिवैकल्ये, इत्यस्मादरीटः प्रत्ययो भवति । खञ्जरीट खञ्जनः ॥१५२॥

**गॄ-जॄ-दॄ वृ-भृभ्य उट उडश्च ॥१५३॥**

एभ्य उट उडश्च प्रत्ययो भवतः । भिन्नविभक्तिनिर्देश उटस्योत्तरत्रानुवृत्त्यर्थः । अप्रकृतस्यापि उडस्य विधानमिह लाघवार्थम् । गॄश् शब्दे, गरुटः-गरुडश्च-गरुत्मान् । जॄष्च् जरसि, जरुटः, जरुडश्च वनस्पतिः । दॄग् विदारे, दरुटः दरुडश्च बिडालः । वृग्श् वरणे, वरुटः वरुडश्च मेघः । भ्रूप् भर्जने च, भरुटः भरुडश्च मेघ एव ॥१५३॥

**मङ्केर्मकमुकौ च ॥१५४॥**

मकुङ् मण्डने, इत्यस्मात् उटः प्रत्ययो भवति, मक मुक इत्यादेशौ चास्य भवतः । मकुटः मुकुटश्च-किरीटः ॥१५४॥

**नर्कुट कुक्कुटोत्कुरुट-मुरुट-पुरुटादयः ॥१५५॥**

एते उटप्रत्ययान्ता निपात्यन्ते । नृतेः कश्च, नर्कुटः-वन्दी । कुके कोऽन्तश्च, कुक्कुटः—कृकवाकुः । उतपूर्वात् कृगः कुर् च उत्कुरुटः कचवरपुञ्जः । मुरिपुर्योर्गुणाभावश्च, मुरुटः यत् वेण्वादिमूलमृजूकर्तुं न शक्यते । पुरुटः—जलजन्तुः । आदि-

शब्दात् स्थपुटादयो भवन्ति ॥१५५॥

## दुरो द्रः कूटश्च दु च ॥१५६॥

दुर्पूर्वात् द्रणातेः किदूट उठश्च प्रत्ययौ भवतः । दुर् चाग्यादेशो भवति । दुर्दुरूटः-दुर्मुखः, दुर्दुरुटः देशकालवादी ॥१५६॥

## वन्धेः ॥१५७॥

वन्धंग् वन्धने, इत्यस्माद् कित उट. प्रत्ययो भवति । वधूटी-प्रथमवयाः स्त्री ॥१५७॥

## चपेरेटः ॥१५८॥

चप् सान्त्वने, इत्यस्मादेटः प्रत्ययो भवति । चपेटः चपेटा वा-हस्ततलाहतिः ॥१५८॥

## ग्रो णित् ॥१५९॥

गृत् निगरणे, इत्यस्मात् णिदेटः प्रत्ययो भवति । गारेटः-कपि. ॥१५९॥

## कृ-शक् शाखेरोटः ॥१६०॥

एभ्य ओटः प्रत्ययो भवति । डुकृंग् करणे, करोटः भृत्य, शिरः, कपाल च, करोटं—भाजनविशेषः । शक्लृंट् शक्तौ, शकोट—बाहुः । शाखृ श्लाखृ व्याप्तौ, शाखोटः वृक्षविशेषः ॥१६०॥

## कपोट-वकोटाक्षोट-कर्कोटादयः ॥१६१॥

एते ओटप्रत्ययान्ता निपात्यन्ते । कबृङ् वर्णे, पश्च, कपोटः-वर्ण, कितवश्च । वचे कश्च, वकोट. वकः । अश्नाते. सश्च परादिः, अक्षोटः-फलवृक्षः । कृग'—कोऽन्तश्च. कर्कोट—नाग. । आदिशब्दादन्येऽपि भवन्ति ॥१६१॥

## वनि-कणि-काश्युपिभ्यष्ठः ॥१६२॥

एभ्यष्ठप्रत्ययो भवति । वन भक्तौ, वण्ठ अनिविष्ट. । कण शब्दे, कण्ठः—कन्धरा । काशृङ् दीप्तौ, काष्ठं—दारु, काष्ठा—दिक् अवस्था च । उषू दाहे. ओष्ठः—दन्तच्छद ॥१६२॥

## पी-विशि-कुणि-पृषिभ्यः कित् ॥१६३॥

एभ्यः कित् ठः प्रत्ययो भवति । पीङ्च् पाने, पीठम-आसनम् । विशंत् प्रवेशने, विष्ठा-पुरीषम् । कुणत् शब्दोपकरणयोः, कुण्ठः—अतीक्ष्णः पृषू सेचने पृष्ठः—अङ्कुशः, शरीरैकदेशश्च ॥१६३॥

## कुषेर्वा ॥१६४॥

कुषश् निष्कर्षे, इत्यस्मात् ठः प्रत्ययो भवति स च वा कित् भवति । कुष्ठं—व्याधिः गन्धद्रव्यं च, कोष्ठः—कुसूल, उदरं च ॥१६४॥

## शमेर्लुक् च वा ॥१६५॥

शमूच् उपशमे, इत्यस्मात ठः प्रत्ययो भवति, लुक् चान्तस्य वा भवति । शठ धूर्तः शण्ठ.—स एव, नपुंसकं च ॥१६५॥

## पष्ठैधिठादयः ॥१६६॥

पष्ठादयः शब्दाः ठप्रत्ययान्ता निपात्यन्ते । पुषेः कित् ठ पषादेशश्च । पष्ठ.—प्रस्थः, पर्वतश्च । एधतेरिट् च, एधिठं वनम्, एधिठः—गिरिसरिद्ध्रहः । आदिशब्दादन्येऽपि ॥१६६॥

## मृ-जृ-शृ-कम्यमि-रमि-रपिभ्योऽठः ॥१६७॥

एभ्योऽठः प्रत्ययो भवति । मृंत् प्राणत्यागे, मरठ उच्चनिर्बभूतम्, कृमिजातिः, कण्ठः, प्राणश्च । जृष्च् जरसि, जरठ—कठोरः । शृश् हिंसायाम, शरट—आयुधं, पापं, क्रीडनशीलश्च । कमूङ् कान्तौ कमठ—भिक्षाभाजनम्, कूर्मास्थि, कच्छप, मयूरः, वामनश्च । अम गतौ, अमठः—प्रकर्षगति. । रमि क्रीडायाम्, रमठ—देशः, कृमिजातिः, क्रीडनशील. म्लेच्छ, देवश्च, विलातानाम् । रप व्यक्ते वचने रपठः—विद्वान्, मण्डूकश्च ॥१६७॥

## पञ्चमात डः ॥१६८॥

पञ्चमान्तात् धातोर्डः प्रत्ययो भवति । पनू

भक्तौ, पण्डः—वनं, वृषभश्च। बाहुलकात् सत्वाभावः। भण शब्दे, भण्डः—प्रहसनकरः, वन्दी च। चण शब्दे, चण्डः—क्रूरः। पणि व्यवहारस्तुत्योः पण्डः—शण्डः। गणण् सङ्ख्याने, गण्डः—पौरुषयुक्तः पुरुषः। मण शब्दे, मण्डः रश्मिः, अग्रम्, अन्नविकारश्च। वन भक्तौ, वण्डः—अल्पशेफः, निरुचर्माग्रशिश्नश्च। शमू दमूच् उपशमे, शण्डः—उत्सृष्टः, पशु, ऋषिश्च। दण्डः—वनस्पतिप्रतानः, राजशासनं, नाल, प्रहरणं च रमि क्रीडायाम्, रण्डः—पुरुषः, रण्डा—स्त्री, रण्डम्—अन्तःकरणम्। त्रयमपि स्वसम्बन्धिशून्यमेवमुच्यते। तमेस्तनेर्वा, तण्डः ऋषिः। वितण्डा—तृतीयकथा। गमेः, गण्डः—कपोलः। भामि क्रोधे, भाण्डम्—उपस्करः ॥१६८॥

## कण्यणि-खनिभ्यो णिद्वा ॥१६९॥

एभ्यो डः प्रत्ययो भवति, स च णिद्वा भवति। कण अण शब्दे, काण्डः-शरः, फलसंघातः, पर्व च। कण्डं-भूषणं, पर्व च। आण्डः-मुष्कः, अण्डः- स एव, योनिविशेषश्च। खनूग् अवदारणे, खाण्डः-कालाश्रयो गुडः। खण्ड-इक्षुविकारोऽन्यः। खण्डं-शकलम् ॥१६९॥

## कु-गु-हु-नी-कुणि-तुणि-मुणि-शुन्यादिभ्यः कित् ॥१७०॥

एभ्यः कित् डः प्रत्ययो भवति। कुङ् शब्दे, कुडः-घटः, हलं च। गुङ् शब्दे, गुडः-गोलः, इक्षुविकारश्च, गुडा—सन्नाह। हुंक् दानादानयोः, हुडः—मूर्ख. मेषश्च। णींग् प्रापणे, नीड—कुलायः। कुणत् शब्दोपकरणयो, कुण्डं-भाजनम्, जलाधारविशेषश्च। कुण्ड—भर्तरि जीवति जारेण जातः अपद्वान्द्रियश्च। तुणत् कौटिल्ये, तुण्डम्—मुखम्। पुणत् शुभे, पुण्डः भिन्नवर्णः। मुणत् प्रतिज्ञाने, मुण्डः-परिवापितकेशः। शुनत् गतौ, शुण्डा—सुरा, हस्तिहस्तश्च। आदिग्रहणादन्येभ्योऽपि भवति ॥१७०॥

## ऋ-सृ-तृ-व्या-लिह्यवि-चमि-वमि यमि-चुरि-कुहेरडः ॥१७१॥

एभ्यो अडः प्रत्ययो भवति। ऋंक् गतौ, अरडः—तरुः। सृं गतौ, सरडः—भुजपरिसर्पः, तरुश्च। तॄ प्लवनतरणयोः, तरडः—वृक्षजातिः। व्येंग् संवरणे, व्याडः—दुःशीलः, हिंस्रः, पशुः, भुजगश्च। लिहींक् आस्वादने, लेहडः—श्वा, चौर्यग्रासी च। अव रक्षणादौ, अवडः—क्षेत्रविशेषः। चमू अदने, चमडः पशुजातिः। टुवम् उद्गिरणे, वमडः—लताजातिः। यमू उपरमे, यमडः—वनस्पतिः, युगलं च। चुरण् स्तेये चोरडः—चोरः। कुहणि विस्मापने, कुहडः—उन्मत्तकः ॥१७१॥

## विहड-कहोड—कुरड-केरड-क्रोडादडयः ॥१७२॥

एतेऽडप्रत्ययान्ता निपात्यन्ते। विपूर्वात् हन्तेरनो लुक् च, विहडः शकुनिः मूढचित्तश्च। कषेर्हः प्रत्ययोऽकारस्य च ओकारः, कहोडः—ऋषिः। करेर्गुणाभावश्च, कुरडः—मार्जारः। किरतेः केर् च, केरडः—त्रैराज्ये राजा। कृगः कित् प्रत्ययोकारस्य च ओकारः। क्रोडः—किरिः, अङ्कश्च। आदिग्रणात् लहोडादयो भवन्ति ॥१७२॥

## जॄ-कॄ-तॄ-शॄ-सृ-भृ-वृभ्योऽण्डः ॥१७३॥

एभ्योऽण्डः प्रत्ययो भवति। जॄष्च् जरसि, जरण्डः-अतीतवयस्कः। कॄत् विक्षेपे, करण्डः-समुद्गः, समुद्रः, कृमिजातिश्च। तॄ प्लवनतरणयोः, तरण्डः—प्लवः, वायुश्च। शॄश् हिंसायाम्, शरण्डः—हिंस्रः, आयुधं च। सृ गतौ, सरण्डः—कृमिजातिः, इषीका,

वायुः, भूतसंघातः, तृणसमवायश्च। टुडुभृंग्क् पोषणे च, भरण्डः—भण्डजातिः, पक्षी च। वृग्ट् वरणे, वरण्डः—कुड्यम्, तृणकाष्ठादिभारश्च ॥१७३॥

### पूगो गादिः ॥१७४॥

पूग्श् पवने, इत्यस्मात् गकारादिः अण्डः प्रत्ययो भवति। पोगण्डः—विकलाङ्गः युवा च ॥१७४॥

### वनेस्त च ॥१७५॥

वन भक्तौ, इत्यस्माद् अण्डः प्रत्ययो भवति, तकारश्चान्तादेशो भवति। वतण्डः—ऋषिः ॥१७५॥

### पिचण्डैरण्ड-खण्डादयः ॥१७६॥

एतेऽण्डप्रत्ययान्ता निपात्यन्ते। पिचेरगुणत्वं च। पिचण्डः-लघुलगुडः। ईरेर्गुणश्च, एरण्डः-पञ्चाङ्गुलः। खाद्द भक्षणे, अन्त्यस्वरादेररादेशश्च, खरण्डः-सर्वर्तुकम्। आदिग्रहणात् कूष्माण्डशयण्डशयाण्डादयोऽपि भवन्ति ॥१७६॥

### लगेरुडः ॥१७७॥

लगे सङ्गे, इत्यस्मात् उडः प्रत्ययो भवति। लगुडः यष्टिः। गृ-जृ-दृ-वृ-भृभ्यस्तु उडो विहित एव ॥१७७॥

### कुशेरुण्डक् ॥१७८॥

कुशच् श्लेपे, इत्यस्मात् उण्डक् प्रत्ययो भवति कुशुण्डः—वपुष्मान् ॥१७८॥

### शमि-पणिभ्यां ढः ॥१७९॥

आभ्या ढः प्रत्ययो भवति। शमूच् उपशमे, शण्ढः-नपुंसकम्। षन भक्तौ, षण्ढः—स एव। बाहुलकात् सत्वाभावः ॥१७९॥

### कुणेः कित् ॥१८०॥

कुणत् शब्दोपकरणयोः, इत्यस्मात् कित् ढः प्रत्ययो भवति। कुण्ढः-धूर्तः। बाहुलकान्न दीर्घः ॥१८०॥

### नञः सहेः षा च ॥१८१॥

नञपूर्वात् षहि मर्षणे, इत्यस्मात् ढः प्रत्ययो षा चास्यादेशो भवति। अषाढा-नक्षत्रम् ॥१८१॥

### इणुर्वि-शा-वेणि-पृ-कॄ-वृ-तॄ-जॄ-दृ-सृपि-पणिभ्यो णः ॥१८२॥

एभ्यो णः प्रत्ययो भवति। इंणक् गतौ, एणः-कुरङ्गः। उर्वै हिंसायाम्, उर्णा-मेषादिलोम, भ्रुवोरन्तरावर्तश्च। शोच् तक्षणे, शाणः-परिमाणम्, शस्त्रतेजनं च। वेणृग् गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु, वेण्णा कृष्णवेण्णा च नाम नदी। पृश् पालनपूरणयोः, पर्णं-पत्रं, शिरश्च। कृत् विक्षेपे, कर्णः-श्रवणं, कौन्तेयश्च। वृश् वरणे, वर्णः-शुक्लादिः, ब्राह्मणादिः, अकारादिः, यशः, स्तुतिः, प्रकारश्च। तृ प्लवनतरणयोः, तर्णः-वत्सः। जृपूच् जरसि, जर्णः—चन्द्रमाः, वृक्षः, कर्कः, क्षयधर्मा, शकुनिश्च। दृङ्त् आदरे, दर्णः-पर्णम्। सृप्लृं गतौ, सर्प्णः-सरीसृपजातिः। पणि व्यवहारस्तुत्योः, पण्णम्-व्यवहारः ॥१८२॥

### घृ-वी-ह्वा-शुष्युपि-तृपि-कृष्यर्तिभ्यः कित् ॥१८३॥

एभ्यः कित् णः प्रत्ययो भवति। घृ सेचने, घृणा-कृपा। वींक् प्रजननादिषु, वीणा-वल्लकी। ह्वेग् स्पर्धाशब्दयोः, हूणः-म्लेच्छजातिः। शुषंच् शोषणे, शुष्णः-निदाघः। उषू दाहे, उष्णः—स्पर्शविशेषः। ञितृषच् पिपासायाम्, तृष्णा-पिपासा। कृषींत् विलखने, कृष्णः-वर्णः, विष्णुः, मृगश्च। ऋक् गतौ, ऋणं—वृद्धिधनम्, जलं, दुर्गभूमिश्च ॥१८३॥

## द्रोर्वा ॥१८४॥

द्रु गतौ, इत्यस्मात् णः प्रत्ययो भवति, स च किद्वा भवति । द्रुणा—ज्या, द्रोणः-चतुराढकं, पाण्डवाचार्यश्च । द्रोणी नौः, गौरादित्वात् ङीः ॥१८४॥

## स्था-क्षु-तोरूच्च ॥१८५॥

एभ्यो णः प्रत्ययो भवति, ऊकारश्चान्तादेशो भवति । ष्ठां गतिनिवृत्तौ, स्थूणा तन्तुधारिणी, गृहधारिणी, शरीरधारिणी, लोहप्रतिमा, व्याधिविशेपश्च । टुक्षुक् शब्दे, क्षूणम्—अपराधः । तुंक् वृत्त्यादिषु, तूणः—इषुधिः ॥१८५॥

## भ्रूण-तृण-गुण-कार्वण-तीक्ष्ण—श्लक्ष्णाभीक्ष्णादयः ॥१८६॥

एते णप्रत्ययान्ता निपात्यन्ते । भृगो भ्रू च, भ्रूणः—निहीनः, अर्भकः, स्त्रैणगर्भश्च । तरतेर्ह्रस्वश्च, तृण—शष्पादि । गायतेर्गमेर्गृणातेर्वा गुभावश्च, गुणः—उपकारः, आश्रितः, अप्रधानं, ज्या च । कृगो वृद्धिः कोऽन्तश्च, कार्वणः-शिल्पी । तिजेर्दीर्घः सश्च परादिः तीक्ष्णं-निशितम् । श्लिपेः सोऽन्तोच्चेतः श्लक्ष्णम्-अकर्कश, सूक्ष्मं च । अभिपूर्वादिषेः किच्च सोन्तः अभीक्ष्णम्—अजस्रम् । आदिग्रहणादन्येऽपि ॥१८६॥

## तॄ-कॄ-शॄ-पॄ-भृ-श्रु-रुहि-रु-लक्षि-विचक्षि-चुक्कि-बुक्कि-तङ्गयङ्गि-मङ्कि-कङ्कि-चरि-समीरेरणः ॥१८७॥

एभ्योऽणः प्रत्ययो भवति । तॄ प्लवनतरणयोः, तरणम् । कृत् विक्षेपे, करणम । शॄश् हिंसायाम्, शरणं-गृहम् । पॄश् पालनपूरणयोः, परणम् । डुभृंग्क पोषणे च, भरणम् । वृग्ट् वरणे, वरः—वृक्षः, सेतुबन्धश्च । वरणं—कन्याप्रतिपादनम् । श्रुंट् श्रवणे, श्रवणः—कर्णः, भिक्षुश्च । रुक् शब्दे, रुंङ् रेषणे वा, रवण—करभः, अग्निः, द्रुमः, वायुः, भृङ्गः, शकुनिः, सूर्यः, घण्टा च । रुहं जन्मनि, रोहणः—गिरिः । लक्षीण् दर्शनाङ्कनयोः, लक्षणं—व्याकरणम्, शुभाशुभसूचकं रेखातिलकादि अङ्कनं च । चक्षिक् व्यक्तायां वाचि, विचक्षणः-विद्वान् । चुक्कण् व्यथने, चुक्कणः-व्यायामशील । बुक्क भाषणे, बुक्कणः—श्वा, वावदूकश्च । तगु गतौ, तङ्गणाः—जनपदः । अगु गतौ, अङ्गणम्-अजिरम् । मकुङ् मण्डने, मङ्कणः—ऋषिः । ककुङ् गतौ, कङ्कणः-प्रतिसरः । चर भक्षणे च, चरणः-पादः । ईरिक् गतिकम्पनयोः सम्पूर्वः, समीरणः-वातः ॥१८७॥

## कॄ-गॄ-पॄ-कृपि-वृपिभ्यः कित् ॥१८८॥

एभ्यः किद् अणः प्रत्ययो भवति । कृत् विक्षेपे, किरणः—रश्मिः । गृत् निगरणे, गिरणः—मेघः, आचार्यः, ग्रामश्च । पृश् पालनपूरणयोः, पुरणः-समग्रयिता, समुद्रः पर्वतविशेपश्च । कृपौङ् सामर्थ्ये, कृपणः कीनाशः । वृष् सेचने, वृषणः-मुष्कः ॥१८८॥

## धृषि-वहेरिच्चोपान्त्यस्य ॥१८९॥

आभ्यां किद् अणः प्रत्यय इच्चोपान्त्यस्य भवति । ञिधृषाट् प्रागल्भ्ये, धिषणः—बृहस्पतिः, धिषणा—बुद्धिः । वहीं प्रापणे, विहणः—ऋषिः, पाठश्च ॥१८९॥

## चिक्कण-कुक्कण कृकण-कुङ्कण-त्रवणोल्वणोरण-लवण-वङ्क्षणादयः ॥१९०॥

एते किद् अण्प्रत्ययान्ता निपात्यन्ते । चिनोतेश्चिक्क् च, चिक्कण- पिच्छिलः । कुकिकृगोः कोऽन्तश्च, कुक्कणः-शकुनिः । कृकणः-ऋषिः । कुकेः स्वरान्नोऽन्तश्च, कुङ्कणाः—जनपदः । त्रपेर्वश्च, त्रवणः—देशः । वलेर्वस्य उत्, वोऽन्तश्च, उल्वणः—स्फारः । अर्तेरुर् च, उरणः—मेषः । लीयतेः क्लिद्यतेः-स्वदतेर्वा-लवादेशश्च । लवणं, गुणः, द्रव्यं च । वञ्चेः सः

परादिर्नलोपाभावश्च, वडक्षणः ऊरुमूलसंधिः । आदिशब्दात् ज्योतिरिङ्गणतुरणभुरणादयो भवन्ति ॥१९०॥

## कृपि-विपि-वृपि-धृपि-मृपि-युषि-द्रुहि-ग्रहेराणक् ॥१९१॥

एभ्य आणक् प्रत्ययो भवति । कृपौङ् सामर्थ्ये कृपाणः-खड्गः । विपू सेचने, विषाणं-शृङ्गम् , करिदन्तश्च । वृपू सेचने, वृपाणः । जिधृषाट् प्रागल्भ्ये, धषाणः-देव. । मृपू सहने च, मृषाणः । युषि सेवने सौत्रः, युषाणः । द्रुहौच् जिघासायाम् ,द्रुहाण'-मुखरः । ग्रहीश् उपादाने, गृहाणः । वृषाणादयः स्वप्रकृत्यर्थवाचिनः सर्वेऽपि कर्तरि कारके ज्ञेयाः ॥१९१॥

## पषो णित् ॥१९२॥

पषो बाधनस्पर्शनयो' इत्यस्माद् आणक् प्रत्ययो भवति, स च णिद् भवति । पापाणः—प्रस्तरः ॥१९२॥

## कल्याण-पर्याणादयः ॥१९३॥

कल्याणादय' शब्दा आणक्प्रत्ययान्ता निपात्यन्ते । कलेर्योऽन्तश्च, कल्याणं-श्वोवसीयम् । परिपूर्वात् इणो ह्रक् च । पर्याणम्—अश्वादीनां पृष्ठच्छदः । आदिशब्दाद् द्रेक्काण-बोक्काण-केक्काणादयो भवन्ति ॥१९३॥

## द्रु-हृ-बृहि-दक्षिभ्य इणः ॥१९४॥

एभ्यः इणः प्रत्ययो भवति । द्रुं गतौ, द्रविणं—द्रव्यम् । हृंग् हरणे, हरिण'—मृगः । बृह वृद्धौ, बर्हिण'—मयूरः । दक्षि शैर्ध्ये च, दक्षिणः—कुशलः, अनुकूलश्च । दक्षिणा, दिग, ब्रह्मदेयं च ॥१९४॥

## ऋ-द्रुहेः कित् ॥१९५॥

आभ्यां किद् इणः प्रत्ययो भवति । ऋश् गतौ, इरिणम्—ऊषरम्, कुञ्जः, वनदुर्गं च । द्रुहौच् जिघांसायाम्, द्रुहिणः-ब्रह्मा, क्षुद्रजन्तुश्च ॥१९५॥

## ऋ-कॄ-वॄ-धॄ-दारिभ्य उणः ॥१९६॥

एभ्य उणः प्रत्ययो भवति । ऋंक् गतौ, अरुणः सूर्य, सारथिः, उषा, वर्णश्च । कृत् विक्षेपे, करुणा-दया, करुणः-करुणाविषयः, करुणं-दैन्यम् । वृश् भरणे, वरुणः-प्रचेताः । धृंग् धारणे, धरुणः-धर्ता, आयुक्तो, लोकश्च । दॄश् विदारणे, णौ, दारुणः—उग्रः ॥१९६॥

## क्षः कित् ॥१९७॥

क्षै क्षये, इत्यस्मात् किद् उणः प्रत्ययो भवति । क्षुणः-व्याधिः, क्षामः, क्रोध, उन्मत्तश्च ॥१९७॥

## भिक्षुणी ॥१९८॥

भिक्षेरुणः प्रत्ययो भवति, ङीश्च निपात्यते । भिक्षुणी-व्रतिनी ॥१९८॥

## गा-दाभ्यामेष्णक् ॥१९९॥

आभ्यां एष्णक् प्रत्ययो भवति । गै शब्दे, गेष्णः-मेषः, उद्गाता, रङ्गोपजीवी च । गेष्णं-साम, सुखं च, रात्रिगेष्णः-रङ्गोपजीवी । सुगेष्णा—किन्नरी । डुदांग्क् दाने, देष्णः-बाहुः, दानशीलश्च । चारुदेष्णः—सात्यभामेयः । सुदेष्णा—विराटपत्नी ॥१९९॥

## दम्यमि-तमि-मा-वा-पू-धू-गॄ-जॄ-हसि वस्यसि वितसि मसीण्भ्यस्तः ॥२००॥

एभ्यस्तः प्रत्ययो भवति । दमूच् उपशमे, दन्तः-दशनः, हस्तिदंष्ट्रा च । अम गतौ, अन्तः—अवसानम्, धर्मः, समीपं च । तमूच् काङ्क्षायाम्, तन्तः—खिन्नः । माक् माने, मातम्-अन्तःप्रविष्टम् । वाक् गतिगन्धनयो', वातः-वायु' । पूगश् पवने, पोतः-नौ', अग्निः, बालश्च । धूगूग् कम्पने, धोतः-धूमः, शठः, वातश्च । गॄत् निगरणे, गर्तः—श्वभ्रम् । जॄष्च्

जरसि, जर्त'-प्रजननं, राजा च । हसे हसने, हस्त'-कर', नक्षत्रं च । वसूच् स्तम्भे, वस्त'-छागः। असूच् क्षेपणे, अस्तः-गिरिः । तसूच् उपक्षये, वितस्ता-नदी । मसैच् परिणामे, मस्त'-मूर्धा । इणंक् गतौ, एतः-हरिण', वर्ण, वायु', पथिकश्च ॥२००॥

## शी-री-भू-दू-मू-घृ-पा-धाग्-चित्यर्त्यञ्जि-पुसि-मुसि-वुसि-विसि-रमि-धुर्वि-पूर्विभ्यः कित् ॥२०१॥

एभ्यः कित् तः प्रत्ययो भवति । शीङ्क् स्वप्ने, शीतं-स्पर्शविशेषः। रीश् गतिरेषणयोः, रीतं-सुवर्णम् । भू सत्तायाम्, भूत'-ग्रहः, भूतं-पृथिव्यादि । दूङ्च् परितापे, दूतः-वचोहर' । मूङ् बन्धने, मूत दध्यर्थ क्षीर तक्रसेक, वस्त्रावेष्टनबन्धनम्, आचमनी, आलानं, पाशः, बन्धनमात्रं, धान्यादिपुटश्च । घृ सेचने, घृतं-सर्पिः । पां पाने, पीतं-वर्णविशेषः । डुधागूक् धारणे च, 'धाग' [४-४-१५] इति हि', हितम्-उपकारि । चितै सज्ञाने, चित्त-मनः । ऋक् गतौ, ऋत-सत्यम् । अञ्जौप् व्यक्तिम्रक्षणादिषु, अक्तः-म्रक्षितः, व्यक्तीकृतः, परिमित., प्रेतश्च । पुसच् विभागे, पुस्त-लेख्यपत्र-सचय, लेप्यादिकर्म च । मुसच् खण्डने, मुस्ता-गन्धद्रव्यम् । वुसच् उत्सर्गे, वुस्त'-प्रहसनम् । विसच् प्रेरणे, विस्त-सुवर्णमानम् । रमिं क्रीडायाम्, सुरतं-मैथुनम् । धुर्वै हिसायाम्, धूर्त-शठः । पूर्व पूरणे, पूर्तः-पुण्यम् ॥२०१॥

## लु-म्रो वा ॥२०२॥

आभ्यां त प्रत्ययो भवति, स च किद्वा भवति । ऌगश् छेदने, ऌता-क्षुद्रजन्तु. । लोत.-बाष्पं, लवनं, वस्त', कीटजातिश्च । मृंत् प्राणत्यागे मृत-गतप्राणः मर्त'-कपि, प्राणी, पुरुषश्च ॥२०२॥

## सु-सि-तनि-तुसेर्दीर्घश्च वा ॥२०३॥

एभ्यः कित् तः प्रत्ययो भवति, दीर्घश्च वा भवति । पुंगट् अभिषवे, सूतः-सारथिः, सुतः-पुत्रः। षिंगट् बन्धने, सीता-जनकात्मजा, सस्यं, हलमार्गश्च । सितः-वर्णः, बन्धश्च । तनूयी विस्तारे, तातः-पिता, पुत्रेष्टनाम च, ततं-विस्तीर्ण, वाद्यविशेषश्च । तुस शब्दे, तूस्तानि-वस्त्रदशाः, तुस्ताः-जटाः, प्रदीपनं च ॥२०३॥

## पुत-पित्त-निमित्तोत-शुक्त-तिक्त-लिप्त-सूरत-मुहूर्तादयः ॥२०४॥

एते कित्तप्रत्ययान्ता निपात्यन्ते । पूङो ह्रस्वश्च, पुतः-स्फिक् । पीङ्स्तोऽन्तश्च, पित्तं-मायु' । निपूर्वात् मिनोतेर्मित् च निमित्त-हेतुः, दिव्यज्ञानं च । उभेर्लुक् च, उत-आशङ्काद्यर्थमव्ययम् । शकेः शुचेर्वा शुक्भावश्च । शुक्तं-कल्कजातिः । ताडयतेस्तकतेस्तिजेर्वा तिक् च, तिक्तः-रसविशेषः । लीयतेः पोऽन्तो ह्रस्वश्च, लिप्तं श्लेषः, असदेशश्च । सुपूर्वात् रमेः सोर्दीर्घश्च, सूरत.-दमितो हस्ती, अन्यो वा दान्तः । हुर्च्छेः मुश्च धात्वादिः, मुहूर्त.-कालविशेषः । आदिग्रहणाद् अयुतनियुतादयो भवन्ति ॥२०४॥

## कृगो यङः ॥२०५॥

करोतेर्यङन्तात् कित् तः प्रत्ययो भवति । चेक्रीयित.- पूर्वाचार्याणां यङ्प्रत्ययसज्ञा ॥२०५॥

## इवर्णादिर्लुपि ॥२०६॥

करोतेर्यङो लुपि, इवर्णादिस्तः प्रत्ययो भवति । चर्करित, चर्करीतं-यङ्लुबन्तस्याख्ये ॥२०६॥

## दृ-पृ-भृ-मृ-शी-यजि-खलि-वलि-पर्वि-पच्यमि-नमि-तमि-दशि-हयि-कङ्किभ्योऽतः ॥२०७॥

एभ्योऽतः प्रत्ययो भवति । दृङ्त् आदरे, दरतः

आदरः । पूंक् पालनपूरणयोः, परतः कालः । टुडुभृंगक् पोषणे च, भरतः—आदिचक्रवर्त्ती, हिमवत्समुद्रमध्य-क्षेत्रं च । मृंत् प्राणत्यागे, मरतः-मृत्युः, अग्निः, प्राणी च । शीङ्क् स्वप्ने, शयतः-निद्रालुः, चन्द्रः, स्वप्नः, अजगरश्च । यजीं देवपूजासगतिकरणदानेषु, यजतः-यज्वा, अग्निश्च । खल संचये च, खलतः—शीर्णकेश-शिराः । वलि संवरणे, वलतः-कुशूलः । पर्व पूरणे, पर्वतः-गिरिः । डुपचींष् पाके, पचतः—अग्निः, आदित्यः, पालकः, इन्द्रश्च । अम गतौ, अमतः—मृत्युः, जीवः आतङ्कश्च । णमं प्रह्वत्वे, नमतः—नट', देवः, ऊर्णास्त-रणं, ह्रस्वश्च । तमूच् काङ्क्षायाम्, तमतः-निर्वेदी, आकाङ्क्षी, धूमश्च । दृशृं प्रेक्षणे, दर्शतः-द्रष्टा, अग्निश्च । हर्य क्रान्तौ, हर्यतः—वायुः, अश्वः, कान्तः, रश्मिः, यज्ञश्च । ककुङ् गतौ, कङ्कतः-केशमार्जनम् ॥२०७॥

## पृषि-रञ्जि-सिकि-का-ला-वृभ्यः कित् ॥२०८॥

एभ्यः किद् अतः प्रत्ययो भवति । पृषू सेचने, पृषतः—हरिणः । रञ्जीं रागे, रजतं—रूप्यम् । सिकिः सौत्रः, सिकता-वालुका । कै शब्दे, कतः—गोत्रकृत् । लांक् आदाने, लता—वल्ली । वृग्ट् वरणे, व्रतं—शास्त्र-विहितो नियमः ॥२०८॥

## कृ-वृ-कल्यलि-चिलि-विलीलि-ला-नाथिभ्य आतक् ॥२०९॥

एभ्य आतक् प्रत्ययो भवति । कृत् विक्षेपे, किरातः—शबरः । वृग्ट् वरणे, व्रातः—समूहः, उत्सेध-जीविसंघश्च । कलि शब्दसङ्ख्यानयोः, कलातः-ब्रह्मा । अली भूषणादौ, अलातम्—उल्मुकम् । चिलत् वसने, चिलाताः—म्लेच्छाः । विलत् वरणे, विलातः-शवाच्छा-दनवस्त्रम् । इलत् गत्यादौ, इलातः—नगः । लांक् आदाने, लातः—मृत्तिकादानभाजनम् । नाथृङ् उपता-पैश्वर्याशीःषु च । नाथातः—आहारः, प्रजापतिश्च ॥२०९॥

## हृ-श्या-रुहि-शोणि-पलिभ्य इतः ॥२१०॥

एभ्य इतः प्रत्ययो भवति । हृंग् हरणे, हरितः-वर्णः । श्यैङ् गतौ, श्येतः—वर्णः, मृगः, मत्स्यः श्येनश्च । रुहं जन्मनि, रोहितः—वर्णः, मत्स्यः, मृग-जातिश्च । लत्वे लोहित. वर्णः, लोहितम्—असृक् । शोणृ वर्णगत्यो', शोणितं—रुधिरम् । पल गतौ, पलितं-श्वेतकेशः ॥२१०॥

## नञ आपेः ॥२११॥

नञ्पूर्वाद् आप्लृंट् व्याप्तौ, इत्यस्माद् इतः प्रत्ययो भवति । नापितः—कारुविशेषः ॥२११॥

## कुशि-पिशि-पृषि-कुषि-कुस्युचिभ्यः कित् ॥२१२॥

एभ्यः किद् इतः प्रत्ययो भवति । क्रुशं आह्वा-नरोदनयोः, क्रुशितं—पापम् । पिशत् अवयवे, पिशितं-मांसम् । पृषू सेचने, पृषितं-वारिबिन्दुः । कुषश् निष्कर्षे, कुषितं—पापम् । कुशच् श्लेषे, कुशितः-ऋषिः, कुशि-तम्—ऋणं, श्लिष्टं च । उचच् समवाये, उचितं—स्वभावः योग्यं, चिरानुयातं, श्रेष्ठं च ॥२१२॥

## हृग ईतण् ॥२१३॥

हृंग् हरणे, इत्यस्माद् ईतण् प्रत्ययो भवति । हारीतः—पक्षी, ऋषिश्च ॥२१३॥

## अदो भुवो डुतः ॥२१४॥

अद्पूर्वात् भुवो डुतः प्रत्ययो भवति । अद् विस्मितं भवति तेन तस्मिन् वा मनः अद्भुतम्—आश्चर्यम् ॥२१४॥

## कुलि-मयिभ्यामूतक् ॥२१५॥

आभ्या ऊतक् प्रत्ययो भवति । कुल बन्धुसंस्त्या-

नयो', कुक्षता—जनपदः मथि गतौ, मयूता—वसतिः ॥२१५॥

जीवेर्मश्च ॥२१६॥

जीव प्राणधारणे, इत्यस्माद् ऊतक् प्रत्ययो भवति, मन्तादेशश्च । जीमूतः—मेघः; गिरिश्च ॥२१६॥

कवेरोतः प् च ॥२१७॥

कवृङ् वर्णे, इत्यस्माद् ओतः प्रत्ययो भवति, पश्चान्तादेशो भवति । कपोतः—पक्षी, वर्णश्च ॥२१७॥

आस्फायेर्डित् ॥२१८॥

आङ्पूर्वात् स्फायैङ् वृद्धौ, इत्यस्मात् डिद् ओतः प्रत्ययो भवति । आस्फोता—नाम औषधिः ॥२१८॥

जॄ-विशिभ्यामन्तः ॥२१९॥

आभ्यां अन्तः प्रत्ययो भवति । जॄष्च् जरसि, जरन्त.-भूतग्राम', वृद्ध', महिषश्च । विंशन् प्रवेशने, वेशन्त.—पल्वलम् । वल्लभः—अप्राप्तापवर्ग', आकाशं च ॥२१९॥

रुहि-नन्दि-जीवि-प्राणिभ्यष्टिदाशिषि ॥२२०॥

एभ्य आशिषि टिदन्तः प्रत्ययो भवति । रुहं जन्मनि, रोहतात् रोहन्तः—वृक्षः, रोहन्ती-औषधिः । टुनदु समृद्धौ, नन्दतात् नन्दन्त.—सखा, आनन्दश्च, नन्दन्ती-सखी । जीव प्राणधारणे, जीवतात् जीवन्तः आयुष्मान्, जीवन्ती शाक' । अनक् प्राणने, प्राण्यात् प्राणन्त —वायुः, रसायन च, प्राणन्ती-स्त्री ॥२२०॥

तॄ-जि-भू-वदि-वहि-वसि-भास्यदि-साधि-मदिगडि-गण्डि-नन्दि-रेविभ्यः ॥२२१॥

एभ्यष्टिदन्त प्रत्ययो भवति । आशिषीत्येके । तॄ प्लवनतरणयोः, तरन्तः—आदित्यः, भेकश्च, तरन्ती स्त्री । जिं अभिभवे । जयन्तः-रथरेणुः, ध्वजः, इन्द्र-पुत्रः, जम्बूद्वीपपश्चिमद्वारम्, पश्चिमानुत्तरविमानं च, जयन्ती—उदयनपितृष्वसा । भू सत्तायाम्, भवन्तः—कालः, भवन्ती । वद व्यक्तायां वाचि, वदन्तः, वदन्ती । वहीं प्रापणे, वहन्तः-रथः, अनड्वान् रथ-रेणुः, वायुश्च, वहन्ती । वस निवासे, वसन्तः- ऋतुः । भासि दीप्तौ, भासन्तः—सूर्यः, भासन्ती, ण्यन्तो-ऽपि, भासयन्तः—सूर्यः । अदंक् भक्षणे, अदन्तः, अदन्ती । साधंट् ससिद्धौ, साधन्तः-भिक्षुः, ण्यन्तोऽपि, साधयन्तः-भिक्षुः, साधयन्ती । मदैच् हर्षे, णौ, मदयन्त', मदयन्ती-पुष्पगुल्मजातिः । गड सेचने, गडन्तः-जलद', ण्यन्तोऽपि, गडयन्तः, गडयन्ती । गडु वदनैकदेशे, ण्यन्त', गण्डयन्तः-मेघः । मडु भूषायाम्, ण्यन्तः, मण्डयन्तः—प्रसाधकः,अलं-कारः-आदर्शश्च । टुनदु समृद्धौ, ण्यन्तः, नन्दयन्तः-सुखकृत्, राजा, हिरण्यं, सुखं च, नन्दयन्ती । रेवृङ् पथि गतौ, रेवन्तः—सूर्यपुत्रः । अनुक्तार्था धात्वर्थ-कर्त्रर्था ॥२२१॥

सीमन्त-हेमन्त-भदन्त-दुष्यन्तादयः ॥२२२॥

एतेऽन्तप्रत्ययान्ता निपात्यन्ते । सिनोतेः सीम् च, सीमन्तः—केशमार्गः, ग्रामक्षेत्रान्तश्च । हन्तेर्हिनोतेर्वा हेम् च, हेमन्तः-ऋतुः । भदन्तेर्नलुक् च, भदन्तः-निर्ग्रन्थेषु शाक्येषु च । पूज्यः दुषेर्योऽन्तश्च । दुष्यन्तः-राजा । आदिग्रहणादन्येऽपि ॥२२२॥

शकेरुन्तः ॥२२३॥

शक्लृंट् शक्तौ, इत्यस्माद् उन्तः प्रत्ययो भवति । शकुन्त.-पक्षी ॥२२३॥

कषेर्डित् ॥२२४॥

कष हिंसायाम् इत्येतस्माद् डिदुन्तः प्रत्ययो भवति । कुन्तः—आयुधम् ॥२२४॥

**कमि-प्रु-गार्तिभ्यस्थः ॥२२५॥**

एभ्यस्थः प्रत्ययो भवति । कमूङ् कान्तौ, कन्था—प्रावरणम्, नगरं च । प्रुंङ् गतौ, प्रोथः—प्रियो, युवा, सूकरमुखं, घोणा च। गै शब्दे, गाथा-श्लोकः, आर्या वा । ऋंक् गतौ, अर्थः—जीवाजीवादिपदार्थः, प्रयोजनम्, अभिधेय, धन, याच्ञा, निवृत्तिश्च ॥२२५॥

**अवाद् गोऽच्च वा ॥२२६॥**

अवपूर्वाद्गायतेः थः प्रत्ययो भवति, अच्चान्तादेशो वा भवति । अवगथः, अवगाथः-अक्षसंघः, प्रातःसवनं, रथयानं, साम, पन्थाश्च ॥२२६॥

**नी-नू-रमि-तॄ-तुदि-वचि-रिचि-सिचि-श्वि-हनि-पा-गो-पा-वोद्गाभ्यः कित् ॥२२७॥**

एभ्यः कित् थः प्रत्ययो भवति । णींग् प्रापणे, नीथं-जलम्, सुनीथो नाम राजा, नीतिमान्, धर्मशीलः ब्राह्मणश्च । णूत् स्तवने, नूथ-तीर्थम् । रमिं क्रीडायाम, रथः—स्यन्दनः । तॄ प्लवनतरणयोः, तीर्थ—जलाशयावगाहनमार्गः, पुण्यक्षेत्रम्, आचार्यश्च । तुदींत् व्यथने, तुत्थं—चक्षुष्यः, धातुविशेषः । वचंक् भाषणे, उक्थं-शास्त्रं, सामवेदश्च, उक्थानि—सामानि । रिचूंपी विरेचने, रिक्थं—धनम् । षिचींत् क्षरणे, सिक्थं-मदनं, पुलाकश्च । ट्वोश्वि गतिवृद्धयोः, शूथः-यज्ञप्रदेशः । हनंक् हिंसागत्यो , हथः—पन्थाः, कालश्च । पां पाने, पीथ बालघृतपानम् , अम्भ , नवनीतं च, पीथः—मकरः, रविश्च । गोपूर्वात्, गोपीथः—तीर्थविशेषः, गोनिपानं, जलद्रोणी, कालविशेषश्च । गै शब्दे, अवगीथम्-यज्ञकर्मणि प्रातःशंसनम्, उद्गीथ-शुनामूर्ध्वमुखानां विरावः, सामगानम्, प्रथमोच्चारणं च ॥२२७॥

**न्युद्भ्यां शीङः ॥२२८॥**

नि—उद्पूर्वात् शीङ्क् स्वप्ने, इत्यस्मात् कित् थः प्रत्ययो भवति । निशीथः—अर्धरात्रः, रात्रिः, प्रदोषश्च । उच्छीथः—स्वप्नः, टिट्टिभश्च ॥२२८॥

**अवभृ-निर्ऋ-समिण्भ्यः ॥२२९॥**

अवपूर्वाद् बिभर्तेः, निस्पूर्वादर्त्तेः, सम्पूर्वात् एतेश्च कित् थः प्रत्ययो भवति । अवभृथः—यज्ञावसानं, यज्ञस्नानं च, निर्ऋथ—निकायः, निर्ऋथं—स्नानम् । समिथ—सगमः, गोधूमपिण्टं च, समिथ—समूहः ॥२२९॥

**सर्तेर्णित् ॥२३०॥**

सृं गतौ, इत्यस्माद् णित् थःप्रत्ययो भवति । सार्थः—समूहः ॥२३०॥

**पथ-यूथ-गूथ-कुथ-तिथ-निथ-सूदथादयः ॥२३१॥**

एते थप्रत्ययान्ता निपात्यन्ते । पलतेर्लो लुक् च, पथः—पन्थाः । यौतेर्गुवतेश्च दीर्घश्च यूथः—समूहः, गूथम्—अमेध्यं विष्ठा च । किरतेः करोतेर्वा कुथ, कुथः—कुथा वा—आस्तरणम् । तनोतेस्तिष्ठतेर्वा तिथ तिथः—कालः । तिम्यते, तिथः-प्रावृट्कालः । नयतेर्ह्रस्वश्च, निथः—पूर्वक्षत्रियः कालथः । सुपूर्वात् रमे. सोर्दीर्घश्च कित् च ।सूरथः—दान्त । आदिग्रहणाद् निपूर्वाद् रौतेर्दीर्घत्व च निरूथ —दिक्, निरूथ-पुण्यक्रमनियतम् । एवं सगीथप्रगाथादयोऽपि ॥२३१॥

**भृ-शी-शपि-शमि-गमि-रमि-वन्दि-वञ्चि-जीवि-प्राणिभ्योऽथः ॥२३२॥**

एभ्योऽथ प्रत्ययो भवति । डुभृग्क् पोषणे च, भरथ —कैकयीसुत , अग्निः, लोकपालश्च । शीङ्क् स्वप्ने. शयथः—अजगर , प्रदोष., मत्स्य .

वराहश्च । शपीं आक्रोशे, शपथः—प्रत्ययकरणम्, आक्रोशश्च । शमूच् उपशमे, शमथः—समाधिः, आश्रमपदं च । गम्लृं गतौ, गमथः—पन्थाः, पथिकश्च । रमिं क्रीडायाम्, रमथः—प्रहर्ष. । वदुङ् स्तुत्यभिवादनयोः, वन्दथ—स्तोता, स्तुत्यश्च । वञ्चू गतौ, वचथ.—अध्वा, कोकिलः, काकः, दम्भश्च । जीव प्राणधारणे, जीवथः—अर्थवान्, जलम्, अन्न, वायु, मयूरः, कूर्मः, धार्मिकश्च । अनक् प्राणने, प्राणथ.—बलवान्, ईश्वरः, प्रजापतिश्च ॥२३२॥

**उपसर्गाद्वसः ॥२३३॥**

उपसर्गात् परस्मात् वस निवासे, इत्यस्मादथः प्रत्ययो भवति । आवसथः—गृहम्, उपवसथः—उपवासः, सवसथः—सवासः, सुवसथः—सुवासः, निवमथः—निवासः ॥२३३॥

**विदि-भिदि रुदि-द्रुहिभ्यः कित् ॥२३४॥**

एभ्यः किदथ प्रत्ययो भवति । विदंक् ज्ञाने, विदथ—ज्ञानी, यज्ञ., अध्वर्युः, सग्रामश्च । भिदृंपी विदारणे, भिदथ -शरः । रुदृक् अश्रुविमोचने, रुदथ वाल, असत्त्व., श्वा च । द्रुहौच् जिघांसायाम्, द्रुहथ.—शत्रु. ॥२३४॥

**रोर्वा ॥२३५॥**

रुक् शब्दे, इत्यस्मादथ प्रत्ययो भवति, सच किद्वा भवति । रुकथ - शकुनि, शिशुश्च । रवथ—आक्रन्द, शब्दकारश्च ॥२३५॥

**जॄ-वृभ्यामूथः ॥२३६॥**

आभ्यामूथ प्रत्ययो भवति । जॄष्च् जरसि, जरूथ.—शरीरम् अग्रमांसम्, अग्निः, सवत्सरः, मार्ग., कन्मर्ष च । वृग्ट्, वरणे, वरूथ.—वर्म, सेनाङ्ग, वल्सघातश्च ॥२३६॥

**शा-शपि-मनि-कनिभ्यो दः ॥२३७॥**

एभ्यो दः प्रत्ययो भवति । शोंच् तक्षणे, शादः—कर्दमः, तरुणतृणं, मृदुः, वन्धः, सुवर्ण च । शपीं आक्रोशे, शब्दः—श्रोत्रग्राह्योऽर्थः । मनिच् ज्ञाने, मन्दः—अलसः, बुद्धिहीनश्च । कनै दीप्त्यादिषु, कन्दः—मूलम् ॥२३७॥

**आपोऽप् च ॥२३८॥**

आप्लृट् व्याप्तौ, इत्यस्मात् दः प्रत्ययो भवति । अस्य चाप् इत्ययमादेशो भवति । अब्दं—वर्षम् ॥२३८॥

**गोः कित् ॥२३९॥**

गुंत् पुरीषोत्सर्गे, इत्यस्मात् कित् दः प्रत्ययो भवति । गुदम्—अपानम् ॥२३९॥

**वृ-तु-कु-सुभ्यो नोऽन्तश्च ॥२४०॥**

एभ्यः कित् दः प्रत्ययो भवति, नकारश्चान्तादेशो भवति । वृग्ट् वरणे वृन्दं—समूहः: तुक् वृत्त्यादिषु, तुन्दं जठरम् । कुङ् शब्दे, कुन्दः—पुष्पजातिः । षुंग्ट् अभिषवे, सुन्द —दानव ॥२४०॥

**कुसेरिदेदौ ॥२४१॥**

कुसूच् श्लेषे, इत्यस्मात् इद ईद इत्येतौ कितौ प्रत्ययौ भवत. कुसिदम्—ऋणम्; कुसीदं—वृद्धिजीविका ॥२४१॥

**इङ्ग्यर्बिभ्यामुदः ॥२४२॥**

आभ्यामुद. प्रत्ययो भवति । इगु गतौ, इङ्गुद—वृक्षजाति । अर्ब गतौ, अर्बुदः—पर्वत. अक्षिव्याधिः, संख्याविशेषश्च । निपूर्वात् न्यर्बुदम्—सख्याविशेष ॥२४२॥

**ककेर्णिद्वा ॥२४३॥**

ककि लौल्ये, इत्यस्मादुद. प्रत्ययो भवति, स च णिद्वा भवति । काकुदं—तालु, ककुदं स्कन्धः ॥२४३॥

**कुमुद-बुद्बुदादयः ॥२४४॥**

एते उदप्रत्ययान्ता निपात्यन्ते । कमे. कुम् च कुमुदं—कैरवम् । बुन्देः किद् वोऽन्तश्च, बुद्बुद-जलस्फोटः, बुद्बुदः नेत्रजो व्याधिः । आदिग्रहणात् दूहीक क्षरणे प्रत्ययादेरत्वे, दोहद-अभिलाषविशेषः । एवमन्येऽपि ॥२४४॥

**ककि-मकिभ्यामन्दः ॥२४५॥**

आभ्यामन्दः प्रत्ययो भवति । ककि लौल्ये । मकिः सौत्रः । ककन्द' मकन्दश्च राजानौ, यकाभ्यां निर्वृत्ता काकन्दी, माकन्दी च नगरी ॥२४५॥

**कलयलि-पुलि-कुरि-कुणि-मणिभ्य इन्दक् ॥२४६॥**

एभ्य इन्दक् प्रत्ययो भवति । कलि शब्द-संख्यानयोः, कलिन्द' पर्वतः यतो यमुना प्रभवति । अली भूषणादौ, अलिन्द'—प्रघाण., भाजनस्थानं च । पुल महत्त्वे, पुलिन्द —शबरः । कुरत् शब्दे, कुरिन्दः-धान्यमलहरणोपकरणम्, तेजनोपकरणं च । कुणत् शब्दोपकरणयोः, कुणिन्दः—म्लेच्छ', शब्द उपकरणं च । मण शब्दे, मणिन्द'—अश्वबल्लव. ॥२४६॥

**कुपेर्व च वा ॥२४७॥**

कुपच् क्रोधे, इत्यस्माद् इन्दक् प्रत्ययो भवति । वश्चान्तादेशो वा भवति । कुपिन्द, कुविन्दः—तन्तुवायः ॥२४७॥

**पृपलिभ्यां णित् ॥२४८॥**

आभ्यां णिद् इन्दक् प्रत्ययो भवति । पृश् पालनपूरणयोः, पल गतौ, पारिन्द', पलिन्दः, द्वावपि वृक्षगाथकौ, पारिन्दः—मुख्य, पूज्यश्च । पालिन्दो—नृपतिः, रक्षकश्चेत्येके ॥२४८॥

**यमेरुन्दः ॥२४९॥**

यमू उपरमे, इत्यस्माद् उन्द. प्रत्ययो भवति । यमुन्दः—क्षत्रियविशेष' ॥२४९॥

**मुचेर्डुकुन्द-कुकुन्दौ ॥२५०॥**

मुच्लृंती मोक्षणे, इत्यस्मात् डित् उकुन्दः किदुकुन्दश्च प्रत्ययो भवतः । मुकुन्दः विष्णुः, मुचुकुन्दः—राजा, वृक्षविशेषश्च ॥२५०॥

**स्कन्यमिभ्यां घः ॥२५१॥**

आभ्यां घः प्रत्ययो भवति । स्कन्दृ गतिशोषणयो., स्कन्ध.—बाहुमूर्धा, ककुन्दविभागश्च । बाहुलकाद् दस्य लुक् । अम गतौ, अन्धः—चक्षुर्विकलः ॥२५१॥

**नेः स्यतेरधक् ॥२५२॥**

निपूर्वात् षोच् अन्तकर्मणि, इत्यस्माद् अधक् प्रत्ययो भवति । निषधः—पर्वतः, निषधाः जनपदः ॥२५२॥

**मङ्गेर्नलुक् च ॥२५३॥**

मगु गतौ, इत्यस्माद् अधक् प्रत्ययो भवति, नकारस्य च लुग् भवति । मगधा. जनपदः ॥२५३॥

**आरगेर्वधः ॥२५४॥**

आङ् पूर्वात् रगे शङ्कायाम्, इत्यस्माद् वध' प्रत्ययो भवति । आरग्वध.—वृक्षजातिः ॥२५४॥

**परात् श्रो डित् ॥२५५॥**

परपूर्वात् शृश् हिंसायाम्, इत्यस्मात् डित् वध. प्रत्ययो भवति । परश्वधः—आयुधजातिः ॥२५५॥

**इषेरुधक् ॥२५६॥**

इषत् इच्छायाम् इत्यस्माद् उधक् प्रत्ययो भवति । इषुधः—याञ्चा ॥२५६॥

**कोरन्धः ॥२५७॥**

कुङ् शब्दे, इत्यस्माद् अन्ध प्रत्ययो भवति । कबन्ध.—छिन्नमूर्धा देह ॥२५७॥

**प्या-धा-पन्यनि-स्वदि-स्वपि-वस्यज्य-तिसिविभ्यो नः ॥२५८॥**

एभ्यो नः प्रत्ययो भवति । प्यैङ् वृद्धौ, प्यानः-समुद्रः चन्द्रश्च । डुधांग्क् धारणे च, धाना—भृष्टौ यवः, अङ्कुरश्च । पनि स्तुतौ, पन्नं—नीचैः करणम्, सृन्नं, जिह्वा च । अनक् प्राणने, अन्नं—भक्तम्, आचारश्च । ष्वदि आस्वादने, स्वन्न—रुचितम् । ञिष्वपंक् शये, स्वप्नः मनोविकारः, निद्रा च । वस निवासे, वस्नं—वासः, मूल्यम्, मेढ्रम्, आगमश्च । अज क्षेपणे च, वेनः—प्रजापतिः, ध्यानी, राजा, वायुः यज्ञः, प्राज्ञः, मूर्खश्च । अत सातत्यगमने, अत्नः—आत्मा, वायु, मेघः प्रजापतिश्च । षिवूच् उतौ, स्योनं सुखम्, तन्तुवायसूत्रसतानः, समुद्रः, सूर्यः, रश्मिः, आस्तरणं च ॥२५८॥

## षसेर्णित् ॥२५९॥

षसक् स्वप्ने, इत्यस्मात् णिद् नः प्रत्ययो भवति । सास्ना—गोकण्ठावलम्बि चर्म, निद्रा च ॥२५९॥

## रसेर्वा ॥२६०॥

रस शब्दे, इत्यस्माद् न प्रत्ययो भवति, णिद् वा भवति । रास्ना—धेनु औषधिजातिश्च । रस्नं—द्रव्यजातिः, रस्ना—जिह्वा, रस्नः—तुरङ्गः, दण्डश्च ॥२६०॥

## जीण्-शी-दी-बुध्यवि-मीभ्यः कित् ॥२६१॥

एभ्यः किद् न प्रत्ययो भवति । जि अभिभवे, जिनः—अर्हन्, बुद्धश्च । इंण्क् गतौ, इनः—स्वामी, सनिपातः, ईश्वरः, राजा, सूर्यश्च । शीङ्क् स्वप्ने, शीनः पीलुः । दीङ्च् क्षये । दीनः, कृपणः, खिन्नश्च । बुधिंच्-ज्ञाने, बुध्नः—मूल, पृष्ठान्त, रुद्रश्च । अव रक्षणादौ, ऊनम्—अपरिपूर्णम् । मीङ्च् हिंसायाम, मीन—मत्स्य, राशिश्च ॥२६१॥

## सेर्वा ॥२६२॥

षिगूट् बन्धने, इत्यस्माद् नः प्रत्ययो भवति, स च किद्वा भवति । सिनः-कायः, वस्त्रं, बन्धश्च । सेना—चमूः ॥२६२॥

## सोरू च ॥२६३॥

षुग्ट् अभिषवे, इत्यस्मान्न, प्रत्ययो भवति, ऊकारश्चान्तादेशो भवति । सूना-घातस्थानम्, दुहितापुत्रः, प्रकृतिः, आघाटस्थानं च ॥२६३॥

## रमेस्त् च ॥२६४॥

रमि क्रीडायाम् इत्यस्माद् न. प्रत्ययो भवति, तश्चान्तादेशो भवति । रत्नं-वज्रादिः ॥२६४॥

## क्रुशेर्वृद्धिश्च ॥२६५॥

क्रुशं आह्वानरोदनयोः, इत्यस्माद् नः प्रत्ययो भवत्यस्य च वृद्धिर्भवति । क्रौश्नः—श्वापदः ॥२६५॥

## द्यु-सु-निभ्या माङ्गडित् ॥२६६॥

द्युसुनिपूर्वात् मांङ्क् मानशब्दयोः, इत्यस्मात् डिद् नः प्रत्ययो भवति । द्युम्नं-द्रविणम्, सुम्नं-सुखम् निम्न-नतम् ॥२६६॥

## शीङः सन्वत् ॥२६७॥

शीङ्क् स्वप्ने इत्यस्मात्, डिद् नः प्रत्ययो भवति स च सन्वद्भवति । शिश्न-शेष. ॥२६७॥

## दिन-नग्न-फेन-चिह्न-ब्रध्न-वेन-स्तेन-च्यौक्रादयः ॥२६८॥

एते नप्रत्ययान्ता निपात्यन्ते । दिव्यते किल्लुक् च, दिनम्-अहः । नञ्पूर्वात् वसेर्गोऽन्तो धातोर्लुक्च । न वस्ते, नग्नः-अवसनः । फणेः, स्फायेर्वा फेभावश्च, फेन.-बुदबुदसघातः । चहेरिच्चोपान्त्यस्य, चिह्नम्-अभिज्ञानम् । बन्धेर्ब्रधूच । ब्रध्नः-रविः, प्रजापतिः, ब्रह्मा, स्वर्गः, पृष्ठान्तश्च । धयते-

रेत्वं च, धेना-सरस्वती, माता च, धेनः समुद्रः, ईत्वं चेत्येके, धीना। स्त्यायेस्ते च स्तेनः- चौरः, च्यवतेर्वृद्धिः कोऽन्तश्च। च्यौक्नम्- अक्षस्थानम्, अनुजः, क्षीणम्, अपुण्यं च। च्यौक्नी- कांस्यादिपात्री। आदिशब्दादन्येऽपि ॥२६८॥

**युसि-रसि-रुचि-जि-मस्जि-देवि-स्यन्दि चन्दि-मन्दि-मण्डि-मदि-दहि-वह्यादेरनः ॥२६९॥**

एभ्यः अनः प्रत्ययो भवति। युक् मिश्रणे, यवनाः- जनपदः, यवनं—मिश्रणम्। असूच् क्षेपणे, असनः—बीजकः, रसण् आस्वादनस्नेहनयोः, रसना-जिह्वा। रुचि अभिप्रीत्यां च, रोचना-गोपित्तम्, रोचनः—चन्द्रः, विपूर्वात्, विरोचनः—अग्निः, सूर्यः, इन्दुः, दानवश्च। जिं अभिभवे, जयनम्—ऊर्णापटः। टुमस्जोत् शुद्धौ, मज्जनं—स्नानं, तोयं च। देवृङ् देवने, देवनः—अक्षः, कितवश्च। स्यन्दौङ् स्रवणे, स्यन्दनः—रथः। चदु—दीप्त्याह्लादनयोः, चन्दनं-गन्धद्रव्यम्, मदुङ् स्तुत्यादौ, मन्दनः—स्तोत्रम्। मडु भूषायाम्, मण्डनम् अलङ्कारः। मदैच् हर्षे, मदनः-वृक्षः, कामः, मधूच्छिष्टं च। दह भस्मीकरणे, दहनः-अग्निः। वहीं प्रापणे, वहनं—नौः। आदिग्रहणात् पचेः पचनः-अग्निः। पुनातेः, नयन पवनः-वायुः। बिभर्तेः भरणं—साधनम्। नयतेः नयनं—नेत्रम्। द्युतेः, द्योतनः—सूर्यः। रचेः, रचना—वैचित्र्यम्। गृञ्जेः-गृञ्जनम्-अभक्ष्यद्रव्यविशेषः। प्रस्कन्दनः, प्रपतनः इत्यादयो भवन्ति ॥२६९॥

**अशो रश्चादौ ॥२७०॥**

अशौटि व्याप्तौ, इत्यस्माद् अनः प्रत्ययो भवति रेफश्चादौ भवति। रशना मेखला। रश्मिमेके प्रकृतिमुपादिशन्ति, सा च राशि, रशना, रश्मिः इत्यत्र प्रयुज्यत इत्याहुः ॥२७०॥

**उन्देर्नलुक् च ॥२७१॥**

उन्दैप् क्लेदने, इत्यस्माद् अनः प्रत्ययो भवति, नलोपश्च भवति। ओदनः—भक्तम् ॥२७१॥

**हनेर्घतजघौ च ॥२७२॥**

हनंक् हिंसागत्योः, इत्यस्माद् अनः प्रत्ययो भवति, घतजघावित्यादेशौ चास्य भवतः। घतनः रङ्गोपजीवी, पापकर्मा, निर्लज्जश्च। जघनं श्रोणिः ॥२७२॥

**तुदादि-वृजि-रञ्जि-निधाभ्यः कित् ॥२७३॥**

एभ्यः किद् अनः प्रत्ययो भवति। तुदींत् व्यथने, तुदनः। क्षिपींत् प्रेरणे, क्षिपणः। सुरत् ऐश्वर्यदीप्त्योः, सुरणः। बुधिच् ज्ञाने, बुधनः। षिवूच् उतौ, सिवनः। एषां यथासम्भव कारकमुच्यते। लवुङ् अवस्रंसने, लम्बनः-शकुनिः। वृजैकि वर्जने, वृजिनम्-अन्तरिक्षम्, निवारण, मुण्डनं च। रञ्जी रागे, रजनं-हरिद्रा। महारंजन-कुसुम्भम्, रंजनः-रङ्गविशेषः। डुधांग्क् धारणे च। निधनम्—अवसानम् ॥२७३॥

**सू-धू-भू-भ्रस्जिभ्यो वा ॥२७४॥**

एभ्यः अनः प्रत्ययो भवति, स च किद्वा भवति पूत् प्रेरणे, सुवनः-अङ्कुरः, आदित्यः, प्रादुर्भावश्च, सुवनं-चन्द्रप्रभा, सवनं-यज्ञः पूर्वाह्णापराह्णमध्याह्नकालश्च। त्रिषवणम्। धूत् विधूनने, धुवनः-धूमः, वायुः, अग्निश्च, धुवनम्—एधः, धवनम्। भू सत्तायाम्, भुवनं-जगत्, भवनं-गृहम्, भ्रस्जींत्, पाके, भृज्जनम्-अन्तरीक्षम्, अम्बरीष, पाकश्च। भ्रज्जनः-पावकः ॥२७४॥

**विदन-गगन-गहनादयः ॥२७५॥**

एते किदनप्रत्ययान्ता निपात्यन्ते। विदु अवयवे नलोपश्च, विदनः - गोत्रकृत्। गमेर्ग् च, गगनम्-आकाशम्। गाहौङ् विलोडने, ह्रस्वश्च, गहनं-दुर्ग-

मम् । आदिग्रहणात् काञ्चनकाननादयो भवन्ति ॥२७५॥

**संस्तु-स्पृशि-मन्थेरानः ॥२७६॥**

सपूर्वात् स्तोः स्पृशेश्च सम्पूर्वाभ्यां वा स्तु-स्पृशिभ्यां मन्थेश्च आनः प्रत्ययो भवति । ष्टुग्क् स्तुतौ, सस्तवानः—सोम, होता, महर्षि, वाग्मी च । स्पृशंत् स्पर्शे, स्पर्शानः-मनः, अग्निश्च । मन्थश् विलोडने, मन्थान. खजकः ॥२७६॥

**यु-युजि-युधि-वुधि-मृशि-दृशीशिभ्यः कित् ॥२७७**

एभ्यः किद्, आन प्रत्ययो भवति । युक् मिश्रणे, युवान.-तरुण । युजूंपी योगे, युजानः सारथिः । युधिच् सम्प्रहारे, युधान-रिपुः । बुधिच् ज्ञाने, बुधान-आचार्य, पण्डितो वा । मृशंत् आमर्शने, मृशान—विमर्शकः । दृशृं प्रेक्षणे, दृशानः—लोकपालः । युजादिप्रसिद्धकर्त्रर्था एते । ईशिक् ऐश्वर्ये, ईशान.-ईश्वर. ॥२७७॥

**मुमुचान-युयुधान-शिश्विदान-जुहुराण-जिह्रियाणाः ॥२७८॥**

एते किद् आनप्रत्ययान्ता निपात्यन्ते । मुचेर्द्वित्वं च, मुमुचान-मेघ । एव युधिच् सम्प्रहारे, युयुधान. साहसिक, राजा च कश्चित् । श्विताङ् वर्णे, अस्य दश्च, शिश्विदान—दुराचारो द्विज. । हुर्छा कौटिल्ये, अस्यान्तलुक् च, जुहुराण -कठिनहृदय, कुटिल, अग्नि, अध्वर्यु, अनड्वांश्च । ह्रींक् लज्जायाम्, जिह्रियाण, नीतिमान् । सर्वे एवैते मुच्यादिप्रसिद्धक्रियाकर्तृवचना इत्येके । अन्ये तु मुमुक्षादिसन्नन्तप्रकृतीनामेतन्निपातन, तेन सन्नन्तक्रियाकर्तृवचना इत्याहु ॥२७८॥

**ऋञ्जि-रञ्जि-मन्दि-सह्यर्हिभ्योऽसानः ॥२७९॥**

एभ्यः असानः प्रत्ययो भवति । ऋजुङ् भर्जने, ऋञ्जसानः—महेन्द्रः, मेघ, श्मशानं च । रञ्जीं रागे, रञ्जसानः—मेघः, धर्मश्च । मदुङ् स्तुत्यादिषु, मन्दसानः-हंस., चन्द्रः, सूर्य., जीवः, स्वप्नः, अग्निश्च । षहि मर्षणे, सहमान.—दृढ, मयूरः, यजमानः, क्षमावाश्च । अर्ह पूजायाम्, अर्हसानः—चन्द्रः, तुरङ्गमश्च ॥२७९॥

**रुहि-यजेः कित् ॥२८०॥**

आभ्यां किद् असानः प्रत्ययो भवति । रुहं जन्मनि, रुहसान—विटप । यजीं देवपूजासगतिकरणदानेषु, इजसान.—धर्मः ॥२८०॥

**वृधेर्वा ॥२८१॥**

वृधे असानः प्रत्ययो भवति, स च किद्वा भवति । वृधूङ् वृद्धौ, वृधसान-गर्भ । वर्धसानः—गिरिः, मृत्यु., गर्भः, पुरुषश्च ॥२८१॥

**श्या-कठि खलि-नल्यवि-कुण्डिभ्य इनः ॥२८२॥**

एभ्य इन प्रत्ययो भवति । श्यैङ् गतौ, श्येन - पक्षी, अभिचारयज्ञश्च । कठ कृच्छ्रजीवने, कठिनम् अमृदु । खल सचये च, खलिनम् अश्वमुखसयमनम् । णल गन्धे, नलिनं—पद्मम् । अव रक्षणादौ, अविनं- जल, मृगः, नाश, अग्निः, राजा, अध्वर्युः, विधान, गुप्तिश्च । कुडुङ् दाहे, कुण्डिन.-ऋषि., कुण्डिनं-नगरम् ॥२८२॥

**वृजि-तुहि-पुलि-पुटिभ्यः कित् ॥२८३॥**

एभ्यः किद् इन प्रत्ययो भवति । वृजैकि वर्जने, वृजिन-पाप, कुटिल च । तुह अर्दने, तुहिनम्-हिममन्धकारश्च । पुल महत्त्वे, पुटत् सश्लेषणे, पुलिनं, पुटिन च-नदीतीरं, वालुकासघातश्च ॥२८३॥

**विपिनाजिनादयः ॥२८४॥**

विपिनादय शब्दाः किद् इनप्रत्ययान्ता निपात्यन्ते ।

डुवर्पी बीजसंताने, टुवेपृङ् चलने इत्यस्य वा, इच्चोपान्त्यस्य । विपिनं—गहनम्, अब्जं, जलदुर्गं च । अज क्षेपणे च, अस्य वीभावाभावश्च । अजिनं-चर्म । आदिग्रहणादन्येऽपि ॥२८४॥

## महेर्णिद्वा ॥२८५॥

मह पूजायाम्, इत्यस्माद् इनः प्रत्ययो भवति स च किद्वा भवति । माहिनं-राज्य, बलं च । महिनं राज्यं, शयन च । महिनः-माहात्म्यवान् ॥२८५॥

## खलि-हिंसिभ्यामीनः ॥२८६॥

आभ्याम् ईनः प्रत्ययो भवति । खल सचये च, खलीनं-कवियम् । हिंसुप् हिंसायाम, हिंसीनः- श्वापदः ॥२८६॥

## पठेर्णित् ॥२८७॥

पठ व्यक्तायां वाचि, इत्यस्मात् णिद् ईनः प्रत्ययो भवति । पाठीनः- मत्स्यः ॥२८७॥

## यम्यजि-शक्य-र्जि-शी-यजि-तॄभ्य उनः ॥२८८॥

एभ्य उनः प्रत्ययो सवति । यमू उपरमे, यमुना-नदी । अज क्षेपणे च, वयुनं-विज्ञानम्, अङ्ग च, वयुनः—विद्वान्, चन्द्रः, यज्ञश्च । शक्लृंट् शक्तौ, शकुनः—पक्षी । अर्ज अर्जने, अर्जुनः-ककुभः, वृक्षविशेषः, पार्थः, श्वेतवर्णः, श्वेताश्वः, कार्तवीर्यश्च । अर्जुनी-गौः । अर्जुन तृणं, श्वेतसुवर्णं च । शीङ्क् स्वप्ने, शयुनः-अजगरः । यजीं देवपूजादौ, यजुना-क्रतुद्रव्यम् । तॄ प्लवनतरणयोः, तरुणः समर्थः, युवा, वायुश्च । ऋफिडादित्वाल्लत्वे, तलुनः ॥२८८॥

## लषेः शू च ॥२८९॥

लषी कान्तौ इत्यस्माद् उनः प्रत्ययो भवति । तालव्यः शकारश्चान्तादेशो भवति । लशुनं-कन्दजातिः ॥२८९॥

## पिशि-मिथि-क्षुधिभ्यः कित् ॥२९०॥

एभ्यः किद् उनः प्रत्ययो भवति । पिशत् अवयवे, पिशुनः- खलः, पिशुनं- मैत्रीभेदकं वचनम् । मिथृङ् मेधाहिंसयोः, मिथुनं-स्त्रीपुंसद्वन्द्वम्, राशिश्च । क्षुधंच् बुभुक्षायाम्, क्षुधनः-कीटकः ॥२९०॥

## फलेर्गोऽन्तश्च ॥२९१॥

फल निष्पत्तौ, इत्यस्माद् उनः प्रत्ययो भवति, गश्चान्तो भवति । फल्गुनः-अर्जुनः । फल्गुनी-नक्षत्रम् ॥२९१॥

## वी-पति-पटिभ्यस्तनः ॥२९२॥

एभ्यस्तनः प्रत्ययो भवति । वींक् प्रजननादौ, वेतनं भृतिः । पत्लृ गतौ, पत्तनम् । पट गतौ, पट्टनम् । द्वावपि नगरविशेषौ ।

पट्टन शकटैर्गम्यं, घोटकैर्नौभिरेव च । नौभिरेव तु यद् गम्यं, पत्तन तत् प्रचक्षते ॥२९२॥

## पृ-पूभ्यां कित् ॥२९३॥

आभ्यां कित् तनः प्रत्ययो भवति । पृंङ्त् व्यायामे, पृतना--सेना । पूग्श् पवने, पूतना-राक्षसी ॥२९३॥

## कृत्यशौभ्यां स्नक् ॥२९४॥

आभ्यां स्नक्प्रत्ययो भवति । कृतैत् छेदने, कृत्स्नं-सर्वम् । अशौटि व्याप्तौ । अक्ष्णं-नयनं, व्याधिः, रज्जुः, तेजनम्, अखण्ड च ॥२९४॥

## अर्तेः शसानः ॥२९५॥

ऋक् गतौ, इत्यस्मात्तालव्यादिः शसानः प्रत्ययो भवति । अर्शसानः--पन्था, इषुः, अग्निश्च ॥२९५॥

## भा-पा-चणि चमि-विपि सृ-पृ-तॄ-शी-तल्यलि-शमि रमि-चपिभ्यः पः ॥२९६॥

एभ्य पः प्रत्ययो भवति । भांक् दीप्तौ, भापः-आदित्यः, ज्येष्ठश्च भ्राता । पांक् रक्षणे पापं-कल्मषम्, पापः- घोरः । चण हिंसादानयोश्च, चण्पा-नगरी, चण्पः- वृक्षः । चमू अदने, चम्पा नगरी । विषॢ‌की व्याप्तौ, वेष्पः-परमात्मा, स्वर्गः, आकाशश्च । निपूर्वात्, निवेष्पः-अपां गर्भः, कूपः, वृक्षजातिः, अन्तरीक्ष च । सृं गतौ, सर्पः-अहिः । पॄश् पालन-पूरणयोः, पर्पः-प्लवः, शङ्खः समुद्रः, शस्त्रं च । तॄ प्लनवतरणयोः, तर्पः-उडुपः नौश्च । शीङ्क् स्वप्ने, शेपः-पुच्छम् । तलण् प्रतिष्ठायाम्, तल्पं-शयनीयम्, अङ्गं, दाराः, युद्धं च । अली भूषणादौ, अल्प-स्तोकम् शमूच् उपशमे, शम्पा- विद्युत्, काञ्ची च । विपूर्वात् विशम्पः- दानवः । रमिं क्रीडायाम्, रम्पा—चर्मकारोपकरणम् । टुवपीं बीजसताने, वप्पः—पिता ॥ २९६ ॥

### यु-सु-कु-रु-तु-च्यु-स्त्वादेरूच्च ॥२९७॥

एभ्य पः प्रत्ययो भवति, ऊकारश्चान्तादेशो भवति । युक् मिश्रणे, यूपः—यज्ञपशुबन्धनकाष्ठम् । षुंगट् अभिषवे, सूपः मुद्गादिभिन्नकृतः । कुक् शब्दे कूपः-प्रहिः । रुक् शब्दे, रूपं-श्वेतादि, लावण्यं, स्वभावश्च । तुक् वृत्यादौ, तूपः-आयतनविशेषः । च्युंङ् गतौ, च्यूपः-आदित्यः, वायुः, सग्रामश्च । ष्टुगक् स्तुतौ, स्तूपः-बोधिसत्त्वभवनम्, उपायतनं च । आदिशब्दादन्येऽपि ॥२९७॥

### कॄ-शॄ-सृभ्य-ऊर् चान्तस्य ॥२९८॥

एभ्यः प प्रत्ययो भवति, अन्तस्य च ऊ र् भवति कॄत् विक्षेपे, कूर्पम्-भ्रूमध्यम् । शॄश् हिंसायाम्, शूर्पः-धान्यादिनिष्पवनभाण्डं, सख्या च । सृं गतौ, सूर्पः-भुजङ्गम, मत्स्यजातिश्च ॥२९८॥

### शदि-बाधि-खनि-हने पः च ॥२९९॥

एभ्यः पः प्रत्ययो भवति, पश्चान्तादेशो भवति । शद्लृं शातने. शष्पं-बालतृणम् । शष हिंसायाम् इत्यस्य वा रूपम् । बाधृङ्-रोटने, बाष्पः-अश्रु, धूमाभास च मुखपानीयादौ । खनूग् अवदारणे, खष्प -बलात्कारः, दुर्मेधाः कूपश्च । खर्ष्प-खलीनं, जनपदविशेषः, अङ्गारश्च । हनंक् हिंसागत्योः, हष्पः-प्रावरणजातिः ॥२९९॥

### पम्पा-शिल्पादयः ॥३००॥

पम्पादयः शब्दा पप्रत्ययान्ता निपात्यन्ते । पांक् रक्षणे, माऽन्तो ह्रस्वश्च । पम्पा-पुष्करिणी । शीलयतेः शलतेः शेतेर्वा शिलादेशश्च । शिल्पं-विज्ञानम् । आदिशब्दादन्येऽपि ॥३००॥

### क्षु-चुपि-पूभ्यः कित् ॥३०१॥

एभ्यः कित् पः प्रत्ययो भवति । टुक्षुक् शब्दे क्षुपः-गुच्छः । चुप मन्दाया गतौ, चुप्पं मन्दगमनम् । पूग्श् पवने, पूपः पिष्टमयः ॥३०१॥

### नियो वा ॥३०२॥

णींग् प्रापणे, इत्यस्मात् पः प्रत्ययो भवति । स च किद्वा भवति । नीपः—वृक्षविशेषः, नेपः-नयः, पुरोहितः, वृक्षः, भृतकश्च, नेपम्—उदक,यान च ॥३०२

### उभ्यवेर्लुक् च ॥३०३॥

आभ्यां कित् पः प्रत्ययो भवति, लुक् चान्तस्य भवति । उभत् पूरणे । अव रक्षणादौ । उप, अप च अव्यये ॥३०३॥

### दलि-वलि तलि खजि ध्वजि-कुचिभ्योऽपः ॥३०४॥

एभ्यः अपः प्रत्ययो भवति । दल विशरणे, दलपः-प्रहरणम्, रणमुखम्,विदलं, दलविशेषश्च, दलपं

व्रणमुखत्राणम् । वलि संवरणे, वलपः—कर्णिका । तलण् प्रतिष्ठायाम्, तलपः—हस्तप्रहारः । खज मन्थे, खजपः—मन्थः, खजपं—दधि, घृतम् उदकं च । ध्वज गतौ, ध्वजपः—ध्वजः । कचि बन्धने, कचपः—शाकपणः, बन्धश्च ॥३०४॥

**भुजि–कुति–विटि–कुणि–कुप्युषिभ्यः कित् ॥३०५॥**

एभ्यः किदपः प्रत्ययो भवति। भुजंप् पालनाभ्यवहारयोः, भुजपः—राजा, यजमानपालनादग्निश्च । कुतिः सौत्रः, कुतपः—छागलोम्नां कम्बलः आस्तरणं, श्राद्धकालश्च । कुटस् कौटिल्ये, कुटपः—प्रस्थचतुर्भागः नीडं च शकुनीनाम्। विट् शब्दे, विटपः—शाखा। कुणत् शब्दोपकरणयोः । कुणपः—मृतकं कुथितं, शब्दार्थसारूप्यं च। कुषश् निष्कर्षे, कुषपः—विन्ध्यः, सदंशश्च। उषू दाहे, उषपः—दाहः, सूर्यः, वह्निश्च ॥३०५॥

**शसेः श इच्चातः ॥३०६॥**

शंसू स्तुतौ च, इत्यस्मादपः प्रत्ययो भवति तालव्यः शकारोऽन्तादेशोऽकारस्य च इकारो भवति । शिशपाः—वृक्षविशेषः ॥३०६॥

**विष्टपोलप–वातपादयः ॥३०७॥**

विष्टपादयः शब्दाः किद् अपप्रत्ययान्ता निपात्यन्ते । विपेस्तोऽन्तश्च । विष्टपं—जगत्, सुकृतिनां स्थानं च । वलेरुल् च । उलपं—पर्वततृणम्, पङ्कजं, जलं च । उलपः ऋषिः । वातेस्तोऽन्तश्च । वातपः—ऋषिः । आदिग्रहणात् खरपादयोऽपि भवन्ति ॥३०७॥

**कलेरापः ॥३०८॥**

कलि शब्दसंख्यानयोः, इत्यस्मादापः प्रत्ययो भवति । कलापः—काञ्चीसमूहः, शिखण्डश्च ॥३०८॥

**विशेरिपक् ॥३०९॥**

विशंत् प्रवेशने, इत्यस्मादिपक् प्रत्ययो भवति। विशिपः—राशिः । विशिपं—तृणं, वेश्म, आसनं, पद्मं च ॥३०९॥

**दलेरीपो दिल् च ॥३१०॥**

दल विशरणे, इत्यस्मादीपः प्रत्ययो भवति । दिल् चास्यादेशो भवति । दिलीपः—राजा ॥३१०॥

**उडेरुपक् ॥३११॥**

उड् संघाते, इति सौत्रात् उपक्प्रत्ययो भवति। उडुपः—प्लवः । जपादित्वाद् वत्वे उडुवः ॥३११॥

**अश ऊपः पश्च ॥३१२॥**

अशौटि व्याप्तौ, इत्यस्मादूपः प्रत्ययः भवति, पश्चान्तादेशो भवति। अपूपः पक्वान्नविशेषः ॥३१२॥

**सर्तेः षपः ॥३१३॥**

सृं गतौ, इत्यस्मात् षपः प्रत्ययो भवति । सर्षपः—रक्षोघ्नद्रव्यम् , शाकं च ॥३१३॥

**री–शीभ्यां फः ॥३१४॥**

आभ्यां फः प्रत्ययो भवति । रींङ्च् श्रवणे, रेफः—कुत्सितः। शीङ्क् स्वप्ने। शेफः—मेढ्रः ॥३१४॥

**कलि–गलेरस्योच्च ॥३१५॥**

आभ्यां फः प्रत्ययो भवत्यस्य चोकारो भवति । कलि शब्दसंख्यानयोः, गल अदने, कुल्फः—जङ्घाङ्घ्रिसन्धिः । गुल्फः—पादोपरिग्रन्थिः ॥३१५॥

**शफ–कफ शिफा–शोफादयः ॥३१६॥**

शफादयः शब्दाः फप्रत्ययान्ता निपात्यन्ते । श्यतेः कायतेश्च ह्रस्वश्च । शफः—खुरः, प्रियंवदश्च । कफः—श्लेष्मा । श्यतेरित्वमोत्वं च । शिफा—वृक्षजटा । शोफः—श्वयथुः, खुरश्च। आदिशब्दाद् रिफानफाशुनफादयो भवन्ति ॥३१६॥

**वलि–नितनिभ्यां वः ॥३१७॥**

वलि संवरणे, निपूर्वाच्च, तनूयी विस्तारे

इत्याभ्यां बः प्रत्ययो भवति । वल्बः—वृक्षः । नितम्बः-श्रोणिः, पर्वतैकदेशः, नटश्च ॥३१७॥

## शम्यमेर्णिद्वा ॥३१८॥

आभ्यां बः प्रत्ययो भवति, स च णिद्वा भवति । शमूच् उपशमे, शम्बः—वज्रः, कर्षणविशेषः, वेणुदण्डः, तोत्रम्, अरित्रं च । शम्बशाम्बौ-जाम्बवतेयौ । अम् गतौ, अम्बा—माता । आम्बः—अपह्नवः ॥३१८॥

## शल्यलेरुच्चातः ॥३१९॥

आभ्यां बः प्रत्ययो भवत्यकारस्य चोकारो भवति । पल-फल-शल गतौ, शुल्बं—ताम्रम् । अली भूषणादौ, उल्बं—रजतम्, गर्भवेष्टनम् । शुल्बं—बभ्रुः, तरक्षुश्च ॥३१९॥

## तुम्ब-स्तम्बादयः ॥३२०॥

तुम्बादयः शब्दा बप्रत्ययान्ता निपात्यन्ते । ताम्यतेरत उत्वं च । तुम्बम्—अलाबु, चक्राङ्गं च । स्तम्भेर्लुक् च । स्तम्बः—तृणं, विटपः, संघातः, अङ्कुरसमुदायः, स्तबकः, पुष्पापीडश्च । आदिग्रहणात् कुशाम्बादयो भवन्ति ॥३२०॥

## कृ-कडि-कटि-वटेरम्बः ॥३२१॥

एभ्यः अम्बः प्रत्ययो भवति । डुकृंग् करणे, करम्बः—दध्योदनः, दधिसक्तवः, पुष्पं च । कडत् मदे, कडम्बः—जातिविशेषः, जनपदविशेषश्च । कटे वर्षावरणयोः, कटम्बः—पक्वान्नविशेषः, वादित्रं च । कडम्ब-कटम्बौ वृक्षौ च । वट वेष्टने, वटम्बः—शैलः, तृणपुञ्जश्च ॥३२१॥

## कदेर्णिद्वा ॥३२२॥

कद वैक्लव्ये, इति सौत्राद् अम्बः प्रत्ययो भवति, स च णिद्वा भवति । कादम्बः—हंसः । कदम्बः-वृक्षजातिः ॥३२२॥

## शिल-विलादेः कित् ॥३२३॥

शिलादिभ्यः किद् अम्बः प्रत्ययो भवति । शिलत् उञ्छे, शिलम्बः—ऋषिः, तन्तुवायश्च । विलत् वरणे, विलम्बः—वेषविशेषः, रङ्गावसरश्च । आदिग्रहणादन्येऽपि ॥३२३॥

## हिण्डि-विलेः किम्बो न्लुक् च ॥३२४॥

आभ्यां किद् इम्बः प्रत्ययो भवति, नस्य च लुग् भवति । हिडुङ् गतौ, विलत् वरणे, हिडिम्बः-विलिम्बश्च राक्षसौ ॥३२४॥

## डी-नी-बन्धि-शृधि-चलिभ्यो डिम्बः ॥३२५॥

एभ्यः डिद् इम्बः प्रत्ययो भवति । डीङ् विहायसा गतौ, डिम्बः—राजोपद्रवः । णींग् प्रापणे, निम्बः-वृक्षविशेषः । बन्धंश् बन्धने, बिम्बं—प्रतिच्छन्दः, देहश्च, बिम्बी—वल्लिजातिः । शृधूङ् शब्दकुत्सायाम् । शिम्बः—मृगजातिः । शिम्बी—निष्पाववल्ली च । चल कम्पने, चिम्बा—यवागूजातिः ॥३२५॥

## कुट्युन्दि-चुरि-तुरि-पुरि-मुरि-कुरिभ्यः कुटुम्बः ॥३२६॥

एभ्यः किद् उम्बः प्रत्ययो भवति । कुटत् कौटिल्ये, कुटुम्बं—दारादयः । उदैप् क्लेदने, उदुम्बः-समुद्रः । चुरण् स्तेये । तुरण् त्वरणे, सौत्रः, चुरुम्बः तुरुम्बश्च—गहनम् । पुरत् अग्रगमने, पुरुम्बः—आहारः । मुरत् संवेष्टने, मुरुम्बः—मृद्यमाणपाषाणचूर्णम् । कुरत् शब्दे, कुरुम्बः—अङ्कुरः । निपूर्वात् निकुरुम्बः-राशिः ॥३२६॥

## गॄ-दॄ-रमि-हनि-जन्यर्ति-दलिभ्यो भः ॥३२७॥

एभ्यो भः प्रत्ययो भवति । गॄत् निगरणे, गर्भः-जठरस्थः प्राणी । दॄश् विदारणे, दर्भः—कुशः । रमि क्रीडायाम्, रम्भा—अप्सराः, कदली च । हनंक् हिंसागत्योः, हम्भा—गोधेनुनादः । जनैचि प्रादुर्भावे,

जम्भः—दानवः, दन्तश्च, जम्भा—मुखविदारणम् । ऋंक् गतौ, अर्भः—शिशुः । दलण् विदारणे, दल्भः—ऋषिः, वल्कलं, विदारणं च ॥३२७॥

**इणः कित् ॥३२८॥**

इणक् गतौ, इत्यस्मात् किद् भः प्रत्ययो भवति । इभः—हस्ती ॥३२८॥

**कृ-शॄ-गॄ-शलि-कलि-कडि-गर्दि-रसि-रमि-वडि वल्लेरभः ॥३२९॥**

एभ्यः अभः प्रत्ययो भवति । कॄत् विक्षेपे, करभः—त्रिवर्ष उष्ट्रः । शॄश् हिंसायाम्, शरभः—श्वापदविशेषः । गॄत् निगरणे, गरभः—उदरस्थो जन्तुः । पल—फल—शल—गतौ, शलभः—पतङ्गः । कलि शब्दसंख्यानयोः, कलभः हस्ती यौवनाभिमुखः । कडत्—मदे, कडभः—हस्तिपोतकः । गर्द शब्दे, गर्दभः—खरः । रासृङ् शब्दे, रासभः—स एव । रमिं क्रीडायाम्, रमभ.—प्रहर्षः । वडः सौत्रः, वडभी-वेश्माग्रभूमिका । ऋफिडादित्वाल्लत्वे वलभी । वल्लि सवरणे, वल्लभः- स्वामी, दयितश्च ॥३२९॥

**सनेर्डित् ॥३३०॥**

षणू भक्तौ इत्यस्मात् डिद् अभः प्रत्ययो भवति । सभा—परिषत्, शाला च ॥३३०॥

**ऋषि-वृषि-लुसिभ्यःकित् ॥३३१॥**

एभ्यः किद् अभः प्रत्ययो भवति । ऋषैत् गतौ, वृष् सेचने, ऋषभः वृषभश्च पुङ्गवः, भगवांश्चादितीर्थंकरः । ऋषभः—वायुः । लुसिः सौत्रः, लुसभ.—हिंस्रः, मत्तहस्ती, वनं च ॥३३१॥

**सि-टिकिभ्यामिभः सैर-टिट्टौ च ॥३३२॥**

आभ्यम् इभः प्रत्ययो भवति । दन्त्यादिः सैरः टिट्टश्चादेशौ यथासख्यं भवतः । षिगृट् बन्धने, सैरिभः—महिषः । टिकि गतौ, टिट्टिभः—पक्षी ॥३३२॥

**ककेरुभः ॥३३३॥**

ककि लौल्ये, इत्यस्माद् उभः प्रत्ययो भवति । ककुभः—अर्जुनः ॥ ३३३ ॥

**कुकेः कोऽन्तश्च ॥ ३३४ ॥**

कुकि आदाने, इत्यस्माद् उभः प्रत्ययो भवति, ककारश्चान्तादेशो भवति । कुक्कुभः—पक्षिविशेषः ॥ ३३४ ॥

**दमो दुण्डू च ॥ ३३५ ॥**

दमूच् उपशमे, इत्यस्माद् उभः प्रत्ययो भवत्यस्य च दन्त्यादिष्टवर्गतृतीयान्तो दण्ड इत्यादेशो भवति । दुण्डुभ.—निर्विषाहिः ॥ ३३५ ॥

**कृ-कलेरम्भः ॥ ३३६ ॥**

आभ्याम् अम्भः प्रत्ययो भवति । डुकृंग् करणे, करम्भः—दधिसक्तवः । कलि शब्दसंख्यानयोः, कलम्भः—ऋषिः ॥ ३३६ ॥

**का—कुसिभ्यां कुम्भः ॥ ३३७ ॥**

आभ्यां किद् उम्भः प्रत्ययो भवति । कै शब्दे, कुम्भः—घटः, राशिश्च । कुसच् श्लेषणे, कुसुम्भः—महारजनम् ॥ ३३७ ॥

**अर्तीरि-स्तु-सु-हु-सृ-घृ-धृ-शॄ-क्षि-यक्षि-भा-वा व्या-धा-पा-या-वलि-पदि-निभ्यो मः ॥३३८॥**

एभ्यो मः प्रत्ययो भवति । ऋंक् गतौ, अर्मः—अक्षिरोगः, ग्रामः, स्थलं च । ईरिक् गतिकम्पनयोः, ईर्मं—व्रणः । ष्टुंगक् स्तुतौ, स्तोमः—समूहः, यज्ञः, स्तोत्रं च । षुगट्—अभिषवे, सोमः—चन्द्रः, वल्ली च । हुंक् दानादनयो., होमः—आहुतिः । सृ गतौ, सर्मः-नदः, कालश्च; सर्म—स्नानं, सुखं च । घृ सेचने, घर्मः-ग्रीष्मः । धृङ्त् स्थाने, धर्म.—उत्तमक्षमादिः, न्यायश्च ।

शश् हिसायाम्, । शर्म—सुखम् । क्षित् निवासगत्योः, क्षेमं—कल्याणम् । यक्षिण् पूजायाम्, यक्ष्मः—व्याधिः । भाक् दीप्तौ, भाम —क्रोधः, भामा—स्त्री । वांकू गतिगन्धनयोः, वामः—प्रतिकूल., सव्यश्च । व्येग् सवरणे, व्याम.—वक्षोभुजायतिः । डुधांगूक् धारणे च, धाम—निलय'—तेजश्च । पां पाने, पामा—कच्छूः । याक् प्रापणे, याम.—प्रहरः । वलि संवरणे, वल्मः—ग्रन्थिः । पदिच् गतौ, पद्मं—कमलम् । णींग् प्रापणे, नेम'—अर्ध , समीपश्च ॥ ३३८ ॥

## ग्रसि—हागूभ्यां ग्राजिहौ च ॥ ३३९ ॥

आभ्यां मः प्रत्ययो भवत्यनयोश्च ग्राजिहावित्यादेशौ यथासख्यं भवतः । ग्रामः—समूहादिः । जिह्मः—कुटिल. ॥ ३३९ ॥

## विलि—भिलि—सिधीन्धि—धू—सू—श्या—ध्या—रु—सिवि—शुषि—मुषीषि—मुहि—युधि—दसिभ्यः कित् ॥ ३४० ॥

एभ्य' किद् मः प्रत्ययो भवति । विलत् वरणे, विल्म—प्रकाशः । भिलि. सौत्रः, भिल्मं—भास्वरम् । षिधू—गत्याम्, सिध्म—त्वग्रोगः । जिइन्धैपि दीप्तौ, इध्मम्—इन्धनम् । धूगृग् कम्पने, धूमः—अग्निकेतुः । षूडौच् प्राणिप्रसवे, सूमः—कालः, श्वयथु', रविश्च । सूमम्—अन्तरिक्षम् । श्यैङ् गतौ, श्यामः—वर्णः, श्याम—नभ' । श्यामा—रात्रिः, औषधिश्च । ध्यै चिन्तायाम्, ध्यामः—अव्यक्तवर्णः । रुक् शब्दे, रुमा-लवणभूमि । षिवूच् उतौ, स्यूमः—रश्मि., दीर्घसूत्रतन्तुश्च । स्यूमम्-जलम् । शुषंच् शोषणे, शुष्मं—बल, जल,सयोग'च । मुषश् स्तेये,मुष्मः—मूषिकः । ईष उञ्छे, ईष्म —वसन्त , वाण , वातश्च । मुहच् शक्तौ मुह्मः-जनपद', मुह्म —राजा । युधिच् सप्रहारे, युध्मः-शरत्कालः, शूरः, शत्रुः, सग्रामश्च । दसूच् उपक्षये, दस्मः—हीनः, वह्नियर्ज्ञश्च ॥ ३४० ॥

## क्षु—हिभ्यां वा ॥ ३४१ ॥

आभ्यां मः प्रत्ययो भवति, स च किद्वा भवति । टुक्षुक् शब्दे, क्षुमा—अतसी, क्षौमं—वस्त्रम् । हिट् गतिवृद्ध्योः, हेमं—सुवर्णम्, हिमं—तुषारः ॥३४१॥

## अवेर्हस्वश्च वा ॥ ३४२ ॥

अव रक्षणादौ, इत्यस्मात् किद् मः प्रत्ययो भवति ऊटो ह्रस्वश्च वा भवति । उमा—गौरी, अतसी, कीर्तिश्च । ऊमम्—ऊनम्, आकाशं, नगरम् ॥३४२॥

## सेरी च वा ॥ ३४३ ॥

षिग्ट् बन्धने, इत्यस्मात् किद् मः प्रत्ययो भवति, ईकारश्चान्तादेशो वा भवति । सीमो-ग्रामगोचरभूमि', क्षेत्रमर्यादा, हयश्च । सिमः-स एव, सर्वार्थश्च ॥ ३४३ ॥

## भियः षोऽन्तश्च वा ॥ ३४४ ॥

जिभीक् भये, इत्यस्मात् किद् म' प्रत्ययो भवति । षकारश्चान्तादेशो वा भवति । बिभेति अस्मादिति भीष्म.-भयानक । भीम'—स एव ॥३४४॥

## तिजि-युजेर्ग् च ॥३४५॥

अभ्या किद् स प्रत्ययो भवति, गकारश्चान्तादेशो भवति । तिजि क्षमानिशानयो', तिग्मं—तीक्ष्ण, दीप्तं, तेजश्च । युजंपी योगे, युग्मं—युगलम् ॥३४५॥

## रुक्म—ग्रीष्म—कूर्म—सूर्म—जाल्म—गुल्म—प्रोम—परि—स्तोम—सूक्ष्मादयः ॥३४६॥

एते क्मिप्रत्ययान्ता निपात्यन्ते । रोचते. क् च, रुक्मं—सुवर्ण, रूप्य च । ग्रसेर्गीप् च, ग्रीष्मः—ऋतु । कुरते—दीर्घश्च, कूर्म —कच्छप । पूत् प्रेरणे, इत्यस्माद्रोऽन्तश्च भवति । सूर्मी—लोहप्रतिमा, चुल्लिश्च ।

जल घात्ये दीर्घश्च, जाल्मः—निकृष्टः । गुपच् व्याकुलत्वे लश्च, गुल्मः—व्याधिः, तरुसमूहः, वनस्पतिः, सेनाङ्गं च, गुल्मम्—आयस्थानम् । जिघ्रतेरोत्वं च, घ्रोमः—यज्ञाङ्गलक्षणः सोमः । परिपूर्वात् स्तौतेः षत्वाभावो गुणश्च, परिस्तोमः—यज्ञविशेषः । सूचण् पैशून्ये कत्वं षोऽन्तश्च । सूक्ष्मः—निपुणः, सूक्ष्मम्—अणु । आदिग्रहणात् क्ष्मादयो भवन्ति ॥३४६॥

### सृ-पृ-प्रथि-चरि-कडि-कर्देरमः ॥३४७॥

एभ्यः अमः प्रत्ययो भवति । सृं गतौ, सरमा—देवशुनी । पृश् पालनपूरणयोः, परमः—उत्कृष्टः । प्रथिष् प्रख्याने, प्रथमः—आद्यः । चर भक्षणे, चरमः—पश्चिमः । कडत् मदे, कडमः—शालिः । ऋफिडादित्वाल्लत्वे कलमः—स एव । कर्द कुत्सिते शब्दे, कर्दमः—पङ्कः ॥३४७॥

### अवेर्धं च वा ॥३४८॥

अव रक्षणादौ, इत्यस्मादमः प्रत्ययो भवति, धश्चान्तादेशो वा भवति । अधमः, अवमश्च—हीनः ॥३४८॥

### कुट्टि-वेष्टि-पूरि-पिपि-सिचि-गण्यर्पि—वृ—महिभ्य इमः ॥३४९॥

एभ्य इमः प्रत्ययो भवति । कुट्टण् कुत्सने च, कुट्टिमं-सस्कृतभूतलम् । वेष्टि वेष्टने, वेष्टिमं-पुष्पबन्धविशेषः, भक्ष्यविशेषश्च । पूरैचि आप्यायने, पूरिमं-मालाबन्धविशेषः, भक्ष्यविशेषश्च । पिष्लृंप् सचूर्णने, पेषिमं—भक्ष्यविशेषः । षिचीत् क्षरणे, सेचिमं—मालाविशेषः । गणण् सख्याने, गणिमं—गणितम् । ऋंक् गतौ, णौ पौ, अर्पिमं बालवत्साया दुग्धम् । वृग्ट् वरणे, वरिमं—तुलोन्मेयम् । मह पूजायाम्, महिमं-पूजनीयम् ॥३४९॥

### वयिम-खचिमादयः ॥३५०॥

वयिमादयः शब्दा इमप्रत्ययान्ता निपात्यन्ते । वेंग् तन्तुसन्ताने, वयादेशश्च, वयिमं—माल्यं, कन्दुकः, तन्तुवायदण्डश्च । खनूग् अवदारणे, चश्च, खचिमं—मणिलोहविद्धं, घृतविहीनं च दधि । आदिशब्दादन्येऽपि ॥३५०॥

### उद्घटि-कुल्यलि-कुथि-कुरि-कुटि-कुडि-कुसिभ्यः कुमः ॥३५१॥

उत्पूर्वाद्घटेः कुल्यादिभ्यश्च किदुम प्रत्ययो भवति । वट वेष्टने, उद्घटुमः—परिक्षेपः । कुल बन्धुसंस्त्यानयोः, कुलुमः—उत्सवः । अली भूषणादौ, अलुमः—प्रसाधनम्, नापितः, अग्निश्च । कुथच् पूतीभावे, कुथुमः—ऋषिः, कुथुमं—मृगाजिनम् । कुरत् शब्दे, कुरुमः—कारुः, भाजनं च । कुटत् कौटिल्ये, कुटुमः- प्रेष्यः । कुडत् बाल्ये च, कुडुमा-भूमिः । कुसच् श्लेषे, कुसुमं—पुष्पम् ॥३५१॥

### कुन्दुम-लिन्दुम-कुङ्कुम-विद्रुम-पट्टुमादयः ॥३५२॥

एते कुमप्रत्ययान्ता निपात्यन्ते । कुकि आदाने स्वरान्नो दश्च, कुन्दुमः—निचयः, गन्धद्रव्य च । लींङ्च् श्लेषणे, लिन्दभावश्च, लिन्दुमः—गन्धद्रव्यम् । कुकेः स्वरान्नोन्तश्च । कुङ्कुम—घुसृणम् । विद्लृंती लाभे, रोन्तश्च, विद्रुमः—प्रवालः । पटेष्टोऽन्तश्च । पट्टुमं-नगरम् । आदिग्रहणादन्येऽपि ॥३५२॥

### कुथि-गुधेरूमः ॥३५३॥

आभ्यामूमः प्रत्ययो भवति । कुथच् पूतिभावे, कोथुमः—चरणकृदृषिः । गुधच् परिवेष्टने, गोधूमः-धान्यविशेषः ॥३५३॥

### विहा—विशा-पचि-भिद्यादेः केलिमः ॥३५४॥

विपूर्वाभ्याम् ओहांक् त्यागे, शोच् तक्षणे, इत्येताभ्यां पच्यादिभ्यश्च किद् एलिम' प्रत्ययो भवनि । विहीयते त्यज्यतेऽशुचि शरीरमस्मिन्निति विहेलिम --स्वर्गः । विश्यति तनूभवति मासि मासि कलाभिर्हीयमान इति विशेलिम --चन्द्रः, स्वर्गश्च । डुपचींष् पाके, पचति असावन्नमिति पचेलिमः- अग्नि, आदित्य', अश्वश्च । भिदृंपी विदारणे, भिदेलिमः- तस्कर' । आदिशब्दात् दृशृं प्रेक्षणे, दृशेलिमम् । अद प्साक् भक्षणे, अदेलिमम् । हनंक् हिंसागत्यो', घ्नेलिमम् । डुयाचृग् याच्ञायाम्, याचेलिमम् । पांक् रक्षणे, पेलिमम् । डुकृंग् करणे, केलिमम् इत्यादयो भवन्ति ॥३५४॥

दो डिमः ॥३५५॥

दाम् दाने, इत्यस्मात् डिम' प्रत्ययो भवति । दाडिमः दाडिमी वा--वृक्षजाति. ॥३५५॥

डिमेः कित् ॥३५६॥

डिमे' सौत्रात् कित् डित. प्रत्ययो भवति । डिण्डिम'-वाद्यविशेप. ॥३५६॥

स्था-छा-मा-सा-सू-मन्य-नि-कनि-पसि-पलि कलि-शलि-शकीर्ष्य-सहि-वन्धिभ्यो यः ॥३५७॥

एभ्यो. य प्रत्ययो भवति । ष्ठां गतिनिवृत्तौ, स्थाय.—स्थानम्. स्थाया—भूमि. । दो छोंच् छेदने, छाया—तम . प्रतिरूपम्, कान्तिश्च । मांक् माने, माया—छद्म, दिव्यानुभावदर्शन च । षोंच् अन्तकर्मणि, सायं दिनावसानम् । पूङ् प्रेरणे, सव्य.—वामः, दक्षिणश्च । मनिंच् ज्ञाने, मन्या—धमनिः । अनक् प्राणने, अन्य —पर । कनै दीप्त्यादिपु, कन्या कुमारी षस्न्ज् स्वप्ने, सस्यं —क्षेत्रस्थं गोधूमादि । पल गतौ, पल्य —कटकुसूल । कलि शब्दसंख्यानयो , कल्यः—नीरोगः । पल फल शल गतौ, सल्यमन्तर्गतं लोहादि शक्लृंट् शक्तौ—शक्यम्—असारम् । ईर्ष्यिरीर्ष्यार्थः, ईर्ष्यति ईर्ष्यणं वा ईर्ष्या—मात्सर्यम् । षहि मर्षणे, सह्यः—पश्चादर्णवपार्श्वशैलः । बन्धश् बन्धने, वन्ध्या—अप्रसूतिः ॥ ३५७ ॥

नञो हलि-पतेः ॥ ३५८ ॥

नञ्पूर्वाभ्यामाभ्या यः प्रत्ययो भवति । हल विलेखने,अहल्या—गौतमपत्नी । पत्लृं गतौ, अपत्यं—पुत्रसंतानः ॥ ३५८ ॥

सञ्जेर्ध् च ॥ ३५९ ॥

षञ्जं सङ्गे इत्यस्माद् यः प्रत्ययो भवति, धकारश्चान्तादेशो भवति । संध्या—दिननिशान्तरम् ॥३५९॥

मृशी-पसि-वस्यनिभ्यस्तादिः ॥ ३६० ॥

एभ्यस्तकारादिर्यः प्रत्ययो भवति । मृत् प्राणत्यागे, मर्त्यः—मनुष्यः । शीङ्क् स्वप्ने, शैत्यः—शकुनिः, संवत्सरः, अजगरश्च । पसि निवासे सौत्रो दन्त्यान्त., पस्त्यं—गृहम् । वसं निवासे, वस्त्यः—गुरु. । अनक् प्राणने, अन्त्यः—निरवसित', चण्डालादिश्च ॥ ३६० ॥

कृशि-जनि-पुणि-कृतिभ्यः कित् ॥३६१॥

एभ्यः किद् यः प्रत्ययो भवति । ऋशृ् गतौ स्तुतौ वा स्वगादिस्तालव्यान्तः, ऋश्यः—मृगजातिः । जनैचि प्रादुर्भावे, जन्यं—संग्रामः । जाया—पत्नी, 'ये नवा' इत्यात्वम् । पुणत् शुभे, पुण्यं—सत्कर्म । कृतैत् छेदने, कृन्ततीति कृत्या—दुर्गा ॥ ३६१ ॥

कुलेर्ड च वा ॥ ३६२ ॥

कुल वन्धुसंस्त्यानयो., इत्यस्मात् किद् यः प्रत्ययो भवति—डकारश्चान्तादेशो वा । कुड्यं—

भित्तिः। कुल्या—सारणी ॥ ३६२ ॥

**अग-पुलाभ्यां स्तम्भेर्डित् ॥३६३॥**

अग- पुल इत्येताभ्यां परस्मात् स्तम्भे. सौत्रात् डिद् यः प्रत्ययो भवति। अगस्त्यः पुलस्त्यश्च—ऋषिः ॥ ३६३ ॥

**शिक्यास्याढ्य-मध्य-विन्ध्य-धिष्ण्याघ्न्य-हर्म्य सत्य-नित्यादयः ॥ ३६४ ॥**

एते यप्रत्ययान्ता निपात्यन्ते। शोंच् तक्षणे, इकश्चान्तः, शिक्यं—लम्बमानः पिठर्याद्याधारः,-परिव्राड्-भिक्षाभाजनस्थानम्, असारं च। असूच् क्षेपणे—दीर्घत्वं च आस्यं- मुखम्। आङ्पूर्वाद् ढौकतेर्डिच्च, आढ्यः—धनवान्। मव बन्धने ध् च, मध्यं—गर्भः। विधत् विधाने, स्वरान्नोऽन्तश्च, विन्ध्यः—पर्वतः। ञिधृषाट् प्रागल्भ्ये, णोऽन्तो धिष् च, धिष्ण्यं—भवनम्, आसनं च, धिष्ण्या—उल्का। नञ्पूर्वाद्धन्तेरुपान्त्यलोपश्च। अघ्न्यः—धर्मः, गोपतिश्च, अघ्न्या गौः। हरतेर्मोऽन्तश्च, हर्म्यं—सौधम्। अस्तेः सत् च सत्यम्—अमृषा। निपूर्वाद्यमेस्तोऽन्तो धातुलुक् च। नित्यं—ध्रुवम्। आदिग्रहणाल्लह्यद्रुह्यादयो भवन्ति ॥३६४॥

**कु-गु-वलि-मलि-कणि-तन्याभ्यक्षेरयः॥३६५॥**

एभ्यः अयः प्रत्ययो भवति। कुंङ् शब्दे,कवयः-ऋषिः, पुरोडाशश्च। गुंङ् शब्दे, गवयः—गवाकृतिः पशुविशेष.। वलि संवरणे, वलयः—कटकः। मलि धारणे, मलयः—पर्वतः। कण शब्दे, कणयः—आयुधविशेषः। तनूयी विस्तारे, तनयः—पुत्रः। अर्मण् रोगे णिचि च आमयः—व्याधिः। अक्षौ व्याप्तौ च, अक्षयः—विष्णुः ॥ ३६५ ॥

**चायेः केक् च ॥ ३६६ ॥**

चायृग् पूजानिशामनयो' इत्यस्माद् अयः प्रत्ययो भवत्यस्य च केक् इत्यादेशो भवति। केकयः—क्षत्रियः ॥ ३६६ ॥

**लादिभ्यः कित् ॥ ३६७ ॥**

लादिभ्यः किद् अयः प्रत्ययो भवति। लांक् आदाने, लयः। पां पाने, पयः। ष्णांक् शौचे, स्नयः। देङ् पालने, दयः। ट्धें पाने, धयः। मेंङ् प्रतिदाने, मयः, कै शब्दे, कयः। खै खदने, खयः। श्रां पाके, श्रयः। क्षैं-जैं-सैं क्षये, क्षयः, जयः, सयः, त्रैङ् पालने, त्रयः। ओवै शोषणे वयः। इत्यादि ॥ ३६७ ॥

**कसेरलादिरिच्चास्य ॥३६८॥**

कस गतौ इत्यस्मादलादिरयः प्रत्ययो भवत्यकारस्य चेकारो भवति। किसलयं—प्रवालम् ॥३६८॥

**वृङः शषौ चान्तौ ॥ ३६९ ॥**

वृङ्श् संभक्तौ इत्यस्मात् किद् अयः प्रत्ययो भवति, शकार-षकारौ चान्तौ भवतः। वृशयं—देशनाम, आकाशम् आसनं च। वृषयः—आशयः ॥ ३६९ ॥

**गय-हृदयादयः ॥ ३७० ॥**

गय—हृदयादयः शब्दाः किदयप्रत्ययान्ता निपात्यन्ते। गमेर्डिच्च, गयः—प्राणः, गया तीर्थम्। हरतेर्दोऽन्तश्च, हृदयं मनः, स्तनमध्यम् च, आदिशब्दात् गणेरेयः गणेयं गणनीयमित्यादि ॥३७०॥

**मुचे-र्धय-घुयौ ॥ ३७१ ॥**

मुचॢंती मोक्षणे, इत्यस्माद् धितौ अय उय इति प्रत्ययौ कितौ भवतः। मुक्रयः—मुकुयश्च—अश्वतरादश्वायां जातः। धित्करण कत्वार्थम् ॥ ३७१ ॥

**कुलि-लुलि-कलि-कपिभ्यः कायः ॥३७२॥**

एभ्यः किद् आयः प्रत्ययो भवति। कुल

वन्धुसंस्त्यानयोः, कुलायः—नीडम् । लुलिः सौत्रं, लुलायः—महिषः । कलि शब्दसंख्यानयोः, कलायः—त्रिपुटः । कष हिंसायाम्, कषायः—कल्कादि ॥३७२॥

**श्रु-दक्षि-गृहि-स्पृहि--महेराय्यः ॥ ३७३ ॥**

एभ्यः आय्यः प्रत्ययो भवति । श्रुंट् श्रवणे, श्रवाय्यः-यज्ञपशुः, ग्रहणसमर्थश्च श्रोता । दक्षि हिंसागत्योः, दक्षाय्यः—अग्निः, गृध्रः, वैनतेयः, दक्षतमश्च । गृहूणि ग्रहणे, गृहयाय्यः, वैनतेयः, गृहकर्मकुशलश्च । स्पृहण् ईप्सायाम्, स्पृहयाय्यः—स्पृहयालुः, घृतं च । स्पृहयाय्यानि—तृणानि च, अहानि च । महण् पूजायाम् । महयाय्यः—अश्वमेधः ॥ ३७३ ॥

**दधिपाय्य-दीधीपाय्यौ ॥ ३७४ ॥**

एतौ आय्यप्रत्ययान्तौ निपात्येते । दधिपूर्वात् स्यतेः षत्वं च । दधिपाय्यं—पृषदाज्यम्, मृषावादी च । दिव्यतेर्दीधीप् च दीधीपाय्यं तदेव ॥३७४ ॥

**कौतेरियः ॥ ३७५ ॥**

कुक् शब्दे इत्यस्माद् इयः प्रत्ययो भवति । कवियं खलीनम् ॥ ३७५ ॥

**कृगः कित् ॥ ३७६ ॥**

डुकृग् करणे इत्यस्मात् किद् इयः प्रत्ययो भवति । क्रियः—मेषः ॥ ३७६ ॥

**मृजेर्णालीयः ॥ ३७७ ॥**

मृजौक् शुद्धौ, इत्यस्माद् णिदालीयः प्रत्ययो भवति । मार्जालीयम्—पापशोधनम्, मार्जालीयः—अग्निः, मृजोऽस्य वृद्धिरिति वृद्धिः, णकार उत्तरार्थः ॥ ३७७ ॥

**वेतेस्तादिः ॥ ३७८ ॥**

वींक् प्रजननादौ इत्यस्मात्तकारादिर्णिद् आलीयः प्रत्ययो भवति । वैतालीयं—छन्दोजातिः ॥३७८॥

**धाग्-राजि-शॄ-रमि-याज्यर्तेरन्यः ॥३७९॥**

एभ्यः अन्यः प्रत्ययो भवति । डुधांग्क् धारणे च, धान्यं सस्यजातिः । राजृग् दीप्तौ, राजन्यः—ज्योतिः, अग्निः, क्षत्रियश्च । शॄश् हिंसायाम् । शरण्यः—त्राता । रमि क्रीडायाम्, रमण्यं—शोभनम् । यजीं देवपूजादौ, याजन्य -क्षत्रियः, यज्ञश्च । ऋंक् गतौ अरण्यं—वनम् ॥ ३७९ ॥

**हिरण्य-पर्जन्यादयः ॥ ३८० ॥**

हिरण्यादयः शब्दा अन्यप्रत्ययान्ता निपात्यन्ते । हरतेरिच्चातः । हिरण्यं—सुवर्णादि द्रव्यम् । परिपूर्वस्य पृपू सेचने इत्यस्योपसर्गान्तलोपो धातोश्च जः समस्तादेशः, गर्जतेर्वा गकारस्य पकारः । पर्जन्यः—इन्द्रः, मेघः, शङ्कुः, पुण्यं, कुशलं च कर्म । आदिग्रहणादन्येऽपि ॥ ३८० ॥

**वदि-सहिभ्यामान्यः ॥ ३८१ ॥**

आभ्याम् आन्यः प्रत्ययो भवति । वद वक्तायां वाचि, वदान्यः—दाता, गुणवान् चारुभाषी वा । षहि मर्षणे, सहान्यः—शैलः ॥ ३८१ ॥

**वृङ एण्यः ॥ ३८२ ॥**

वृङ्श् सभक्तौ, इत्यस्माद् एण्यः प्रत्ययो भवति । वरेण्यः—परंब्रह्म, धाम, श्रेष्ठः, प्रजापतिः, अन्नं च ॥ ३८२ ॥

**मदेः स्यः ॥ ३८३ ॥**

मदैच् हर्षे, इत्यस्मात् स्यः प्रत्ययो भवति । मत्स्यः—मीनः, धूर्तश्च ॥ ३८३ ॥

**रुचि भुजिभ्यां किष्यः ॥ ३८४ ॥**

रुचि—भुजिभ्या किद् इष्यः प्रत्ययो भवति । रुचि अभिप्रीत्यां च, रुचिष्यः—वल्लभः, सुवर्णं च । भुजंप् पालनाभ्यवहारयोः, भुजिष्यः—आचार्यः,

भोक्ता, अन्नं, मृदु, ओदनः—दासश्च, भुजिष्यं—धनम् ॥ ३८४ ॥

**वच्यर्थिभ्यामुष्यः ॥ ३८५ ॥**

आभ्याम् उष्यः प्रत्ययो भवति । वचंक् भाषणे, वतुष्यः—वक्ता । अर्थणि उपयाचने, अर्थुष्यः अर्थी ॥ ३८५ ॥

**वचोऽथ्य उत् च ॥ ३८६ ॥**

वचक् भाषणे, इत्यस्मादथ्यः प्रत्ययो भवत्यस्य च उद् इत्यादेशो भवति । उतथ्यः—ऋषिः ॥३८६॥

**भी-वृधि-रुधि-वज्य-गि-रमि- वमि-वपि-ज-पि-शकि-स्फायि-वन्दीन्दि-पदि-मदि-मन्दि-चन्दि-दसि-वसि-नसि-हस्यसि-वासि-दहि-सहिभ्यो रः ॥३८७॥**

एभ्यः रः प्रत्ययो भवति । ञिभींक् भये, भेरः—भेदः, करभः, शरः, मण्डूकः, दुन्दुभिः, कातरश्च । ऋफिडादित्वाद् लत्वे, भेलः—चिकित्सा-ग्रन्थकारः, शरः, मण्डूकः, प्रहीणः अप्राज्ञश्च । वृधूङ् वृद्धौ, वर्ध्रः—चर्मविकारः, चन्द्रः, मेघश्च । रुधूंपी आवरणे, रौध्रः—वृक्षविशेषः । वज गतौ, वज्र—कुलिशम्, रत्नविशेषश्च । अग कुटिलायां गतौ, अग्रः-प्राग्भागः, श्रेष्ठश्च । रमि क्रीडायाम्, रम्रः-कामुकः । टुवमू उद्गिरणे, वम्रः—धर्मविशेषः, धूमश्च, वम्री-उपदेहिका । डुवपीं बीजसंताने, वप्रः—केदारः, प्राकारः, वास्तुभूमिश्च । जप मानसे च, जप्रः—ब्राह्मणः, मण्डूकश्च । शक्लृट् शक्तौ, शक्रः—इन्द्रः । स्फायैङ् वृद्धौ, स्फारम्—उल्बणं, प्रभूतं च । वदुङ् स्तुत्य-भिवादनयोः, वन्द्रः—वन्दी, केतुः, कामश्च, वन्द्रं—समूहः । इदु परमैश्वर्ये, इन्द्रः—शक्रः । पदिंच् गतौ, पद्रः—ग्रामादिनिवेशः, शून्यं च । मदैच् हर्षे, मद्राः-जनपदः, क्षत्रियश्च, मद्रं—सुखम् । मदुङ् स्तुत्यभि-वादनयोः, मन्द्रः—मधुरः स्वरः, मन्द्रं—गभीरम् । चदु दीप्त्याह्लादनयोः, चन्द्रः—शशी, सुवर्णं च । दसूच् उपक्षये, दस्रः—शिशिरम्, चन्द्रमाः, अश्विनो-र्ज्येष्ठश्च, दस्रौ-अश्विनौ । घस्लृं अदने, घस्रः—दिवसः । णसि कौटिल्ये, नस्रः—नासिकापुटः, ऋषिश्च । हसे हसने, हस्रः—दिनं, घातुकः, हर्षुलश्च, हस्रं—बलाधानं संनिपातश्च, सहस्रं—दश शतानि । असूच् क्षेपणे, अस्रम्—अश्रु । वासिच् शब्दे, वास्रः—पुरुषः, शब्दः संघातः, शरभः, रासभः पक्षी च, वास्रा—धेनुः । दहं भस्मीकरणे, दह्रः—अग्निः, शिशुः, सूर्यश्च । षहि मर्षणे, सह्रः—शैलः ॥३८७॥

**ऋज्यजि-तञ्चि-वञ्चि-रिपि-सृपि-तृपि-दृपि-चुपि-क्षिपि-क्षुपि-क्षुदि-मुदि-रुदि-छिदि-भिदि-खिद्युन्दि-दम्भि-शुभ्युम्भि-दंशि-चि-सि-वहि-विसि-वसि-शुचि-सिधि-गृधि-वीन्धि-श्विति- वृति-नी-शी-सु-सूभ्यः कित् ॥३८८॥**

एभ्यः किद् रः प्रत्ययो भवति । ऋजि गति-स्थानार्जनोपार्जनेषु, ऋज्रः—नायकः, इन्द्रः, अर्थश्च । अज क्षेपणे च, अज्रः—वीरः, विक्रान्तः । तञ्चू वञ्चू गतौ, तक्रम्-उदश्वित्, वक्रः-कुटिलः, अङ्गारकः, विष्णुश्च । उभयत्र न्यङ्क्वादित्वात् कत्वम् । रिपिः सौत्रः, रिप्रं—कुत्सितम् । सृप्लृ गतौ, सृप्रः—चन्द्रः, सृप्रं—मधु, सृप्रा—नाम नदी । तृपौच् प्रीतौ, तृप्रं—मेघान्तर्धर्मः, आज्य, काष्ठं, पापं, दुःखं वा । दृपौच् हर्ष-मोहनयोः, दृप्रं—बलं, दुःखं च, दृप्रा—बुद्धिः । चुप मन्दायां गतौ, चुप्रः—वायुः । क्षिपींत्-प्रेरणे, क्षिप्र शीघ्रम् । क्षुपि सादने सौत्रः, क्षुप्र—तुहिनं, कण्टकिगुल्मकश्च । क्षुदृंपी संपेषे, क्षुद्रम्—अणु, जलगर्तश्च,

क्षुद्रा—मधुकर्यः, क्षुद्रः—हिंस्रः । मुदि हर्षे, मुद्रा—चिह्नकरणम् । रुदक् अश्रुविमोचने, रुद्रः—शम्भुः । छिदृपी द्वैधीकरणे, छिद्र—विवरम् । भिदृंपी विदारणे, भिद्रम्—अदृढम्, भिद्रः—शरः । खिदंत् परिघाते, खिद्रम्—विघ्न' । खिद्रः—विषाणम्, विषादः, चन्द्रः, दीनश्च । उन्दैप् क्लेदने, उद्रः—ऋषि', मत्स्यश्च । सपूर्वात् समुन्दन्ति—आर्द्रीभवन्ति वेलाकाले नद्योऽस्मादिति समुद्रः—सागरः । भीमादित्वादपादाने । दम्भूट् दम्भे, दभ्रः—अल्पः, चन्द्रः, कुशः, कुशलः, सूर्यश्च । शुभि दीप्तौ, शुभ्रः—अवदातः । उम्भत् पूरणे, उभ्रः-मेघः, पेलवश्च । दंशं दशने, दश्रः—दन्तः, सर्पश्च । चिंगट् चयने, चिरम्—अशीघ्रम् । पिंग्ट् बन्धने, सिरा—रुधिरस्रोतोवाहिनी नाडी । वहीं प्रापणे उह्रः—अनड्वान् । विसच् प्रेरणे, विस्रम्—आमगन्धि । वस निवासे, उस्रः—रश्मिः । बाहुलकात् षत्वं न भवति । उस्रा—गौ. । शुच शोके, शुक्रः—ग्रह', मासः, शुक्लश्च, शुक्र—रेत', लत्वे शुक्लः-वर्णः, कत्वं न्यङ्क्वादित्वात् । षिधू गत्याम्, सिध्र—साधुः, वृक्षः, मांसप्रभेदश्च । गृधूच् अभिकाङ्क्षायाम् गृध्रः—श्येनः, लुब्धकः, कङ्कश्च । जिइन्धैपि दीप्तौ, विपूर्वात्, वीध्र'—अग्नि', वायु', नभः, निर्मल, पूर्णचन्द्रमण्डलं च । श्विताङ् वरणे, श्वित्रं—श्वेतकुष्ठम् । वृतूङ् वर्तने । वृत्र—दानवः—बलवान्, रिपुश्च, वृत्रं—पापम् । णींग् प्रापणे, नीरं—जलम् । शीङ्क् स्वप्ने, शीरः—अजगरः षुग्ट् अभिषवे, सुरः—देवः, सुरा—मद्यम् । पूङौच् प्राणिप्रसवे, सूरः—आदित्य', रश्मिश्च ॥३८८॥

## इण्-धाग्भ्यां वा ॥३८९॥

आभ्यां रः प्रत्ययो भवति, स च किद्वा । इंण्क् गतौ, इरा—मदनीयपानविशेषः मेदिनी च, एरा—एडका । डुधांग्क् धारणे च, धीरः—सत्त्ववान्, धृतिमांश्च, धारा जलयष्टिः—खड्गावयवः, अश्वगतिविशेषश्च ॥३८९॥

## चुम्बि-कुम्बि-तुम्बेर्नलुक् च ॥३९०॥

एभ्यः किद् रः प्रत्ययो भवति, नकारस्य चैषां लुग् भवति । चुबु वक्त्रसयोगे, चुब्रं-वक्त्रम् चुम्ब्रः-रश्मिः । कुबु आच्छादने, कुब्रं—संकटम्, भग्नपृष्ठः, फल्गुहस्ती, चर्म, गृहाच्छादनं च । तुबु अर्दने, तुब्रं—कुटिलम् ॥३९०॥

## भन्देर्वा ॥३९१॥

भदुङ् सुख-कल्याणयो', इत्यस्माद् रः प्रत्ययो भवति, नकारस्य च लुग् वा भवति । भद्रं, भन्द्रं च कल्याणम्, सुखं च ॥३९१॥

## चि-जि-शु-सि-मि-तम्यमर्देर्दीर्घश्च ॥३९२॥

एभ्यो रः प्रत्ययो भवति दीर्घश्चैषां भवति । चिंग्ट् चयने, चीरं—जीर्ण वस्त्र, वल्कल च । जि अभिभवे जीरः—अजाजी, अग्नि', वायु., अश्वश्च, जीरम्—अलम्, लत्वे जीलः-चर्मपुटः । शु गतौ, शूरः-विक्रान्तः । षिग्ट् बन्धने, सीरं-हलम्, सीरा-हलविलेखिता लेखा । डुमिंग्ट् प्रक्षेपणे, मीरः-समुद्रः, मीरं-जलम्, मीरा-मांसपचनी, देवसीमा च । तमूच् काङ्क्षायाम्, ताम्रः-वर्णः, शुल्वं च । अम गतौ, आम्रः-वृक्षः । अर्द गतियाचनयोः, आर्द्र-सरसम् ॥३९२॥

## चकि-रमि-विकसे-रुच्चास्य ॥३९३॥

चकि-रमिभ्यां विपूर्वाच्च कसे रः प्रत्ययो भवति । अकारस्य चैषामुकारो भवति । चकि तृप्तिप्रतीघातयोः, चुक्र.—अम्लो रस', बीजपूरकमिञ्जिका, असुरः, निमन्त्रणं च । रमिं क्रीडायाम्, रुम्रः-सुन्दरः, आदित्यसारथिः, ब्राह्मणः, विनाशश्च । कस गतौ

विकुस्रः-चन्द्रः, समुद्रश्च, विकुस्रं-पुष्पितम् । बाहुलकाद् विकसेर्विकल्पः विकस्रः ॥३९३॥

## शदेरूच्च ॥३९४॥

शद्लृं शातने, इत्यस्माद् रः प्रत्ययो भवत्यकारस्य चोकारो भवति । शूद्रः—चतुर्थो वर्णः॥३९४॥

## कृतेः क्रू-कृच्छ्रौ च ॥३९५॥

कृतैत् छेदने, इत्यस्माद् रः प्रत्ययो भवत्यस्य च क्रू कृच्छ्र इत्यादेशौ भवतः । क्रूरम्—अमृदु, क्रूरः-पापकर्मा । कृच्छ्रम्—दुःखम् ॥३९५॥

## खुर-क्षुर-दूर-गौर-विप्र-कुप्र-श्वभ्राभ्र-धूम्रान्ध्र-रन्ध्रशिलीन्ध्रौड्र-पुण्ड्र-तीव्र-नीव्र-शीघ्रोग्र-तुग्र-भुग्र-निद्रा-तन्द्रा-सान्द्र-गुन्द्रा-रिङ्‌क्रादयः ॥३९६॥

एते रप्रत्ययान्ता निपात्यन्ते । खुरत् छेदने, क्षुरत् विलेखने, अनयो रलोपो गुणाभावश्च । खुरः शफः, क्षुरः—नापितभाण्डम् । ननु च खुर—क्षुरशब्दौ 'नाम्युपान्त्यप्री-कृ-गॄ-ज्ञः कः' [५.१.५४] इति केन सिध्यतः । सत्यम्, तत्र कर्त्रैवार्थ इह तु सम्प्रदानाच्चान्यत्रोणादय इत्यर्थभेदः, असर्वविषयत्वं वाऽनयोर्ज्ञाप्यते, यथा अदेः परोक्षाया वा घस्लादेशवचनेन घसेः एवमन्यत्रापि स्वयमभ्यूह्यम् । दुर्पूर्वादिणो लुक् च । दूरं विप्रकृष्टम् । गवतेर्वृद्धिश्च, गौरः—अवदातः । विपूर्वात् पातेर्लुक् च, विप्रः—ब्राह्मणः विविध प्रातीति वा विप्रः । गुप्च् व्याकुलत्वे, आदेः कत्वं च कुप्रगहनम्, गृहाच्छादनं च । ट्वोश्वि गतिवृद्ध्योः अकारः भोऽन्तश्च, श्वभ्रं-बिलम्, आकाशं च । आप्लृट् व्याप्तौ, अभादेशश्च अभ्रं मेघः । धूगृश् कम्पने, मोऽन्तश्च, धूम्रः-वर्णविशेषः । अहुङ् गतौ, धश्च अन्ध्रः-क्षत्रजातिः रधेः स्वरान्नोऽन्तश्च, रन्ध्रं--छिद्रम् । ञिइन्धैपि दीप्तौ, अस्य च ताल्व्यादिशिलश्चादिः शिलिन्ध्रम्-उद्भिद्विशेषः । ओणेः डश्च, ओड्रः—क्षत्रजातिः । पुणेः स्वरान्नोऽन्तो डश्च, पुण्ड्रः—क्षत्रजातिः, तिलकश्च पुण्डेर्वा रूपम् । तिजेर्वो दीर्घश्च, तीवतेर्वा, तीव्रः—तीक्ष्णः, उत्कृष्टश्च । नियो वोऽन्तश्च, नीवतेर्वा नीव्रं—गृहच्छदिरुपान्तः । श्यैङ ईत्वं यलोपो घश्चान्तः, शीघ्रः- त्वरितः । उवेरुषेर्वा गः किच्च, उग्रः—रुद्रः, रौद्रश्च । तुदीत् व्यथने, गः किच्च तुग्रं—शृङ्गम् । भुजंप् पालनाभ्यवहारयोः गः किच्च, भुग्रः—रश्मिसमूहः । णिदु कुत्सायाम्, किन्नलोपश्च, निद्रा—स्वापः, तमूच् काङ्क्षायाम् दोऽन्तश्च, तन्द्रा—आलस्यम् । षद्लृं विशरणगत्यवसादनेषु, अस्य स्वरान्नोऽन्तो वृद्धिश्च, सान्द्रं—घनम् । गुदेः स्वरान्नोऽन्तश्च, गुन्द्रा—जलतृणविशेषः । राजे रञ्जेर्वा किच्चेच्चोपान्त्यस्य, रिङ्‌क्रः नायकः । आदिग्रहणादन्येऽपि ॥ ३९६ ॥

## ऋच्छि-चटि-वटि-कुटि-कठि-वठि-मठ्यडि-शीकृ-शी-भृ-कदि-वदि-कन्दि-मन्दि- सुन्दि- मन्थि-मञ्जि-पञ्जि-पिञ्जि- कमि- समि- चमि-वमि-भ्रम्यमि-देवि-वासि-कास्यर्त्ति-जीवि- वर्वि-कु-शुदोररः ॥ ३९७ ॥

एभ्यः अरः प्रत्ययो भवति । ऋच्छत् इन्द्रियप्रलयमूर्तिभावयोः, ऋच्छरः—त्वरावान्, ऋच्छरा-वेश्या, कुलटा, त्वरा, अङ्गुलिश्च । चट्ण् भेदे, चटरः-तस्करः । वट वेष्टने, वटरः—मधुकण्डरा । कुटत् कौटिल्ये, कोटरं—छिद्रम् । बाहुलकाद् गुणः । कठ कृच्छ्रजीवने, कठरः—दरिद्रः । वठ स्थौल्ये, वठरः—मूर्खः, वृहद्देहश्च । मठ मदनिवासयोश्च, मठरः—ऋषिः, अज्ञानी, गोत्रम्, अलसश्च । अड उद्यमे, अडरः—वृक्षः—शीकृङ् सेचने, शीकरः—जललवसेकः । शीभृङ् कत्थने, शीभरः—हस्ति-

हस्तमुक्तो जललवसेकः । कदिः सौत्रः, कदरः—वृक्ष-विशेषः । वद स्थैर्ये, वदरी-फलवृक्षः । कदुङ् वैक्लव्ये, कन्दरः—गिरिगर्तः । मदुङ् स्तुत्यादौ, कन्दरः—शैलः । सुन्दिः सौत्रः शोभायाम्, सुन्दरः—मनोज्ञः । मन्थश् विलोडने, मन्थरः—मन्दः, खर्वश्च । मञ्जि-पञ्जी सौत्रौ, मञ्जरी—आम्रादिशाखा । गौरादित्वाद् ङीः, पञ्जरः—शुकाद्यवरोधसद्म । पिजुण्—हिंसाबलदाननिकेतनेषु, पिञ्जरः—पिशङ्गः । कमूङ् कान्तौ, कमरः—मूर्खः, कार्मुकं, कोमलः, चौरः, कान्तश्च । षम वैक्लव्ये, समरः—सङ्ग्रामः । चमू अदने, चमरः—आरण्यपशुः । टुवमू उद्गिरणे, वमरः—दुर्मेधाः । भ्रमुच् अनवस्थाने, भ्रमरः—षट्पदः । अम गतौ, अमरः—सुरः । देवृङ् देवने, देवरः—पत्यनुजः । वस निवासे, णौ वासरः—दिवसः, कामः, अग्निः, प्रावृट् च । अन्ये वाशिच् शब्दे इत्यस्मादपि तालव्यान्तादिच्छन्ति, वाशरः—अग्निः, मेघः, दिवसश्च । कासृङ् शब्दकुत्सायाम्, कासरः—महिषः । ऋक् गतौ अररः—कपाटः, बुधः, भ्रमरः, गृहं, हरण, शलाका च । जीव प्राणधारणे, जीवरः—दीर्घायुः । बर्ब गतौ, बर्बरः- म्लेच्छजातिः, बर्बरी—कुञ्चिताः केशाः । कुंङ् शब्दे, कबरः—वर्णः, कबरी-वेणिः । शुं गतौ, शबरः-म्लेच्छजातिः । शव गतौ इत्यस्येत्यन्ये । टुदुंद् उपतापे, दवरः-गुणः ॥३९७॥

## अवेर्धं च वा ॥३९८॥

अव रक्षणादौ, इत्यस्माद् अरः प्रत्ययो भवति—धकारश्चान्तादेशो वा भवति । अधरः—हीनः, उपरि-भागस्य प्रतियोगी, दन्तच्छदश्च । अवरः—परप्रतियोगी ॥३९८॥

## मृद्युन्दि-पिठि-कुरि-कुहिभ्यः कित् ॥३९९॥

एभ्य अरः प्रत्ययः किद् भवति । मृदश् क्षोदे, मृदरः—व्याधिः, अतिकायः, क्षोदश्च । उन्दैप् क्लेदने, उदरं—जठरं, व्याधिश्च । पिठ हिंसासङ्क्लेशयोः, पिठरं—भाण्डम् । कुरत् शब्दे, कुररः—जलपक्षिजातिः । कुहणि विस्मापने, कुहरं- गम्भीरगर्तः ॥३९९॥

## शाखेरिदेतौ चातः ॥४००॥

शाखृ व्याप्तौ, इत्यस्माद् अरः प्रत्ययो भवति, आकारस्य च इकार—एकारौ भवतः । शिखरम्-अग्रम्, शेखरः—आपीडः ॥४००॥

## शपेः फ् च ॥४०१॥

शपीं आक्रोशे, इत्यस्माद् अरः प्रत्ययो भवति । फकारश्चान्तादेशो भवति । शफरः—क्षुद्रमत्स्यः ॥४०१॥

## दमेर्णिद्वा दश्च डः ॥४०२॥

दमूच् उपशमे, इत्यस्माद् अरः प्रत्ययो भवति, स च णिद् वा दकारस्य च डकारो भवति । डामरः—भयानकः, डमरः स एव ॥४०२॥

## जठर-क्रकर-मकर-शंकर-कर्पर-कूर्पर-तोमर-पामर-प्रामर-प्राभ्नर-सगर-नगर-तगरोदरा-दर-शृदर-ददर-कुदर-कुकुन्दर-गोर्वराम्बर-मुखर-खर-डहर-कुञ्जरा-जगरा-दयः ॥४०३॥

एते किदरप्रत्ययान्ता निपात्यन्ते । जनेष्ठ च, जठरं—कोष्ठम् । क्रमेः क च, क्रकरः—गौरतित्तिरः । मङ्केर्नलोपश्च, मकरः—ग्राहः । शंपूर्वात् किरतेर्डिच्च, शङ्करः—रुद्रः । कृपेरुपान्त्यस्य उर्च वा, कर्परं—कपालम् । कूर्परं—कफोणी । ताम्यतेरत ओच्च, तोमरः—आयुधम् । पातेर्मोन्तश्च, पामरः—ग्रामीणः । प्रपूर्वादमतेः प्रामरः—ग्राम्यमन्दजातिः । प्रपूर्वादत्तेर्मोऽन्तश्च प्राभ्नरः—नरपशुः । सहिनश्योर्ग च, सगरः—द्वितीयश्चक्रवर्ती । नगरं—पुरम् । तङ्गेर्नलोपश्च, तगरः—वृक्ष-

विशेषः । ऊर्जः पराद् दृणातेर्डित् जलुक् च, ऊर्जा—बलेन दृणाति बिभेति । ऊर्दरः—दुर्बलः । अदु बन्धने, नलुक् च, अदरं—वक्षः, वृक्षः, सग्रामः, चञ्चुसमूहः, मातृवाहश्च । शॄश् हिंसायाम् । दॄश् विदारणे अनयोर्ह्रस्वत्वं दश्चान्तः, शृदरः—सर्पः । दृदरः—भयं, विषं च । डुकृंग् करणे, दोऽन्तश्च कृदरः—वृक्षः—सर्वकर्मप्रवृत्तो दस्युजनः, कुशूलश्च । कुपूर्वात् स्कुदुङ् आप्रवणे, सलोपश्च, कुकुन्दरं—श्रोणीकूपकः । गोपूर्वाद् वृगो डिद् रश्चादिः, गोर्वरः—करीषः । अमेर्बोऽन्तश्च, अम्बरं—वस्त्रम्, आकाशं च । मुहेः ख च, मुखरः—वाचालः । खनेर्डिच्च, खरः—रासभः । दहेरादेर्डश्च, डहरं—हृत्कमलम् । कूज अव्यक्ते शब्दे, ह्रस्वः स्वरान्नोऽन्तश्च, कुञ्जरः—हस्ती । अजेरगश्चान्तः वीभावाभावश्च । अजगरः—शयुः । आदिग्रहणात् कोठराडङ्गरशाङ्गरपाण्डरवानरादयो भवन्ति ॥४०३॥

## मुदि-गूरिभ्यां टिद्गजौ चान्तौ ॥४०४॥

आभ्यां टिद् अरः प्रत्ययो भवति गकार—जकारौ वा यथासंख्यमन्तौ भवत.। मुदि हर्षे, मुद्गरः-प्रहरणविशेषः, मुद्गरी—स्त्री । गूरैचि गतौ, गूर्जरः—सौराष्ट्रादिः, गूर्जरी स्त्री ॥४०४॥

## अग्यङ्गि-मदि-मन्दि-कडि-कसि-कासि-मृजि-कञ्जि-कलि-मलि-कचिभ्य आरः ॥४०५॥

एभ्यः आरः प्रत्ययो भवति । अग कुटिलायां गतौ, अगारं—वेश्म । अगु गतौ, अङ्गारः—निर्वातज्वाल', निर्वाणश्चोल्मुकावयवः, भूमिसुतश्च । मदैच् हर्षे, मदारः—पानशौण्डः, वराह', हस्ती, अलसश्च । मदुङ् स्तुत्यादौ, मन्दारः वृक्षविशेषः । कडत् मदे, कडारः—पिङ्गलः, विषमदशनश्च । कस गतौ, कसारः-हिंस्रः । कासृङ् शब्दकुत्सायाम्, कासारः—पल्वलम् । मृजौक् शुद्धौ, मार्जारः-बिडालः । कञ्जिः सौत्रः, कञ्जारः कुशूलजातिः, यूपः, व्यञ्जनं च । कलि शब्दसख्यानयोः, कलारः—विषमरूपः । मलि धारणे, मलारः—अलसः । मलमिवारा तोदोऽस्येति वा मलारः । कचि बन्धने, कचारः—अपनेयः, तृणवुसपांशुविकारः॥४०५॥

## त्रः कादिः ॥४०६॥

तॄ प्लवनतरणयोः, इत्यस्मात् ककारादिरारः प्रत्ययो भवति । तर्कारः—वृक्षः ॥४०६॥

## कृगो मादिश्च ॥४०७॥

करोतेर्मकारादिः ककारादिश्च आरः प्रत्ययो भवति । कर्मार'—लोहकारः । कर्कारः—वृक्षः ॥४०७॥

## तुषि-कुठिभ्यां कित् ॥४०८॥

आभ्यां किद् आरः प्रत्ययो भवति । तुषंच् तुष्टौ, तुषारः—हिमम् । कुठिः सौत्रः, कुठारः—परशुः ॥४०८॥

## कमेरत उच्च ॥४०९॥

कमूङ् कान्तौ इत्यस्माद् आरः प्रत्ययो भवत्यकारस्य चोकारो भवति । कुमारः—महासेनः, अश्वष्टः, बालश्च ॥४०९॥

## कनेः कोविद-कर्बुद-काञ्चनाश्च ॥४१०॥

कनै दीप्तौ इत्यस्माद् आरः प्रत्ययो भवति, अस्य च कोविद कर्बुद काञ्चन इत्यादेशा भवन्ति । कोविदारः, कर्बुदार', काञ्चनारश्च वृक्षविशेषाः ॥४१०॥

## द्वार-शृङ्गार-भृङ्गार-कह्लार-कान्तार-केदार-खारडादयः ॥४११॥

एते आरप्रत्ययान्ता निपात्यन्ते । उभत् पूरणे द्वादेशश्च, द्वारं—द्वाः । श्रयतेस्तालव्यादिः शृङ्गश्च, शृङ्गारः—

रसविशेषः, विदग्धता च । भृगो भृङग् च, भृङ्गारः—हस्तिमुखाकारगलन्तिका । कलेर्हश्च स्वरात् परः, कह्लार - उत्पलविशेषः । कमेस्तोऽन्तो दीर्घश्च कान्तारं—अरण्यम् । कदेः सौत्रस्यात एच्च, केदारः—वप्रः । खनेर्डिच्च, खारी—चतुर्द्रोणम् । खारडिति डकारो ड्यर्थः । आदिग्रहणात् शिशुमारादयो भवन्ति ॥४११॥

**मदि-मन्दि-चन्दि-पदि-खदि-सहि-वहि-कु-सृभ्य इरः ॥४१२॥**

एभ्य इर प्रत्ययो भवति । मदैच् हर्षे, मदिरा-सुरा । मदुङ् स्तुत्यादौ, मन्दिरं—वेश्म, नगरं च । चदु दीप्त्याह्लादनयो, चन्दिरः—चन्द्रमा, हस्ती च, चन्दिर—चन्द्रिकावत्, जलं च । पदिच् गतौ, पदिर—मार्ग । खद हिंसायाम्, खदिरः—वृक्षविशेषः । षहि मर्षणे, सहिरः—पर्वतः । वहीं प्रापणे, वहिरः—बलीवर्दः । कुक् शब्दे, कविरः—अक्षिकोणः । सृं गतौ, लत्वे सलिलम्—जलम् ॥४१२॥

**शव-शशेरिच्चातः ॥४१३॥**

आभ्याम् इर प्रत्ययो भवत्यकारस्य चेकारो भवति । शव गतौ तालव्यादि, शिविरम्-सैन्यसंनिवेशः । शश प्लुतिगतौ, शिशिर—शीतलम्, ऋतुश्च ॥४१३॥

**श्रन्थेः शिथ् च ॥४१४॥**

श्रथुङ् शैथिल्ये, इत्यस्माद् इरः प्रत्ययो भवत्यस्य च शिथ् इत्यादेशो भवति । शिथिर-श्लथम् । लत्वे—शिथिलम् ॥४१४॥

**अशेर्णित् ॥४१५॥**

अश्नातेरश्नोतेर्वा णिद् इर प्रत्ययो भवति । आशिरः विष्णु, आदित्यश्च । आशिरः बह्वाशी ॥४१५॥

**शुषीषि-बन्धि-रुधि-रुचि मुचि मुहि-मिहि-तिमि-मुदि-खिदि-च्छिदि-भिदि-स्थाभ्यः कित्॥४१६॥**

एभ्यः किदिरः प्रत्ययो भवति । शुषंच् शोषणे, शुषिरं—छिद्रम् । इषत् इच्छायाम्, इषिरं—तृणम्, इषिरः-अग्निः, आहारः—क्षिप्रः, सेव्यश्च । बन्धश् बन्धने, बधिरः—श्रुतिविकलः । रुधूंपी—आवरणे, रुधिरं-द्वितीयो धातुः । रुचि अभिप्रीत्यां च, रुचिरं—दयितं, दीप्तिमच्च । मुच्लृंती मोक्षणे, मुचिरः—धर्मः, सूर्यः, मेघश्च । मुहौच् वैचित्ये, मुहिरः - कन्दर्पः, सूर्यश्च, मुहिरं—तमः । मिहं सेचने, मिहिरः—मेघ सूर्यश्च, मिहिरं—तोयम् । तिमच् आर्द्रभावे, तिमिर-तमः, तोयं, रोगश्च कश्चित् । मुदि हर्षे, मुदिरः—मेघः, सूर्यश्च । खिदंत् परिघाते, खिदिरः—त्रासः तस्करश्च । छिदूंपी द्वैधीकरणे, छिदिरः उन्दुरः, अग्निश्च, छिदिरं—शस्त्रम् । भिदूंपी विदारणे, भिदिरः—अशनिः, भेदश्च । ष्ठा गतिनिवृत्तौ, स्थिरः—अचलः ॥४१६॥

**स्थविर-पिठिर-स्फिराजिरादयः ॥४१७॥**

एते कित् प्रत्ययान्ता निपात्यन्ते, तिष्ठतेर्वोऽन्तो ह्रस्वश्च । स्थविर —वृद्धः । पचतेरत इत्वं ठश्च पिठिरं—साधनभाण्डम्, पठेर्वा रूपम् । स्फायतेर्डिच्च, स्फिरः—स्फारो वृद्धिश्च । अजेर्वीभावाभावश्च, अजिरम्—अङ्गणम्, नगरं, देववेश्म च आदिग्रहणादन्येऽपि ॥४१७॥

**कॄ-शॄ-पॄ पूग्-मञ्जि-कुटि-कटि-पटि-कण्डि-शौण्डि-हिंसिभ्यः ईरः ॥४१८॥**

एभ्य ईरः प्रत्ययो भवति । कॄत् विक्षेपे, करीरः—वनस्पतिविशेषः, वंशाद्यङ्कुरश्च । शॄश् हिंसायाम्, शरीरं—वपुः । पॄश्—पालनपूरणयोः, परीरं—बलं, लाङ्गलमुखं च । पूग्श् पवने, पवीरं—रङ्गस्थानं, फलं, पवित्रं—बीजावपन च । मञ्जिः सौत्रः, मञ्जीरं—नूपुरः । कुटत् कौटिल्ये, कुटीरम्—आलय, कर्कटकः, चन्द्रा-

श्वयराशिश्च, कोटीरं—मुकुटः । वाहुलकाद् गुणः । कटे वर्षावरणयोः, कटीरं—जनपदः, जघनं जलं च । पट गतौ, पटीरः—कन्दर्पः, पटीरं—कार्मुकम्, स्फिक् च । कडु मदे, कण्डीरं—हरितकम् । शौण्डृ गर्वे, शौण्डीरः,—गर्वितः, सत्त्ववान्, तीक्ष्णश्च । हिंसुप् हिंसायाम्, हिंसीरः—श्वापदः, हिंस्रश्च ॥४१८॥

**घसि-वशि-पुटि-कुरि-कुलिकाभ्यः कित् ॥४१९॥**

एभ्यः किद् ईरः प्रत्ययो भवति । घस्लृं अदने, क्षीरं—दुग्धं, मेघश्च । वशक् कान्तौ, उशीरं—वीरणीमूलम् । पुटत् संश्लेषणे, पुटीरः—कूर्मः । कुरत् शब्दे, कुरीरं—मैथुनं, वेश्म च, कुरीरः—मालाविशेषः, कम्बलश्च । कुल वन्धुसंस्त्यानयोः, कुलीरः—कर्कटः । कै शब्दे, कीरः—शुकः, काश्मीरकश्च ॥४१९॥

**कशेर्मोऽन्तश्च ॥४२०॥**

कश शब्दे इत्यस्मात्तालव्यान्ताद् ईरः प्रत्ययो मश्चान्तो भवति । कश्मीरा—जनपदः ॥४२०॥

**वनि-वपिभ्यां णित् ॥४२१॥**

आभ्यां णिद् ईरः प्रत्ययो भवति । वन—भक्तौ, वानीरः—वेतसः । डुवपीं वीजसताने, वापीरः—मेघः, अमोघनिष्पत्ति क्षेत्रं च ॥४२१॥

**जम्वीराभीर-गभीर-गम्भीर-कुम्भीर-भडीर-भण्डीर-डिण्डीर-किर्मीरादयः ॥४२२॥**

एते ईरप्रत्ययान्ता निपात्यन्ते जनेर्वोऽन्तश्च, जम्वीरः—वृक्षविशेषः । आप्नोतेर्भश्च आभीरः—शूद्रजातिः । गमेर्भः स्वरान्नस्तु वा गभीरः—अगाधः, अचपलश्च । गम्भीरः स एव । स्कुम्भ. सौत्रात् सलोपश्च, कुम्भीरः—जलचरः । भडुङ् परिभाषणे, अस्य नलुक् च वा, भडीर भण्डीरश्च—योद्धृवचने । डीडो डित् द्वित्वं पूर्वस्य नोऽन्तश्च, डिण्डीरः—फेनः । किरतेर्मोऽन्तश्च, कीर्मीरः—कर्वुरः । आदिग्रहणात् तूणीर—नासीर—मन्दीर—करवीरादयो भवन्ति ॥४२२॥

**वाश्यसि-वासि-मसि-मथ्युन्दि-मन्दि—चति-चङ्-क्यङ्कि-कर्वि-चकि-वन्धिभ्य उरः ॥४२३॥**

एभ्य उरः प्रत्ययो भवति । वाशिच् शब्दे वाशुरः—शकुनिः, गर्दभश्च, वाशुरा-रात्रिः । असूच् क्षेपणे, असुरः-दानवः । वासण् उपसेवायाम् वासुरा, रात्रिः मसैच् परिमाणे, मसुरा—पण्यस्त्री, मसुरं—चर्मासनम्, धान्यविशेषश्च । मथे विलोडने, मथुरा—नगरी । उन्दैप् क्लेदने उन्दुरः—मूषिकः । मदुङ् स्तुत्यादौ, मन्दुरा—वाजिशाला । चतेग् याचने चतुरः— विदग्धः । चङ्किः सौत्रः, चङ्कति चेष्टते, चङ्कुरः—रथः, अनवस्थितश्च । अकुङ् लक्षणे, अङ्कुरः—प्ररोहः, तरुप्रतानभेदश्च । घञ्युपसर्गस्य वहुलमिति वहुलवचनाद् दीर्घत्वे अङ्कूरः । कर्व गतौ, कर्वुरः—शवलः । चकि तृप्ति-प्रतीघातयोः, चकुरः—दशनः । वन्धंश् वन्धने, वन्धुरः—मनोज्ञः, नम्रश्च ॥४२३॥

**मङ्केर्नलुक् वोच्चास्य ॥४२४॥**

मकुङ् मण्डने, इत्यस्मादुरः प्रत्ययो भवति, नकारस्य लुक् अकारस्य चोकारो वा भवति । मुकुरः—आदर्शः, मुकुलं च, मुकुरः—आदर्शः, कल्कः, वालपुष्पं च ॥४२४॥

**विधेः कित् ॥४२५॥**

विधत् विधाने, इत्यस्मात् किद् उरः प्रत्ययो भवति । विधूरं—वैशसम् ॥४२५॥

**श्वशुर-कुकुन्दुर-दर्दुर-निचुर—प्रचुर—चिकुर-कुकुर—कुक्कुर-कुर्कुर—शर्कुर-नूपुर—निष्टुर- विधुर-मद्गुर-वागुरादयः ॥४२६॥**

एते किद् उरप्रत्ययान्ता निपात्यन्ते । श्वशु-

पूर्वात् शुपूर्वाद्वा अश्नोतेरश्नातेर्वा आकारलोपश्च । श्वशुरः—जम्पत्योः पिता । कुपूर्वात् स्कुदुङ् आप्रवणे, इत्यस्मात् सलुक् च, कुकुन्दरौ—नितम्बकूपौ । दृणातेर्दोऽन्तश्च, दर्दुरः—मण्डूकः, मेघश्च । निपूर्वात् प्रपूर्वात् चिनोतेः चरतेर्वा डिच्च, निचुरः—तरुविशेषः । लत्वे निचुलः, प्रचुरं—प्राय. । चकेरिच्चास्य चिकुरं युवतीनामीषन्निमिलितमक्षि, चिकुराः—केशाः । कुकेः कोन्तो वा, कुकुरः—यादवः, कुक्कुरः—श्वा, किरः कुर् कोऽन्तश्च कुर्कुरः—शृग् हिंसायाम्, गुणः कोऽन्तश्च शर्कुरस्तरुणः । णूत् स्तवने, पोऽन्तश्च । नूपुरः—तुलाकोटिः । निपूर्वात् तिष्ठतेः निष्ठुरः—कर्कशः, निष्ठुरं काहलम् । व्यथेर्विथ् च, व्यथन्तेऽस्माज्जनाः इत्यपादानेऽपि विथुर.—राक्षस. । मदिवात्योर्गोऽन्तश्च, मद्गुरः—मत्स्यविशेष', वागुरा—मृगानायः । आदिग्रहणान्मन्यतेर्धश्च, मधुरः—रसविशेष इत्यादि ।४२६।

**मीमसि-पशि-खटि-खडि-खर्जि-कर्जि-सर्जि कृपि-वल्लि-मण्डिभ्य ऊरः ॥४२७॥**

एभ्य ऊरः प्रत्ययो भवति । मींङ्च् हिंसायाम्, मयूरः—शिखी । मह्यां रौति मयूर इति पृषोदरादिपु सञ्ज्ञाशब्दानामनेकधा व्युत्पत्ति लक्षयति । मसैच् परिमाणे, मसूरः—अवरधान्यजाति., चर्मासनं च । पशिः सौत्रः, पश्यते गम्यते इति पशूरः—ग्रामः । खट काङ्क्षे, खट्टरः—मणिविशेष' । खडण् भेदे, खड्डरः—खुरलीस्थानम् । खर्ज मार्जने च, खर्जूरः—वृक्षविशेष । कर्ज व्यथने, कर्जूरः—स एव, मलिनश्च । सर्ज अर्जने, सर्जूरः—अहः । कृपौङ् सामर्थ्ये, कर्पूर'—गन्धद्रव्यम् । वल्लि सवरणे, वल्लूरः—शुष्क—मांसम् । मडु भूषायाम्, मण्डूर -धातुविशेष ॥४२७॥

**महि-कणि-चण्यणि-पल्यलि-तलि-मलि शलिभ्यो णित् ॥४२८॥**

एभ्यो णिद् ऊरः प्रत्ययो भवति । मह पूजायाम्, माहूरः—शैलः । कण गतौ काणूरः—नागः । चण हिंसादानयोश्च, चाणूरः—मल्लो विष्णुहतः । अण शब्दे, आणूरः—ग्रामः । पल गतौ, पाल्लूरं नाम नगरमान्ध्रराज्ये । अली भूषणादौ, आलूरः—विटः । तलण् प्रतिष्ठायाम्, तालूरः—जलावर्तः । मलि धारणे, मालूरः —दानवः विल्वश्चा शल गतौ, शालूरः-दुर्दुरः ॥४२८॥

**स्था-विडेः कित् ॥४२९॥**

आभ्यां किद् ऊरः प्रत्ययो भवति । ष्ठां गतिनिवृत्तौ । स्थूरः—बठर., उच्चश्च, स्थूरा--जङ्घाप्रदेशः विड आक्रोशे, विडूरः- बालवाये ग्राम. ॥४२९॥

**सिन्दूर-कच्चूर-पत्तूर-धुत्तूरादयः ॥४३०॥**

एते ऊरप्रत्ययान्ता निपात्यन्ते । स्यन्देः सिन्द् च, सिन्दूरं--चीनपिष्टम् । करोतेश्चोऽन्तश्च, कर्चूर'-औषधविशेप. । पतेस्तोऽन्तश्च, पत्तूरं--गन्धद्रव्यम् । धुवो द्विरुक्तस्तोऽन्तो ह्रस्वश्च, धुत्तूरः--उन्मत्तकः, दधातेर्धत्तूर इत्यन्ये । आदिग्रहणात् कस्तूरहारहूरादयो भवन्ति ॥४३०॥

**कु-गु-पति-कथि-कुथि- कठि-कुठि—कुटि—गडि—गुडि—मुदि-मूलि—दंशिभ्यः केरः ॥४३१॥**

एभ्यः किद् एरः प्रत्ययो भवति । कुङ् शब्दे, कुबेरः--धनदः गुंत पुरीषोत्सर्गे, गुबेरं--युद्धम् । पतॢ गतौ, पतेरः--पक्षी, पवनश्च । कथण् वाक्यप्रबन्धे, कथेरः--कथकः, कुहकः, शकुन्तश्च । कुथच् पूतिभावे, कुथेर --शिडाकीसभारः । कठ कृच्छ्रजीवने कठेर'--दरिद्र. । कुठिः सौत्रः, कुठेरः--नि.सृतसारः, अर्जकश्च । कुटत् कौटिल्ये, कुटेरः-- शठः । गड सेचने, गडेर.-- मेघ प्रस्रवणशीलश्च । गुडत् रक्षायाम्, गुडेरः--राजा, पण्य च बालभक्ष्यम् । मुदि

हर्षे, मुदेरः–मूर्खः। मूल प्रतिष्ठायाम्, मूलेरः--वनस्पतिः, मूलेरं--पण्यम्। दंशं दशने, दशेरः--सर्पः, सारमेयः, जनपदश्च ॥४३१॥

**शतेरादयः ॥४३२॥**

शतेर इत्यादयः शब्दाः केरप्रत्ययान्ता निपात्यन्ते। शद्लृ शातने तश्च, शतेरः--वायुः, तुषारश्च। आदिग्रहणाद् गुधेर-शृङवेर-नालिकेरादयो भवन्ति ॥४३२॥

**कठि-चकि-सहिभ्य ओरः ॥४३३॥**

एभ्य ओरः प्रत्ययो भवति। कठ--कृच्छ्रजीवने; कठोरः–अमृदुः, चिरंतनश्च। चकि तृप्तौ च, चकोरः--पक्षिविशेषः पर्वतविशेषश्च। षहि मर्षणे, सहोरः--विष्णुः, पर्वतश्च ॥४३३॥

**कोर-चोर-मोर-किशोर-घोर-होरा-दोरादयः ॥४३४॥**

कोर इत्यादयः शब्दा ओरप्रत्ययान्ता निपात्यन्ते। कायतेश्चरतेर्म्रियतेश्च डिच्च, कोरः–बालपुष्पम्, चोरः–तस्करः। मोरः–मयूरः। कृशेरिच्चोपान्त्यस्य, किशोरः–तरुणः, बालाश्वश्च। हन्तेर्डित् घश्च घोरं–कष्टम्। हृंग् हरणे, होरा–निमित्तवादिनां चक्ररेखा। डुदांग्क् दाने, दोच् छेदने वा, दोरः–कटिसूत्रं–तन्तुगुणश्च। आदिग्रहणादन्येऽपि ॥४३४॥

**कि-शृ-वृभ्यः करः ॥४३५॥**

एभ्यः करः प्रत्ययो भवति। किः सौत्रः, केकरः–वक्रदृष्टिः। शृश् हिंसायम्, शर्करा–मत्स्यण्डिकादिः, कर्करशः, क्षुद्रापाषाणावयवश्च। वृग्द् वरणे, वर्करः–छागशिशुः ॥४३५॥

**सू-पुषिभ्यां कित् ॥४३६॥**

आभ्यां कित् करः प्रत्ययो भवति। षूत् प्रेरणे, सूकरः–वराहः। पुष् पुष्टौ, पुष्करं, पद्मं, तूर्यमूखं, हस्तिहस्ताग्रम्, आकाशं, मुरजः–तीर्थनाम च ॥४३६॥

**अनि-काभ्यां तरः ॥४३७॥**

आभ्या कित् तरः प्रत्ययो भवति। अनक् प्राणने, अन्तरं–बहिर्योगोपसंव्यानयोः, छिद्रमध्यविरहविशेषेपु च। कै शब्दे, कातरः–भीरुः ॥४३७॥

**इण्-पूभ्यां कित् ॥४३८॥**

आभ्यां कित् तरः प्रत्ययो भवति। इण्क् गतौ, इतरः–निर्दिष्टप्रतियोगी। पूग्श् पवने, पूतरः–जलतन्तुः ॥४३८॥

**मी-ज्यजि-मा-मद्य-शौ-वसि किभ्यः सरः ॥४३९॥**

एभ्यः सरः प्रत्ययो भवति। मीङ्च् हिसायाम्, मेसरः–वर्णविशेषः। जि अभिभवे, जेसरः–शूरः। अज क्षेपणे च, वेसरः–अश्वतरः। वेसृ गतौ, इत्यस्य वा जठरेत्यादिनिपातनादरे रूपम्। मांक् माने, मासरः–आयामः। मदैच् हर्षे, मत्सरः--क्रोधविशेषः। अशौटि व्याप्तौ, अक्षरं--वर्णः, मोक्षपदम्, आकाशं च। अक्षेर्वा अरे रूपम्। वस निवासे, वत्सरः, संवत्सरः, परिवत्सरः, अनुवत्सरः, विवत्सरः, उद्वत्सरः--वर्षाभिधानानि। इडामानेन वसन्त्यत्र कालावयवा इति इद्वत्सरः, इडया मानेन वसन्त्यत्रेति इडावत्सरः--वर्षविशेषाभिधाने। परिवत्सरादीन्यपिवर्षविशेषाभिधानानीत्येके। कि इत्यदादौ स्मरन्ति, केसरः-सिंहसटः, पुष्पावयवः, वकुलश्च। वाहुलकान्न षत्वम् ॥४३९॥

**कृ-धू-तन्यृषिभ्यः कित् ॥४४०॥**

एभ्यः कित् सरः प्रत्ययो भवति। डुकृंग् करणे, कृसरः कृसरा वा विलेपकाविशेषः वर्णविशेषश्च। धूत्

विधूनने, धूसरः—भिन्नवर्णः, वायुः, धान्यविशेषश्च । तनूयी विस्तारे, तसरः—कौशेयसूत्रम् । ऋषैत् गतौ, ऋक्षरः—कण्टकः, ऋत्विक् च, ऋक्षरा—तोयधारा ॥४४०॥

### कृ-गृ-शृ-दृ वृग्-चति-खटि-निषदिभ्यो वरट् ॥४४१॥

एभ्यष्टिद्वरः प्रत्ययो भवति । कृत् विक्षेपे, कर्बरः-व्याघ्रः, विष्किरः, अञ्जलिश्च, कर्बरी—भूमिः, शिवा च । गृत् निगरणे, गर्वरः—अहंकारः, महिषश्च, गर्वरी—महिषी, सध्या च । शृश् हिसायाम्, शर्वरः—सायाह्नः —रुद्र', हिस्रश्च, शर्वरं—तमः, अन्नं च, शर्वरी—रात्रिः । दृश् विदारणे, दर्वरं—वज्रम्, दर्वरी—सेवा । वृग्ट् वरणे, वर्वरः—कामः, चन्दनं, देशविशेषः—लुब्धकश्च, वर्वरी—नदी, भार्या च । चतेग् याचने, चत्वरं—चतुष्पथम् अरण्यं च । चत्वरी—रथ्या, देवता, वेदिश्च । खट काङ्क्षे, खट्वरं—रससकीर्णशाकपाकः । कटे वर्षावरणयोः, कट्वरः—व्यालाश्वः, कट्वरी—दधिविकारः । षद्लं विशरणादौ, निपूर्व', निषद्वरः—कर्दमः-वह्निः, कर्मकरः, कन्दर्पः, इन्द्रश्च । निषद्वरम्—आसनम्,—निषद्वरी—प्रपा, रात्रि, प्रमदा इन्द्राणी च ॥४४१॥

### अश्नोतेरीच्चादेः ॥४४२॥

अशौटि व्याप्तौ, इत्यस्माद्वरट् प्रत्ययो भवति, ईकारश्चादेर्भवति । ईश्वर.—विभु', ईश्वरी-स्त्री ॥४४२॥

### नी-मी-कु-तु-चेर्दीर्घश्च ॥४४३॥

एभ्यो वरट् प्रत्ययो दीर्घश्चैषां भवति । णींग् प्रापणे, नीवर'—पुरुषकार' । मींग्श् हिंसायाम्, मीवर —हिंस्र', समुद्रश्च । कुङ् शब्दे, कूवर'—रथावयव. । तुंक् वृत्यादिषु, तूवर'—मन्दश्मश्रुः, अजननीकश्च । चिंगृट् चयने, चीवरं—मुनिजनवासः, निःसारकन्था च ॥४४३॥

### तीवर-धीवर-पीवर-छित्वर-छत्वर-गह्वरोपह्वर-संयद्वरोदुम्बरादयः ॥४४४॥

एते वरट् प्रत्ययान्ता निपात्यन्ते । तिम्यतेस्ती च तीवतेर्वा, तीवरं जलं, व्यञ्जनं च । ध्यायतेर्धी च । धीवरः, कैवर्तः, प्यायः प्यैङो वा पी च, पीवतेर्वा किदरः, पीवरः—मांसलः । छिनत्तेस्तः—किच्च, छित्वरः —शठः, जर्जरः, पिटकश्च छादेर्णिलुकि ह्रस्वश्च, छत्वरः, निर्भर्त्सक', निकुञ्जश्च । छत्वरं—कुड्यहीनं गृहम्, शयनप्रच्छदः, छदिश्च । गुहेरच्चोतः गह्वरं—गहनं, महाबिलं, भयानकं, प्रत्यन्तदेशश्च । उपपूर्वात् ह्वो वादेर्लुक् च, उपह्वरं—सधिः, समीपं, रहःस्थानं च । सम्पूर्वाद्यमेर्दश्च, सयद्वरः—रणः, संयमी, नृपश्च । उन्देः क्दिुम् चान्त., उदुम्बरः—वृक्षविशेषः । आदिग्रहणाद् उम्बर-शम्बरादयो भवन्ति ॥४४४॥

### कडेरेवराङ्गरौ ॥४४५॥

कडत् मदे, इत्यस्माद् एवर अङ्गर इति प्रत्ययौ भवतः । कडेवरं—मृतशरीरम् , लत्वे कलेवरम् । कडङ्गरः—वनस्पतिः ॥४४५॥

### त्रट् ॥४४६॥

सर्वधातुभ्यस्त्रट् प्रत्ययो भवति । छादयतीति छत्रम् छत्री वा घर्मवारणम् । पातीति पात्रम् ऊर्जितगुणाधारः साध्वादिः । पात्री—भाजनम् । स्नायतेः—स्नात्रं—स्नानम् । राजते इति—राष्ट्रं—देशः । शिष्यतेऽनेन—शास्त्रं—ग्रन्थ. । असूच् क्षेपणे, अस्त्रं—धनुः ॥४४६ ।

### जि-भृ-सृ- भ्रस्जि-गमि-नमि-नश्यशि-हनि-विषेर्वृद्धिश्च ॥४४७॥

एभ्यस्त्रट् प्रत्ययो भवति, वृद्धिश्चैषां भवति । जिं अभिभवे, जैत्रः—जयनशीलः, जैत्र-घूतम् । टुडुभृंग्क् पोषणे च, भात्रं—पोषः, यश्च भृतिं गृहीत्वा वहति । सृ गतौ, सात्रः— आलयः । भ्रस्जींत् पाके, भाष्ट्रम्—अम्बरीषम् । गम्लृं गतौ, गान्त्रं—मनः, शरीरं, लोकश्च । णमं प्रह्वत्वे, नात्र—शिरः, शाखा, वैचित्र्यं च । नशौच् अदर्शने नशो धुटीति नोन्तः, नांष्ट्रा--यातुधानाः । अश्नोतेरश्नातेर्वा आष्ट्रम्—आकाशः, रश्मिश्च । हनंक् हिंसागत्योः, हान्त्रं—रक्षः, युद्धं, वधश्च । विष्लृंकी व्याप्तौ, वैष्ट्रः—विष्णुः, वायुश्च । वैष्ट्रं—यकृत्, त्रिदिवं, वेश्म च ॥४४७॥

## दिवेर्द्यौ च ॥४४८॥

दीव्यतेस्त्रट् प्रत्ययो भवति, द्यौ चास्यादेशो भवति । द्यौत्र—त्रिदिवं, ज्योति , विमानं, प्रमाणं, प्रतोदश्च ॥४४८॥

## सू-मू-खन्युषिभ्यः कित् ॥४४९॥

एभ्य. कित् त्रट् प्रत्ययो भवति । षूत् प्रेरणे, सूत्रं-तन्तु', शास्त्रं च । मूङ् बन्धने, मूत्रं—प्रस्रावः । खनूग् अवदारणे, खात्रं—कूर्दालः, तडाकं, ग्रामाधानमृत्, चौरकृत च छिद्रम् । उषू दाहे, उष्ट्रः--क्रमेलकः ॥४४९॥

## स्त्री ॥४५०॥

स्यतेः सूतेः स्त्यायतेस्तृणातेर्वा त्रट् स्यात् डिच्च। स्त्री—योषित् ॥४५०॥

## हु-या-मा-श्रु-वसि-भसि-गु-वी-पचि-वचि-धृ-यम्यमि-मनि-तनि-सदि-छादि-क्षि-क्षदि-लुपि-पति-धूभ्यस्त्रः ॥४५१॥

एभ्यस्त्रः प्रत्ययो भवति हुंक् दानादनयोः, होत्रं —हवन, होत्रा—ऋचः । यांक् प्रापणे, यात्रा—प्रस्थानयापनम्, उत्सवश्च । मांक् माने, मात्रा—प्रमाणं, कालविशेषः, स्तोकः, गणना च । श्रुट् श्रवणे, श्रोत्रं—कर्णः । वसिक् आच्छादने, वस्त्र--वासः । भसिं जुहोत्यादौ स्मरन्ति, भस्त्रा चर्ममयम्—आवपनम्, उदरं च । गुंङ् शब्दे, गोत्रः—पर्वतः, गोत्रा—पृथ्वी, गोत्रम्—अन्वयः । वींक् प्रजननादौ, वेत्रं—वीरुद्विशेषः । डुपचींष् पाके, पक्त्रं—पिठरं, गार्हपत्यं च । वचंक् भाषणे, वक्त्रम्—आस्यम् , छन्दोजातिश्च । धृङत् स्थाने,धर्त्रः—धर्मः, वृक्षः, रविश्च । धर्त्रं—नभः, गृहसूत्रं च, धर्त्रा—द्यौः । यमूं उपरमे, यन्त्रं—शरीरसधानम्—अरघट्टादि च । अम गतौ, अन्त्रं--पुरीतत् । मनिच् ज्ञाने, मन्त्रः--छन्दः । तनूयी विस्तारे, तन्त्र-प्रसारितास्तन्तवः, शास्त्रं-समूहः, कुटुम्बं च । षद्लृं विशरणगत्यवसादनेषु, सत्रं—यज्ञः, सदः, दानं छद्म, यागविशेषश्च । छदण्—सवरणे, छादयतीति—छात्रः—शिक्षकः । क्षित् निवासगत्योः, क्षेत्रं—कर्षणभूमिः, भार्या, शरीरम् , आकाशं च । क्षद सवरणे सौत्रः, क्षत्रं—राजबीजम् । लृप्लृंती छेदने, लोप्त्रम्—अपहृतं द्रव्यम् । पत्लृ गतौ, पत्रं—पर्णं, यान च । धूग्श् कम्पने, धोत्रं—रज्जुः ॥४५१॥

## श्वितेर्वश्च मो वा ॥४५२॥

श्विताङ् वर्णे, इत्यस्मात् त्रः प्रत्ययो भवति, वकारस्य च मकारो वा भवति । श्मेत्रं च श्वेत्रं च—रोगौ ॥४५२॥

## गमेरा च ॥४५३॥

गम्लृ गतौ इत्यस्मात् त्रः प्रत्ययो भवति, आकारश्चान्तादेशो भवति । गात्रं—शरीरम् । गात्रा—खट्वावयवः ॥४५३॥

## चि-मि-दि-शंसिभ्यः कित् ॥४५४॥

एभ्य. कित् त्र' प्रत्ययो भवति । चिंग्ट् चयने

चित्रम्–आश्चर्यम्, आलेख्यं, वर्णश्च । ञिमिदाच् स्नेहने, मित्रं–सुहृत्, अमित्रः–शत्रुः, मित्रः–सूर्यः । शसू स्तुतौ च, शस्त्रं– स्तोत्रम्, आयुधं च ॥४५४॥

## पुत्रादयः ॥४५५॥

पुत्र इत्यादय. शब्दाः त्रप्रत्ययान्ता निपात्यन्ते । पुनाति पवते च पितृपूतिमिति पुत्र.–सुत , यदाहुः– "पूतीति नरकस्याख्या दु खं च नरक विदुः ।" पुन्नाम्नो नरकात् त्रायत इतिव्युत्पत्तिस्तु सज्ञाशब्दानामनेकधा व्याख्यानं लक्षयति । आदिग्रहणादन्येऽपि ॥४५५॥

## वृग्-नक्षि-पचि-वच्यमि-नमि वमि-वपि-वधि-यजि-पति-कडिभ्योऽत्रः ॥४५६॥

एभ्यः अत्रः प्रत्ययो भवति । वृगूट् वरणे, वरत्रा–चर्मरज्जुः । णक्ष गतौ, नक्षत्रम्–अश्विन्यादि । डुपचींप् पाके, पचत्रं–रन्धनस्थाली । वचंक्–भाषणे, वचत्रं–वचनम् । अम गतौ, अमत्रं–भाजनम् । णमं प्रह्वत्वे, नमत्रं–कर्मारोपकरणम् । टुवमू उद्गिरणे, वमत्रं-प्रक्षेप । डुवपीं बीजसताने, वपत्रं- क्षेत्रम् । वधि बन्धने, वधत्रम्–आयुधं, वस्त्र, विषं, शूरश्च । यजीं देवपूजादौ, यजत्र–यज्वा, यजत्रम्–अग्निहोत्रम् । पत्लृ गतौ, पतत्रं–बर्ह–वाहन व्योम च । कडत् मदे, कडत्रं दाराः, जघनं च ॥४५६॥

## सोर्विदः कित् ॥४५७॥

सुपूर्वाद् विदः किद् अत्र प्रत्ययो भवति । सुष्ठु वेत्ति विन्दति विद्यते वा सुविदत्रं–कुटुम्ब, धन, मङ्गलं च ॥४५७॥

## कृतेः कृन्त च ॥४५८॥

कृतैच् छेदने, इत्यस्माद् अत्रः प्रत्ययो भवति । अस्य च कृन्तादेशो भवति । कृन्तत्र.–मशकः । कृन्तत्रं-छेदन, लाङ्गलाग्र च ॥४५८॥

## वन्धि-वहि-कटयश्यादिभ्य इत्रः ॥४५९॥

एभ्यः इत्रः प्रत्ययो भवति । वन्धंग् वन्धने, वन्धित्रं–मन्थः । वहीं प्रापणे, वहित्र–वाहनं च । कटे वर्षावरणयोः, कटित्र–लेख्यचर्म । अशौटि व्याप्तौ, अशश् भोजने वा । अशित्रं–रश्मिः, हविः अग्नि, अन्नपानं च । आदिग्रहणाद् लुनातेः लवित्रम्–कर्म-द्रव्यम् , पुनाते–पवित्रं–मङ्गल्यम् । भटते भटित्रं-शूले, पक्वमांसम् । कडते कडित्रं–कटित्रमेव । अमतेः अमित्र.–रिपुः इत्यादि ॥४५९॥

## भू-गॄ-वदि-चरिभ्यो णित् ॥४६०॥

एभ्यो णिद् इत्र. प्रत्ययो भवति । भू सत्ता-याम् , भावित्रं–त्रैलोक्यं, निधानं, भद्र च । गॄत् निग-रणे, गारित्रं–नभः, अन्नपानम्, आश्चर्यं च । वद व्यक्तायां वाचि, वादित्रम्–आतोद्यम् । चर भक्षणे । चारित्रं–वृत्तं, स्थित्यभेदश्च ॥४६०॥

## तनि-तॄ-ला-पात्रादिभ्य उत्रः ॥४६१॥

एभ्य उत्र. प्रत्ययो भवति । तनूयी विस्तारे, तनुत्रं– कवचम । तॄ प्लवनतरणयो , तरुत्रं–प्लवः, घासहारी च । लांक् आदाने, लोत्रम्–अपहृतद्रव्यम् । पां पाने, पोत्रं हलसूकरयोर्मुखम् । त्रङ् पालने, त्रोत्रम्–अभयक्रिया । आदिग्रहणाद् वृणोते वरुत्रम्–अभि-प्रेतमित्यादय ॥४६१॥

## शा-मा-श्या-शक्यम्ब्यमिभ्यो लः ॥४६२॥

एभ्यो लः प्रत्ययो भवति । शोच् तक्षणे, शाला–सभा । मांक् माने, माला–स्रक् । श्यैङ् गतौ, श्यालः–पत्नीभ्राता । शक्लृट् शक्तौ, शक्ल–मनोज्ञ-दर्शन , मधुरवाक्, शक्तश्च । अम्बुङ् शब्दे, अम गतौ अम्बल, अम्लश्च–रस. ॥४६२॥

## शुक्र-शी-मूभ्यः कित् ॥४६४॥

एभ्यः किद् लः प्रत्ययो भवति। शुक्र गतौ, शुक्लः—सितो वर्णः। शीङ्क् स्वप्ने, शीलं—स्वभावः, व्रतं, धर्मः, समाधिश्च। मुङ् बन्धने, मूलम्—वृक्षपादावयवः, आदिः, हेतुश्च ॥४६३॥

## भिल्लाच्छभल्ल-सौविदल्लादयः ॥४६५॥

भिल्लादयः शब्दाः किद् लप्रत्ययान्ता निपात्यन्ते। भिदेर्लश्च भिल्लः—अन्त्यजातिः। अच्छपूर्वाद् भलेः, अच्छभल्लः ऋक्षः, सुपूर्वाद्विदेरलोऽन्तः सोश्च वृद्धिः। सौविदल्लः कञ्चुकी। आदिग्रहणादल्लपल्लीरल्लादयोऽपि भवन्ति ॥४६४॥

## मृदि-कन्दि-कुण्डि-मण्डि मङ्गि-पटि-पाटि-शकि-केवृ-देवृ-कमि-यमि-शलि-कलि पलि गु-ध्वञ्चि-चञ्चि-चपि-वहि-दिहि-कुहि-तॄ-सृ-पिशि-तुसि-कुस्यनि-द्रमेरलः ॥४६५॥

एभ्यः अलः प्रत्ययो भवति। मृदश् क्षोदे, मर्दलः—मुरजः। कदु रोदनाह्वानयोः, कन्दलः—प्ररोहः। कुडुङ् दाहे, कुण्डलं—कर्णाभरणम्। मडु भूषायाम्, मण्डलं—देशः, परिवारश्च। मगु गतौ, मङ्गल—शुभम्। पट गतौ, पटलं—छदिः, समूहः, आवपनं, नेत्ररोगश्च। ण्यन्तात् पाटलः—वर्णः। शक्लृंट् शक्तौ, शकलं—भित्तम् असारं च, केवृङ् सेवने, केवलं परिपूर्णं ज्ञानम्, असहायं च। देवृङ् देवने, देवलः—ऋषिः, देवत्रातः, क्रीडनश्च। कमूङ्—कान्तौ, कमल पद्मम्। णिङि, कामलः—नेत्ररोगः। यमू उपरमे, यमल—युग्मम्। शल गतौ, शललं—सेधाङ्गरुहशङ्कु। कलि शब्दसंख्यानयोः, कललं—गर्भप्रथमावस्था। पल गतौ, पललम्—मृष्टतिलातसीचूर्णम्। गुङ् शब्दे, गवलः महिषः। धूगश् कम्पने, धवलः—श्वेतः। अञ्चू गतौ च, अञ्चलः वस्त्रान्तः। चञ्चू गतौ, चञ्चलः—अस्थिरः। चप सान्त्वने, चपलः स एव। वहीं प्रापणे, वहल—सान्द्रम्। दिहींक् लेपे, देहली—द्वाराधः पट्टः, कुहणि विस्मापने, कोहलः—भरतपुत्रः, बाहुलकाद् गुणः। तॄ प्लवनतरणयोः, तरलः—अधीरः, हारमध्यमणिश्च। सृं गतौ, सरलः—अकुटिलः, वृक्षविशेषश्च। पिशत् अवयवे, पेशलः—मनोज्ञः। तुस शब्दे, तोसलाः जनपदः। कुसच् श्लेषे, कोशला—जनपदः। अनक् प्राणने, अनलः अग्निः। द्रम गतौ, द्रमलं—जलम् ॥४६५॥

## नहि-लङ्गेर्दीर्घश्च ॥४६६॥

आभ्याम् अलः प्रत्ययो भवत्यनयोश्च दीर्घो भवति। णहींच् बन्धने, नाहलः म्लेच्छः। लगु गतौ लाङ्गलं—हलम् ॥४६६॥

## ऋ-जनेर्गोऽन्तश्च ॥४६७॥

आभ्याम् अलः प्रत्ययो गकारश्चान्तो भवति। ऋक् गतौ, अर्गला—परिघः। जनैचि प्रादुर्भावे, जङ्गलं निर्जलो देशः ॥४६७॥

## तृपि-वपि-कुपि-कुशि-कुटि-वृपि-मुसिभ्यः कित् ॥४६८॥

एभ्यः किद् अलः प्रत्ययो भवति। तृपौच् प्रीतौ, तृपला—लता, तृपलं—शुष्कपर्णं, शुष्कतृणं च। डुवपीं बीजसताने, उपलः—पाषाणः। कुपच् कोपे, कुपलः प्रवालः। कुशच् श्लेषणे, कुशलः—मेधावी। कुशलम् आरोग्यम्। कुटत् कौटिल्ये-कुटलः—ऋषिः। वृपू सेचने, वृषल—दासजातिः। मुसच् खण्डने, मुसलम् अवहननम् ॥४६९॥

## कोर्वा ॥४६९॥

कुङ् शब्दे इत्यस्माद् अलः, स च प्रत्ययो किद्वा

भवति । कुवलं—बदरम्, कुवली—क्षुद्रबदरी, कवलः ग्रास ॥४६९॥

**शमेर्व च वा ॥४७०॥**

शमूच् उपशमे, इत्यस्माद् अल प्रत्ययो भवति मकारस्य च बकारो वा भवति । शबलः—कल्माषः, शमलं—पुरीषम्, दुरित च ॥४७०॥

**छोर्डग्गादिर्वा ॥४७१॥**

छोच् छेदने, इत्यस्मात् किद् अल. प्रत्ययो भवति । स च डगादिर्गादिर्वा भवति । छगलः—छाग, छागल —ऋषिः ! छल—वचनविघातोऽर्थविकल्पोपपत्त्या ॥४७१॥

**मृजि-खन्याहनिभ्यो डित् ॥४७२॥**

एभ्य डिद् अलः प्रत्ययो भवति । मृजौक् शुद्धौ मलं बाह्यं रज —अन्तर्दोषश्च । खनूग् अवदारणे, खल. दुर्जन', निष्पीडितरस पिण्याकादि, खल—सस्यफलग्रहणभूमि. । हनंक् हिसागत्योः, आङ्पूर्वः, आहल'—विषाणं, नखरश्च ॥४७२॥

**स्थो वा ॥४७३॥**

तिष्ठतेः अल. प्रत्ययो भवति, स च डिद्वा भवति । स्थल प्रदेशविशेषः । स्थालं—भाजनम् ॥४७३॥

**मुरलोरल-विरल-केरल-कपिञ्जल-कज्जलेज्जल-कोमल-भृमल-सिंहल-काहल-शूकल- पाकल-युगल-भगल-विदल-कुन्तलोत्पलादयः ॥४७४॥**

एते अलप्रत्ययान्ता निपात्यन्ते । मुर्व्युर्व्योर्वे-लोप' किच्च, मुरला.—जनपद. । उरलः—उत्कटः । विपूर्वाद्रमेर्डिच्च, विरल.—असहतः । किरः केर च केरला—जनपदः । कम्पेरिञ्जोऽन्तो नलोपश्च, कपिञ्जल.—गौरतित्तिरि । कषीपोर्जोऽन्तो जश्च, कज्जलं मषी इज्जलः—वृक्षविशेषः । कमेरत ओच्च कोमल—मृदु । भ्रमेर्भृम् च, भृमलः वायुः, कृमिजातिश्च, भृमलं चक्रम् । हिसेराद्यन्तविपर्ययश्च, सिंहला—जनपदः । कणेर्हो दीर्घश्च, काहलः अव्यक्तवाक्, काहला वाद्यविशेषः । शकेरूच्चास्य, शूकल -अश्वाधमः । पचे. पाक् च पाकल.—हस्तिज्वरः युजे. किद् ग च, युगलं—युग्मम् । भातेर्गोऽन्तो ह्रस्वश्च, भगल.—मुनिः । विन्देर्नलोपश्च, विदल वेणुदलम् । कनेरत उत् तोऽन्तश्च कुन्तला—जनपदः, केशाश्च । उत्पूर्वात् पिबतेर्ह्रस्वश्च, उत्पल—पद्मम् । आदिग्रहणात् सुवर्चलादयो भवन्ति ॥४७४॥

**ऋ-कृ-मृ-वृ-तनि-तमि-चषि-चपि-कपि-कीलि-पलि-वलि-पञ्चि-मङ्गि-गण्डि-चण्डि-तण्डि-पिण्डि-नन्दि.नदि-यकिभ्य आलः ॥४७५॥**

एभ्य आल प्रत्ययो भवति ऋंकृ गतौ, अरालं वक्रम् । डुकृंग् करणे, करालम् उच्चम् । मृंत् प्राण-त्यागे, मरालः—हंसः, महांश्च । वृग्ट् वरणे, वराल. वदान्यः । तनूयी विस्तारे, तनालं जलाशयः । तमूच् काङ्क्षायाम् तमाल.—वृक्षः, व्यालश्च । चषी भक्षणे, चषाल यूपशिरसि द्रव्यम् । चप सान्त्वने, चपालं—यज्ञद्रव्यम् । कपिः सौत्रः, कपाल घटाद्यवयवः-शिरोऽस्थि च । कील बन्धे, कीलालं-मद्यं, जलम्, असृक् च । पल गतौ, पलालम् अकणो व्रीह्यादिः । बल प्राणनधान्यावरोधयो. बलालो वायुः । पचुङ् व्यक्ती-करणे पञ्चाल' ऋषिः, राजा च, पञ्चालाः जनपदः मगु गतौ, मङ्गल.-देश' । गडु वदनैकदेशे, गण्डाल.-मत्तहस्ती । मडु भूषायाम् मण्डाल. ऋषि, राजा च । चडुङ् कोपे, चण्डाल.-श्वपचः ।

अकृतज्ञमकार्यज्ञं दीर्घरोषमनार्जवम् ।
चतुरो विद्धि चण्डालान् जन्मना चेति पञ्चमम्॥१॥

तडुङ् अघाते, तण्डाल'—क्षुप' । पिडुङ् सङ्घाते, पिण्डाल:—कन्दजाति: । टुनदु समृद्धौ, नन्दाल:—राजा। णद अव्यक्ते शब्दे, नन्दाल:—नादवान् । शक्रृंट् शक्तौ, शकाला—जनपद', मूर्खधनी च ॥

## कुलि-पिलि-विशि-विडि-मृणि-कुणि-पी-प्रीभ्य: कित् ॥४७६॥

एभ्य: किद् आल: प्रत्ययो भवति । कुल बन्धु-सस्त्यानयो', कुलाल:—कुम्भकार: । पिलण्—क्षेपे, पिलाल—श्लिष्टम् । विशत् प्रवेशने, 'विशालं—विस्तीर्णम् । विड आक्रोशे, विडाल:—मार्जर: । लत्वे विलाल: स एव । मृणत् हिसायाम् , मृणालं—विसम् । कुणत् शब्दोपकरणयो', कुणाल' — कृतमाल:, कटविशेषश्च, कुणाल—नगरं, कठिनं च । पीङ्च् पाने, पियाल:—वृक्ष', पियालं—शाक, वीरुच्च । प्रीङ्च् प्रीतौ, प्रियाल'—पियाल' ॥४७६॥

## भजे: कगौ च ॥४७७॥

भजीं सेवायाम् , इत्यस्मात् किद् अल' प्रत्ययो भवति, कगौ चान्तादेशौ भवत' । भकालं, भगालम् उभय—कपालम् ॥४७७॥

## सर्तेर्गोऽन्तश्च ॥४७८॥

सृं गतौ, इत्यस्मात् किद् आल प्रत्ययो भवति, गश्चान्त' । सृगाल'—क्रोष्टा ॥४७८॥

## पति-कृ-लूभ्यो-णित् ॥४७९॥

एभ्यो णिद् अल' प्रत्ययो भवति। पतॢ गतौ, पाताल रसातलम् । डुकृग् करणे, करालं लेपद्रव्यम् । लूग्श् छेदने, लावाल'-उद्दन्त' ॥४७९॥

## चात्वाल-कङ्काल-हिन्ताल-वेताल-जम्बाल-शब्दाल-ममाप्तालादय: ॥४८०॥

एते आलप्रत्ययान्ता निपात्यन्ते । चतेर्वोन्तो दीर्घश्च । चात्वाल:—यज्ञगर्त: । कचे: स्वरान्नोऽन्त: कश्च, कङ्काल:—कलेवरम् । हिसेस्तश्च हिन्ताल:—वृक्षविशेष: । वियस्तोऽन्तो गुणश्च, वेताल:—रजनीचरविशेष: । जनेर्वोऽन्तश्च, जम्बाल'—कर्दम', शैवल च । शमेर्ऋषेर्वा शब्दभावश्च, शब्दाल'—शब्दनशील' । मलेर्वलोपो माप्तश्चान्त' । ममाप्ताल: मति', स्नेह:—पुत्रादिपु स्नेहबन्धनं च । आदिशब्दाच्चक्रवालकरवालालवालादयो भवन्ति ॥४८०॥

## कल्यनि-महि-द्रमि-जटि-भटि-कुटि-चण्डि-शण्डि-तुण्डि-पिण्डि-भू-कु-किभ्य इल: ॥४८१॥

एभ्य इल' प्रत्ययो भवति । कलि शब्दसख्यानयो: , कलिलं—गहनं, पापम्, आत्माधिष्ठितं च शुक्रार्तवम् । अनक् प्राणने, अनिल:—वायु: । मह पूजायाम्, महिला—स्त्री । द्रम गतौ, द्रमला:—त्रैराज्यवासिन: । जट झट सघाते, जटिल'-जटावान् । भट-भृतौ, भटिल:-श्वा, सेवकश्च । कुटत् कौटिल्ये, कुटिलम्-वक्रम् । चडुङ् कोपे, चण्डिल:-श्वा, क्रोधन , नापितश्च । शडुङ् रुजायाम्, शण्डिल -ऋषि: । तुडुङ् तोडने, तुण्डिल:- वाग्जाली । पिडुङ् सङ्घाते, पिण्डिल:-मेघ', हिम:, हिम:, गणकश्च । भू सत्तायाम्, भविल:-मुनि:, समर्थ', गृहम्, बहुनेता कुकि च आदाने, कोकिल:-परभृत. ॥४८१॥

## भण्डेर्नलुक् च वा ॥४८२॥

भडुङ् परिभापणे. इत्यस्माद् इल. प्रत्ययो भवति, नकारस्य लुग् वा भवति । भडिल -ऋषि , पिशाच , शत्रुश्च । भण्डिल --श्वा. दूत'; ऋषिश्च ॥४८२॥

